"वसुधैव कुटुम्बकम्"

# प्रथमं विश्वसंस्कृतसम्मेलनम्

(भारतसर्वकारस्य शिक्षा एवं संस्कृति मन्त्रालयेन समायोजितम्)

मार्च २६-३१, १९७२

विज्ञान भवनम्, नवदिल्ली


प्रधान संपादकः

डा० रामकरण शर्मा, एम्० ए०, पी० एच्० डी०

निदेशकः, राष्ट्रियसंस्कृतसंस्थानम्

संपादकः

पं० संपन्नारायणाचार्यः

न्याय मीमांसा, वेदान्तविद्वान्,

सहायक निदेशकः ।


पञ्चमं संपुटम्

(पण्डित परिषदि पठितानां पत्राणां संकलनात्मकम्)




१९८२

राष्ट्रिय संस्कृत संस्थानम्

२-ए, राम्किशोर् मार्गः, दिल्ली-११००५४

# राष्ट्रिय संस्कृत संस्थान (मुख्यायल)

२ ए, रामकिशोर मार्ग दिल्ली-५४

| | | |
|---|---|---|
| १. | अंकगणितम् बीजगणितम् | २.१० |
| २. | चन्द्रगोल विमर्शः | २७.०० |
| ३. | मलयमारुतम् भाग III | ५.०० |
| ४. | ,, भाग IV | ५.०० |
| ५. | नयविवेकः | ५०.०० |
| ६. | प्रोसीडिंग्स आफ फर्स्ट इन्टरनेशनल संस्कृत कान्फेरेन्स खंड I भाग-I | २०.०० |
| ७. | ,, ,, भाग II | २०.०० |
| ८. | ,, ,, II भाग I | २०.०० |
| ९. | ,, ,, II भाग II | २०.०० |
| १०. | ,, ,, III भाग I | २०.०० |
| ११. | ,, ,, III भाग II | २०.०० |
| १२. | ,, ,, IV | २०.०० |
| १३. | ,, ,, V | २०.०० |
| १४. | संस्कृत विमर्शः खंड I भाग I | ७.५० |
| १५. | ,, खंड I भाग II | ७.५० |
| १६. | ,, खंड II भाग I | ७.५० |
| १७. | ,, खंड II भाग II | ७.५० |
| १८. | ,, खंड III भाग I, II | १५.०० |
| १९. | ,, खंड IV भाग I, II | १५.०० |
| २०. | ,, खंड V भाग I, II | १५.०० |
| २१. | ,, खंड VI ,, ,, | १५.०० |
| २२. | ,, खंड VII ,, ,, | १५.०० |
| २३. | ,, खंड VIII, IX | १५.०० |
| २४. | युमातः संस्कृतं प्रति | ३२.०० |

"वसुधैव कुटुम्बकम्"

# प्रथमं विश्वसंस्कृतसम्मेलनम्

(भारतसर्वकारस्य शिक्षा एवं संस्कृति मन्त्रालयेन समायोजितम्)

मार्च २६-३१, १९७२

विज्ञान भवनम्, नवदिल्ली

प्रधान संपादकः

डा० रामकरण शर्मा, एम्० ए०, पी० एच्० डी०

निदेशकः, राष्ट्रियसंस्कृतसंस्थानम्

संपादकः

पं० संपन्नारायणाचार्यः

न्याय मीमांसा, वेदान्तविद्वान्,

सहायक निदेशकः ।

पञ्चमं संपुटम्

(पण्डित परिषदि पठितानां पत्राणां संकलनात्मकम्)



१९८२

राष्ट्रिय संस्कृत संस्थानम्

२-ए, राम्किशोर् मार्गः, दिल्ली-११००५४

# आमुखम्

अथाय प्रस्तूयते विपश्चितां समक्षं प्रथम विश्वसंस्कृतसम्मेलनावसरे पण्डित-परिषदि पठितानां निबन्धानां सङ्कलनात्मकः पञ्चमः खण्डः। कतिपयेभ्योऽपरिहार्येभ्यः कारणेभ्यो महता विलम्बेनायं प्रकाश्यं याति खण्ड इति चेखिद्यते नश्चेतः। तथापि महानेष भगवतोऽनुग्रहः पाण्डित्य परिपूर्णा इमे प्रबन्धा अव्यक्तचरा व्यक्तीकृता भासन्त इदानीमिति।

जयन्तितमां दिवंगता अप्यमरकीर्त्तयो डा० वी० राघवन् महोदया येषामाध्यक्ष्ये विश्वसंस्कृतसम्मेलनं समायोजि दिल्लीनगरे यन्महिम्ना च वर्धमान आयामस्तत्सम्मेलनस्य प्रतिकोणं विश्वस्य समुद्गिरति "वसुधैव कुटुम्बकं" मन्यानविरलम्।

वर्धापनीयाः खलु राष्ट्रियसंस्कृतसंस्थाने सहायकनिदेशकाः पं० श्री सम्पन्नारायणाचार्या यैः कृतभूरिपरिश्रमैः खण्डोऽयं प्राकाश्यंनीतः।

आशास्महे सरसा इमे प्रस्तूयमानाः सुरभारती विलासाः समुल्लासयिष्यन्ति सुमनःसुमनसः सुमनसां वर्द्धयिष्यन्ति च जिज्ञासाः शास्त्रीया इति।

राष्ट्रिय संस्कृत संस्थानम्
दिल्ली

विदुषां वशंवदः
रामकरण शर्मा
निदेशकः

# विषय सूची

# संसारस्थमानवानां विचारेषु संस्कृतस्य प्रभावः

**श्री भवानीदत्तशर्मा 'विद्यारत्नम्' एम० ए०**

अये संस्कृत भाषाध्ययनाध्यापनपरिपूतस्वान्ताः, परिस्फुरज्ज्ञानालोकोत्सारिताबोधध्वान्ताः, परिष्कृतशेमुषीकाः, नानादिग्देशादागताः संस्कृतप्रणयिनोविनयिनो, गुणिनो विपश्चितः !

अद्याहमनिर्वचनीयमानन्दमनुभवामि सुरभारतीप्रणयिनो दूरदेशागतान् प्राच्यान् प्रतीच्यांश्च भवतो विपश्चितो वीक्ष्य । धन्यास्माकंभारती संस्कृताभिधा याऽलौकिकेन संस्कारेण, कयाचिदनुपमया विभया, नित्यावदातेन चात्मोन्नतिसाधकेन विवेकेन 'त्वमहमिति' 'तवममेति' च भेददुर्भावं व्यपगमय्य सर्वेषां हृदि शुचि सौहार्दंजनयन्ती, सर्वे कस्यचिदेकस्यैव परमपितुरपत्यभूताः, कस्मिंश्चिदेकस्मिन्नेव संस्कृतिसूत्रे निबद्धा इति बोधयन्ती, सम्प्रत्यपि सर्वान् नः एकस्मिन् मञ्चे समुपवेश्य स्वविकासप्रसारयोः सरणिमनुसन्धातुं प्रयोजयन्ती स्वकीयं महिमानं व्यनक्ति । मिथः सम्पर्कजननस्य, परस्परं सौहार्दोदयस्य, सततमेकात्मतानुभवस्य, शुभाचारप्रचारस्य, अबोधतिमिरापहारस्य, सुधास्यन्दिशब्दस्तन्यरसास्वादनस्य च साधनमियमस्माकं जननी सुरभारती, यस्याः पूतेन पयसा पुष्टाः, यज्ज्ञानरत्नसमृद्धाः, यत्परिचरणलब्धापूर्व संस्काराः वयमिह सङ्गत्य मिथो विचारविनिमयं कुर्मः । किमिदमेव संस्कृताध्ययनस्य नानल्पं फलम् ? किमितोविश्वबन्धुत्वरूपादधिकं फलं वयं कामयामहे । एष सर्वहृदयसंयोजको महिमा जननीस्वरूपायाः सुरभारत्या एव, यस्या वयं सर्वेऽपि सुतास्तत्स्तन्यपानपरिपुष्टाश्च सोदर्यतामनुभवामः ।

भाषेयं न केवलं विश्वभाषान्तर्गतपदराशीनामेव जननी परमियं नवनवभावोन्मेषेण, नूतनानधिगतज्ञानावगमनेन च नृणां चेतोरञ्जिनी तत्तत्साहित्यकोषपरिवर्धिनी च । संसारे येकेचन पावनाः विचाराः, मनोविकृतेः परिष्कारकाः, मानवानामुत्कर्षाधायका, निर्विकल्पमेकान्ततश्च सुखशान्तिप्रदायकाः श्रेयोजनकाश्च परिलक्ष्यन्ते, तेषां सर्वेषामपि, स्रोतसांगिरिरिव, पयसामर्णवइवोद्गमस्थानं संस्कृतसाहित्यमेव ।

अज्ञानतिमिरावृते जगति, भवभोगपरायणे जने, पुत्रपौत्रधनादिप्राप्तिरूपप्रेयोमार्गानुसारिणि लोके, दुष्कृतिमग्ने मानवे संस्कृतमेवाध्यात्मज्योतिरुत्पाद्य, श्रेयोमार्गानु-

सारिणश्च जनान् विधाय लोककल्याणमकरोत्, करोति करिष्यतिच । शास्त्रानुशीलनलब्धबोधोदयाः, तपश्चरणपरिपूतान्तःकरणाः, संयतात्मानः, निरुद्धेन्द्रियबाह्यप्रसराः, निगमागमपारङ्गमाः संस्कृतज्ञाः विप्राः, यतयो मुनयो महात्मानश्च भारतीयाश्चीनजापानादिदेशेषु भारतीयामाध्यात्मिकीं सँस्कृतिंप्रसार्य 'एतद्देशप्रसूतस्येति' मनुवाक्यं चरितार्थतामनयन् । अद्यापि तत्तद्देशागताः धृतपीतकाषायवसनाःभिक्षवस्तेषां महात्मनां माहात्म्यं प्रभावञ्चाविष्कुर्वन्ति ।

"न वित्तेनतर्पणीयो मनुष्य" इत्युपनिषद्वाक्यं सम्पूर्णस्यजगतः सर्वविधाऽपि समृद्धिर्नैकस्यापि जनस्य तृप्तयेऽलमिति वोधयत्, "सन्तोषादनुत्तमसुखलाभश्चेति" योगसूत्रञ्च विषयवितृष्णतामुत्पाद्य, वित्तार्जनसक्तानां तदर्थं परिहृतकृत्याकृत्यविवेकानां जनानां हृदि वैराग्यमुद्भाव्य परमतत्त्वानुसन्धित्सार्थं प्रयोजयति । तच्चपरमतत्त्वमात्मतत्त्वम्, तदधिगमस्य च शास्त्रेषुवहुविधाः सरणयो दर्शिताः । अधुनापि विपुलां समृद्धिं समासाद्यापि, महतीं भौतिकोन्नतिं विधायापि, पञ्चभूतानि विजित्यापि, देशकालयोर्व्यवहितिं व्याहृत्यापि, केचन समृद्धिमन्तो देशाः, प्रत्यहमभिनवोदयमासादयन्तोऽपि नानन्दकणमश्नुवते । रागद्वेषसंसक्तमानसाः, हिंसानलदन्दह्यमानचित्ताः, सकलभूमण्डलविजयाभिलाषोद्भ्रान्तचेतसः, क्षण विश्वविध्वंसार्थमनवरतं नवनवानुपमास्त्राविष्करणव्यसनिनो न क्षणायापि शान्तिमनुभवन्ति परं बहुधा प्रयतमाना अपि स्वाभिलाषपूर्त्तावन्तरायमाकलय्य व्यग्रचित्ता इव उद्भ्रान्तहृदया इव, विस्मितमनस इव, नष्टविवेकाः उन्मत्ता इव च शान्तिमासादयितुं दिक्षु दीनाः दृशो निक्षिप्य साहाय्यमिव याचन्ते, तेषामसहायानां श्रान्तचेतसां जनानां मित्रमिव हितकारि भूत्वासंस्कृतसाहित्यमिदं व्यासमुखेन कथयति-"ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोतिमाम् । धर्मादर्थश्च कामश्च स किमर्थंन सेव्यते" । धर्मोह्यभ्युदयनिःश्रेयसोर्हेतुरिति धर्मलक्षणप्रस्तावे काणादेननिगदितम्— "यतोऽभ्युदयनिःश्रेयससिद्धिः सधर्मः" । "वेदबोधितेष्टसाधनताकोधर्म" इति मीमांसकानां नयः । धर्मोहि न केवलं देवार्चनादिरूप एव परं मनूक्तो दशलक्षणो योगशास्त्रोक्तो यमनियमादिरूपश्च । तदेवं तनुवाङ्मनसां शोधकः आत्मतत्त्वोद्दीपको दिव्यज्योतिष आविर्भावकश्च धर्मः सच प्राधान्येनवेदस्मृतीनां विषयः । वेदोऽखिलोधर्ममूलं स्मृतिशीले च तद्विदाम्" । तदित्थं संस्कृतमेव सकल भूमण्डलवासिनो जनान् धर्म एव श्रेयसः पन्था इति शिक्षयति । क्वान्यत्र सञ्चितमलापहारकाणां विविधक्रतूनामनुष्ठानविधिविवेचनं, प्रत्यहं निष्पाद्यानां पञ्चमहायज्ञानां विधानं, वर्णाश्रमाचारव्यवस्थापनं, जन्मजन्मार्जितदुरितौघध्वंसाय गर्भाधानादारभ्य मृत्युपर्यन्तमनेकसंस्कारानुष्ठानोपदेशनम् ? इयं संस्कृतविद्यैव या सर्वमिमंकर्मकलापं विस्तरशो विविनक्ति ।

सृष्टितत्त्वप्रतिपादनमपिसंस्कृतसाहित्यस्यप्रधानो विषयः । यद्यपि परधर्मग्रन्थेष्वपि सृष्टिप्रक्रिया वर्णितापरमिह यथा मुनीनां दृष्टिभेदेनानेके सृष्टिसंबन्धिनोवादाः प्रवृत्ताः न तथा विवेचनस्य स्वातन्त्र्यमन्यत्रावलोक्यते । सृष्टितत्त्वस्याज्ञेयत्वं प्रतिपादयन्त्यप्येकाक्षक जगत्कर्तृत्वं परमात्मन एव प्रतिपादयति ।

इयं विसृष्टिर्यत आबभूव, यदिवादधेयदिवान ।
यो अस्याध्यक्षः परमेव्योमन्त्सो अङ्गवेदयदिवानवेद ।

ऋक्संहिता मं० १०

महाप्रलये तमोनिरूपत्वं सर्वतः सलिलव्याप्तात्वं च प्रतिपादयन्ती पराऋक् "सोऽकामयत बहुस्यां प्रजायेयेति" श्रुतेर्मूलभूता सर्वप्रथमं प्रजापतेर्मनसि कामस्योत्पत्तिमाचष्टे—

कामस्तदग्र समवर्तताधि मनसोरेतः प्रथमंयदासीत् ।
सतो बन्धमसति निरविन्दन् हृदि प्रतीष्या कवयोमनीषा ।

ऋ० मं० १०

सदसद्वादयोरपि चर्चाः अस्मिन्सूक्तेश्रूयते । अस्या एव ऋचो व्याख्यानभूताः विविधाः सृष्ट्युत्पत्तिप्रतिपादकाः दार्शनिकाः वादाः प्रावर्त्तन्त । न्यायशास्त्रस्य कार्य कारण वादः, काणादस्य परमाणुवादः, सांख्यस्य प्रकृतिपुरुषवादः, वेदान्तस्य पञ्चीकरणवादश्चेति सर्वेऽपिवादाः प्राचलन् । पुराणोक्ता स्मृत्युक्ता च सृष्टि प्रक्रिया "तदण्डमभवद्धैममित्यादिरूपा" हिरण्यगर्भः समवर्त्तताग्रे इति मन्त्रमूला । यद्यपि सर्गसंहारयोर्मूलं श्रुतावेवाम्नातम्, तथापि तदीयं सुस्पष्टं सविस्तरञ्च वर्णनं पुराणादृते नान्यत्रोपलभ्यते । सृष्टेरनादित्वं "धाता यथापूर्वमकल्पयदिति" श्रुतिर्बोधयति तेन प्रतिकल्पं पूर्वजन्मार्जितधर्माधर्मादिसहिता एव जनाः जन्माददते तेन नराणां प्रकृतिवैषम्यं, गुणवैषम्यं, कर्मवैषम्यं, विचारवैषम्यञ्च पूर्वकृतकर्ममूलमिति व्याख्यानं सुलभं सर्वग्राह्यञ्च । पुनर्जन्मवादस्य जन्म भारतीयदर्शनेभ्य एवाजायत ।

सृष्ट्युत्पत्तिप्रसङ्गे पुराणेषु भूगोलखगोलयोश्चतुर्दशभुवनानाञ्च विस्तरशो वर्णनमुपलभ्यते । तत्र तत्र तेषां स्वरूपं, परिमितिरवस्थितिश्च विस्तरशो वर्णिताः । श्रीमद्भागवतस्य पञ्चमे स्कन्धे सप्तद्वीपानां नववर्षाणां यमालयविष्णुपदादीनाञ्च सविस्तरं वर्णनमुपलभ्यते यदधुना नामवैषम्येण किञ्चिदद्भुतमिवाभाति परं यथा यथा विज्ञानमुन्नतिमाधत्ते यथायथावा वैज्ञानिकानामनुसन्धानमुत्कर्षमाकलयति तथा तथाऽस्मच्छास्त्रवर्णितलोकानांस्थितेः सत्यत्वमाविष्कृत भवति । सूक्ष्मदर्शिभिर्महर्षिभिर्योगशक्त्या मनसा प्रत्यक्षीक्रियमाणानां सूक्ष्मलोकानां चित्रणं विहितमिति स्थूलदृग्भिः स्थूलसाधनैस्तेषामदर्शनेऽपि तेषां स्थितिरभ्युपगन्तव्यैव । संभवति कालक्रमेण तेषां स्वरूपविपर्ययोऽधुनाजातो भवेत् । भागवतस्यैव पञ्चमे स्कन्धे सूक्ष्मा आदित्यगतयस्तत्परिणामभूताः सूक्ष्माः कालविभागाश्चवर्णिताः । किं बहुनाऽधिमासोऽप्येकस्यामृचि वर्णितः समुपलभ्यते—

वेद मासोधृतव्रतोद्वादशप्रजावतः । वेदायउपजायते ।

ऋ० मं० १ सू० २५

सम्प्रति पारस्परिकविरोधदावानलदग्धाः वैरायितमनसो मानवाः परराष्ट्रोत्कर्षममर्षयन्तः तदुज्जासनाय पातनाय च प्रयतमानाः कृत्यमकृत्यंवा न किञ्चिद्गणयन्ति,

कोटिशो जनान् निहत्यापि, स्वाधिकारक्षेत्रं परिवर्धयितुकामा पशुप्रकृतेः परिचयं ददति तेषांकृतेऽस्माकं श्रुतयः सोद्घोषं मित्रचक्षुषाजगद् वीक्षितुमुपदिशन्ति —

"दृतेदृꣳह मा मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे, मित्रस्य चक्षुषासमीक्षामहे" इदमेव सौहार्दं विश्वहिताधायकं जगदुत्कर्षसाधकञ्च । अतएव यजुष्याम्नातम् — "यस्तु सर्वाणि भूतान्यात्मैवाभूद्-विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" । एकात्मत्वदृष्टिरेव शोक-मोहादिनिवारिका भेदभावाद्यपगमेन समदर्शित्व जननी च । श्रुतेरस्मिन्युपदेशेऽङ्गीकृते को नु कं हन्यात् को नु परस्वं हरेत्, को नु कस्मादपि जुगुप्सेत । अतएव तु सकले जगति सर्वेषु च भूतेषु परमात्मनो व्याप्त्या, कस्याप्युत्पीडनं, वित्तस्त जिघृक्षावा गर्ह्येतियजुः प्रतिपादयति —

"ईशावास्यमिदꣳ सर्वंयत् किञ्च जगत्यां जगत् ।
तेनत्यक्तेन भुञ्जीथाः मागृधः कस्यस्विद्धनम् ।।
यजु० अ० ४०

जगदनित्यत्वं प्रतिपादयदपि संस्कृत साहित्यं न कर्मणो वैमुख्यं वैरस्यंवा शिक्ष-यति । श्रुतिरुपदिशति —

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँसमाः ।
एवंत्वयिनान्यथेतोऽस्ति न कर्म लिप्यतेनरे" ।।

जगदनित्यत्वज्ञानेन पुनर्जन्मनश्चाङ्गीकारेण जनः पूर्वजन्मकृतदुष्कर्मणः फल भोगाद् भीतः, दुरितविरतः साधुजीवनं साध्वाचारञ्चाकलयेदिति श्रुतयो दर्शनानि स्मृतयश्च पदे पदे "जातस्य हि ध्रुवोमृत्युध्रुवं जन्ममृतस्य च" "सर्वमुत्पादिभङ्गुरम्" "एकएव सुहृद्धर्मोनिधनेऽप्यनुयातियः । शरीरेण समंसर्वं नाशमन्यत्तुगच्छति" आयुर्नश्यति पश्यतां प्रतिदिनम् यातिक्षयं यौवनम् । लक्ष्मीस्तोयतरङ्ग भङ्गचपला विद्युच्चलं जीवित-मित्यसकृदुद्घोषयति ।

संस्कृतसाहित्यं जीवनस्य लक्ष्यं न लौकिकाभ्युदयं भौतिकोत्कर्षं वा मन्यते परं त्रिविधतापोन्मूलनं, परमानन्दप्राप्तिरूपं जन्ममरणावसायकं भवबन्धापहारकं मोक्षमेव च परमपुरुषार्थमङ्गीकरोति । सच मोक्षः केषाञ्चिन्मते दुःखाभावरूपः परेषांमते परमान-न्दप्राप्तिरूपतयाभावरूप इति तत्प्राप्तये ज्ञानभक्तिप्रभृतयोविविधाः सरणयोऽपि दर्शिताः । ज्ञानभक्त्यादीनामुदयः श्रुतेरेवाभूदित्यत्र नास्ति संशयलेशोऽपि । तथा च ज्ञानान्मुक्तिरिति प्रतिपादयति पुरुषसूक्तस्थमिदं यजुः —

वेदाहमेतं पुरुषं महान्तमादित्यवर्णतमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्थाविद्यतेऽयनाय ।।

यजुरिदं [illegible] पथो नियेयं विधत्ते परं निगमकल्पतरोर्गलितफलरूपं [illegible] अनाद्यनेहसः परिसृतप्रवाहे दुरवगाहे परःसहस्रबाधेऽगाधे चास्मिञ्जगज्जलनिधावामौलि निमज्जनां तदूर्मिभिरनवरतमुपर्यधो नीयमानानां स्वोद्धाराय च कञ्चिदनपायमुपायमजानतामत एव मोहितानां विषीदताञ्च जनानां सद्यः सन्तरणाय भक्तिरूपां सुदृढां सुवससन्तारिकां तरीमाविरकरोत् । सा च तत्तदाचार्यैर्विविधरूपतया वर्णिता, गीतयाचापि "भक्त्यामामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादिश्लोकैः प्रदर्शिता । भक्तैः सारूप्य सायुज्य-सामीप्यादिरूपाण्यभिहितानि । इदं पुनरनुभूतचरं दृष्टचरञ्च बहूनां महात्मनां यद्भक्ते-राश्रयेण परिहृतचाञ्चल्यायाः शम्पाया इव भगवदनुकम्पायाः प्रकाशः शनैः शनैरुत्तरोत्तर-मुत्कर्षेणान्तर्व्योम्नि वितायते । तदित्थमेष मार्गोऽपि संस्कृतादेव निर्गत्य भूमण्डले-व्याप्तः ।

भाषाणां तुलनात्मकाध्ययनेऽपि प्रयोजकं संस्कृतमेव । सर्वासां क्षितितलवर्त्ति-नीनां भाषाणांजननी काचिदेकैव वाक्, सर्वेऽपि चादावेकस्थल निवासिनः, ततो वियुज्य पृथक् पृथग् दिक्षु गतेषु तेषु यत्तद्देशजलवाय्वादिप्रभावेण तेषां वाग्विपर्ययोऽजनि येनानेकाः भाषा अजनिषत । सा च मूलभाषा लुप्ता तत्पदानि चानुमानगम्यानीति विपश्चितां-मतम् । परमहं वैदिक भाषाया एव तन्मूलभाषात्वाङ्गीकारे न क्षतिं मन्ये । नाहमेवकः परं केचन पाश्चात्याः कर्जन जैकोलिटमैक्समूलरप्रभृतयो विद्वांसोऽपि सर्वभाषाणां जननीं संस्कृतमेवाहुः । न केवलं जननीत्वं परं सर्वास्वपि भाषासु संस्कृतस्य प्रभावनिक्षेपमपि तेऽङ्गीकुर्वन्ति । विस्तारभयेन तेषां वचांसीह नोद्ध्रियन्ते । सर्वासु भाषासु पदसाम्यं समीक्ष्य तत्तत्पदेषु लेशतो विपर्ययं वीक्ष्य तासामेकैव प्रकृतिरिति कल्प्यते । निरुक्तकारेण यास्केन, महाभाष्यकृता पतञ्जलिना च देशविशेषेषु कस्यचिच्छब्दस्यार्थभेदेन प्रयोगः प्रत्यपादि । तद्यथा—'शवतिर्गतिकर्मा कम्बोजेष्वेव विकारमेनमार्याः भाषन्ते" ।

पदानां यास्कोक्तो निर्वचनप्रकार एव भाषाविज्ञानोक्तानां पदविपर्ययादि-प्रतिपादकहेतूनामाधारभूत इति केषां तिरोहितम् । यास्करचितान्निरुक्ताद् भर्त्तृहरि-कृताद् वाक्यपदीयादन्येभ्यश्च व्याकरण ग्रन्थेभ्यो ज्ञानमासाद्य सुधियो भाषाणां तुलना-त्मकाध्ययने प्रवृत्ता बभूवुरिति पाश्चात्यैरपि साभिनिवेशं स्वीक्रियते । आङ्गलभाषायाः परः सहस्राः शब्दाः संस्कृतपदैः साम्यं बिभ्राणाः तेऽस्याःवात्मनिर्भमाचक्षते । मत्कृते संग्रहे शीघ्रमेव प्रकाशयिष्यमाणे साम्यमिदं स्फुटीकृतं विपश्चितांपुरत आयास्यति । तदेवं संस्कृतं प्राच्यप्रतीच्याखिलभाषाणां रहस्योद्घाटने सम्यगवबोधे च सहायकमिति सर्वैरेवाधुना क्षितितलवासिभिः सानुरागमधीयते तदध्यापनव्यवस्था च सर्वेषु विश्व-विद्यालयेषु क्रियते । न धर्मभेदो नाचारविपर्ययो नान्याकाचिद् व्यवहितिर्वा संस्कृतस्य सार्वभौमतामुच्छेत्तुमलम् । इयमेव सार्वदेशिकता संस्कृतस्य परमं वैशिष्ट्यं यदन्यत्रा-सुलभम ।

द्विविधाऽपि यौगिकी प्रक्रिया पतञ्जलिना प्रतिपादिता परवर्त्तिभिर्हठयोगि-भिश्च प्रवर्त्तिता संस्कृतस्यैव माहात्म्याभिव्यञ्जिका कोष परिवर्धिका च कस्य विस्मिर्ति

नाधत्ते । तेषां योगिनां तास्ता अलौकिक्यः सिद्धयो योगसूत्रस्य विभूतिपादवर्णिताः, हठयोगिनाञ्च शारीरमलशोधिकाः दर्शकानामाश्चर्यजनन्यस्तास्ताः क्रियाः संस्कृताध्ययनलभ्या एव, भारतीय योगिनामन्तेवासित्वाङ्गाकारेणैव प्रापणीयाः ।

तन्त्रशास्त्रञ्च मारणमोहनवशीकरणादिसिद्धीः प्रदर्श्य संस्कृतस्य परमं महात्म्यं प्रख्यापयति । भूतप्रेतादिसिद्धयोऽपितदङ्गम् । एतां तन्त्रप्रतिपादितां पद्धतिमेवानुसृत्य सम्प्रति पाश्चात्त्यदेशेषु मानसिकचिकित्सायाः समुदयोऽभूत् यत्र विनाप्यौषधदानं केवलं वाचैव मानसं प्रभावं समुत्पाद्य गदिनां गदनिग्रहः क्रियते ।

संस्कृते परार्ध्यसंख्यां यावद्गणनोपलब्धेरन्यत्र तदवधिसंख्यानवाप्तेश्च गणितज्ञानस्यापि मूलं संस्कृतमेवेतिकोन वक्तुं पारयेत् किं बहुना "एकाचमेतिस्रश्च मे चतस्रश्चमेऽष्टौचमे" इति मन्त्रयोर्योगप्रक्रियाप्युपवर्णिता या भारतीयभाषासु प्रचलितानां पहाड़ाभिधानां गणनानां जन्मदात्री । वीजगणितस्य ज्ञानं संस्कृतादेव परेषामभूदिति विपश्चितां मतम् ।

रसतन्त्रस्यापि प्रथमाविर्भावोऽत्रैवाजनि । बौद्धैः रसप्रक्रिया उन्नतेश्चरमां कोटिमारोपिता शस्त्रक्रिया चापि तुङ्गशृङ्गमधिष्ठापिता । सम्प्रति शल्यतन्त्रं महतीमुन्नतिमादधानमपि भारतीय शल्यतन्त्रस्याधमर्णतां न जहाति । जलचिकित्सायाः अपि प्रादुर्भावस्य बीजं वैदिकमन्त्रेष्ववाप्यते तद्यथामन्त्रवर्णः—'अप्सुमे सोमोऽब्रवीदन्तर्विश्वानि भेषजा" । तदनेन स्फुटमेव प्रतीयते वैदिकसंहिता अधीत्यैवाधुनिकाः जलचिकित्सायां प्रवृत्ताः बभूवुः । अथर्ववेदे, तमुपजीव्य निर्मितेषु चान्येष्वायुर्वेदग्रन्थेषु योगबलेन त्रिकालदर्शिभिर्मुनिभिरुपवर्णिताः द्रव्यगुणाः सम्प्रत्यपि सत्यतांप्रामाणिकताञ्चाविष्कुर्वन्ति । तानेवाश्रित्य सम्प्रत्यपि पाश्चात्यचिकित्सकैर्नवनवाः योगाः निर्मीयन्ते प्रयुज्यन्ते च । स्त्रीरोगेष्वशोकस्य, हृद्रोगेऽर्जुनस्य, मस्तिष्कपोषणेऽश्वगन्धायाः, कासेवासायाः, प्रवाहिकातीसारयोर्विल्वकुटजधातक्यादीनां, रक्तचापे सर्पगन्धायाः, श्वासे सोमलतायाश्च क्रियमाणः प्रयोग आयुर्वेदस्यैव महिमानं व्यनक्ति । वैदिकयुगादेवौषधीनां गुणपरिचयो भारतीयानामासीत् । तथाच यक्ष्माभिघातकद्रव्यस्य हस्ते धारणेन रोगनिवृत्तिः श्रूयते— "यदिमा वाजयन्नहमोषधीर्हस्तआदधे । आत्मा यक्ष्मस्य नश्यति पुराजीवगृभोयथा" । तासामोषधीनामुत्पत्तिस्थानं रोहणप्रकारश्चाप्यनेकविध इति वर्णितम्" शतं वो अम्ब धामानि सहस्रमुत वोरुहः । अधाशतक्रत्वो यूयमिदं मे अगदं कृत" । सूर्यरश्मयोऽपि रोगनिवारिका इति सूर्यरश्मिचिकित्साया अपि वीजमृक्षु प्राप्यते । तद्यथैकस्यामृचि हृद्रोगस्य पाण्डुरोगस्यच विनाशः उत्तरांदिशङ्गतानां सूर्यरश्मीनां सेवनाज्जायत इति वर्णितम् । तथा च—

"उद्यन्नद्य मित्रमह आरोहन्नुत्तरांदिवम् । हृद्रोगंमम सूर्य हरिमाणं च नाशय" ।

किं वहुना साहित्यक्षेत्रेऽपि "अवस्थानुकृतिर्नाट्यमिति भारतीयः सिद्धान्त एवानुकरणवादिभिररस्तूप्रभृतिभिर्गृहीत इत्यत्र नास्ति संशयलेशः । क्रोचेप्रतिपादितोऽभिव्यं-

जनावादः कुन्तकप्रतिपादित वक्रोक्तेरेव रूपान्तरमिति केषाञ्चिद् भारतीयविदुषां मतम् । अरस्तूप्रतिपादितो विरेचनसिद्धान्तोऽपि भारतीयरससिद्धान्तात् कियानेव भिन्नो महत्साम्यं बिभर्त्ति । भारतीयो रसवादः परमाह्लादास्वादरूपः, विरेचनवादश्च त्रास-करुणयोरुद्रेकेण मनः परिष्काररूपः । परं कैश्चिद् व्याख्यातृभिर्मनः परिष्कारानन्तरं-जायमान आनन्दानुभवोऽपि तदङ्केऽन्तर्निहितः । अरस्तू महाशयोऽपि प्रत्यभिज्ञानजन्यमानन्दं काव्यप्रयोजनमाह ।

संस्कृतसाहित्यस्य क्षेमेन्द्रकृत औचित्यसिद्धान्तोऽपि अरस्तूहोरेसप्रभृतिरङ्गीकृतः । तैर्वृत्तप्रयोगेऽभिनये चरित्रचित्रणे घटनासन्निवेशे, प्रकृतिवर्णने च सर्वत्राप्यौचित्यस्याश्रयणीयताऽवश्यकी वर्ण्यते तत्त्यागे नाटकं न दर्शकानां मनोरञ्जनं विदध्यात् ।

पञ्चतन्त्रोक्ताः मनोरञ्जनात्मिकाः नीतिपराकथा अपि पाश्चात्यजगतः पशु-पक्षिकथासु पूर्णं प्रभावं निक्षिपन्तीति न निरोद्धुमितिनिश्चितमिदम् । किमधिकेन जल्पितेन । भारतीयं जीवनं, शास्त्रेषु वर्णित आचारोऽनुष्ठेयं कृत्यं वा शान्त्यधिगमस्य सुख-प्राप्तेर्वा साधनमिति सम्यग् विदित्वा सम्प्रति भूमण्डलवासिभिर्भारतभुवो मुखमालोक्यते । भारते नु त्यक्त सर्वाभिलाषाः वित्तपुत्राद्येषणाविरहिताः भगवन्नामकीर्त्तनपराः शाश्वत-सुखलाभे क्षमाः भवन्ति । समाचारपत्रेभ्योऽवगतं यदधुना पाश्चात्त्या अपि कतिपये रामकृष्णादिनामकीर्त्तननिरता स्वीयं जीवनं सफलं कर्त्तुं कामयन्ते तेषामपि हृदि सम्प्रति प्रबलो भक्तिरसप्रवाहः प्रवहति । तदस्मिन्नपि विषये संस्कृतसाहित्यं स्वकीयं शिर उन्नमय्य गर्वमनुभवति । तदन्ते वयमिदमेवाशास्महे —

( १ )

वेदानां जननीस्मृतेः प्रसविनी या दर्शनानां प्रसूः
सर्वासामपि या गिरामभिहिता जन्मैकमूलं बुधैः ।
या नित्यं हितकारिणीव जननी पुष्णाति सर्वान्नरान्
साऽजस्रं प्रसरेदनाहतगतिर्लोकेऽखिलैरादृता ॥

( २ )

धन्येयं सुरभारती गुणगणं गायन्ति यस्याः नराः
धन्याभारतभूरभूज्जनिरिह भाषा जनन्याः गिरः ।
दैवीवागियमाधुनोति दुरितं नृणां पुनात्यान्तरम्
सेयं वाग् विचरेद्भवे प्रतिगृहं यावद् विवस्वान्दिवि ॥

## ( ३ ) संक्षिप्तं दिग्दर्शनम्

सेयं भूतलवासिनो जनगणान् भोगाभिभूतान्भवे
नित्यं वित्तपरायणान् रिपुगणैः षड्भिर्भृशञ्चार्दितान्
तृष्णायाः प्रसरेण शान्तिरहितानध्यात्मतत्त्वोद्गमैः
सन्मुक्तेः सरणेर्व्यधादनुगतान् धन्यामराणां गवा ।।

( ४ )

प्रेयोमार्गविवर्जनेन सततं तृष्णाक्षयेनानिशम्
श्रेयोमार्गपरैर्भुविजनैर्लभ्यः शमः शाश्वतम् ।
वित्तन्नैव परार्ध्यताङ्गतमपि तोषाय कस्याप्यलम्
तेनेहां परिहाय तस्य मनुजैर्ध्येयो हरिः सर्वदा ।

( ५ )

सृष्टेः का सरणिः ? कियन्ति भुवनान्येषांविधाता च कः ?
कादृग्भूतगतिर्महालयमधिप्राप्तेभवे भङ्गुरे
कोऽसौ यः पुनरातनोति जगतीं ? कीदृग्विधंतन्महः ।
सर्वं संस्कृतभारती सुविशदंव्याख्याति तत्त्वं महत् ।।

( ६ )

हिंस्रे वैरपरे परस्वहरणेसक्तेऽधिकारप्रिये
लोकेध्वंसपरे नवनवान्यस्त्राणि लब्धुंद्रुतम्;
चेष्टां कुर्वति भारती हितमयी तान्मित्रदृष्ट्याऽनिशम्
द्रष्टुञ्चोपदिशत्यभद्रचरणे सक्ताञ्जघन्याञ्जनान् ।

( ७ )

लोकानांहृदयान्निरस्य गहनंकालुष्यजातंदृढं
याऽध्यात्मं मह आततानपरमं तत्त्वञ्च याऽबोधयत्
नित्यः सप्रभुरेव मंगलमयः सर्वंजगन्नश्वरम्
तावज्जन्ममृती भवेभवभयं यावन्नमोक्षोभवेत्

( ८ )

ज्ञानं भक्तिरथापि कर्म सरणिस्मेधा विभक्ताविभोः
प्राप्तेर्या सुरभारती विवृणुते शास्त्रैर्नु नूर्शितः
भक्तेर्या विविधान् पथोवहुविधैर्विद्वद्भिरालोकितान्
नित्यं लोकहितेरता सुविशदं सर्वं न्यधादग्रतः ।

( ९ )

सा सा योगक्रिया च सिद्धिसहिता सूक्ष्मा स्थविष्ठा च या
सम्यग् विस्तरशोऽप्यधायि भुवने या विस्मितेः कारणम्
अद्याप्येत्य जनैर्भुवो गुरुवरेभ्योऽत्रैव सा शिक्ष्यते ।
वृत्तीनां यमनेन चाथिहृदयं वैशद्यमासाद्यते ।

( १० )

तन्त्रस्यापि त्रिदोषादिविषयः सम्यग्यया भाषिताः
या दीर्घं व्यतनोद्रसायनविधिं या शल्यतन्त्रादिभूः ।
या योगान् विविधान् दिदेश सुलभान् रोगापनुत्यै नृणाम्
द्रव्याणां प्रथमं गुणानगमयद्येऽद्यापि ग्राह्याः समैः ।

( ११ )

भाषाणां तुलनात्मकेऽधिगमने प्रायुङ्क्त या धीमतः
सर्वैस्तथ्यमिदं भुवोबुधवरैरङ्गीकृतंप्रायशः ।
वक्रोक्ति रस एव जीवितमिति प्रख्यातमिष्टंनयम्
औचित्यादिनयञ्च काव्यरसिकाः यस्याः गिरोलभिरे ॥

( १२ )

को लाभो वहुजल्पनेन भुवने क्षेत्रे पुनश्चाखिले
सर्वत्रापि विभां ततान विशदां ज्ञानस्य चैषागवी
तस्मान्नित्यमधीयतां गुणगणश्चास्याः पुनर्गीयताम्
लोकेऽस्याः प्रसृतेश्च शुभ्रसरणिः सर्वैर्बुधैश्चिन्त्यताम्

# षोडश महादानानि

परांजपे विनायक शर्मा

पुराणानि तावत् वेदप्रतिपादितानां विषयाणां समुपवृंहणायैव प्रवृत्तानि इति सिद्धान्तममुं 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वाक्यं प्रमणीकुर्वन्तः सर्वे पण्डिताः स्वीकुर्वन्ति । पराणप्रतिपादितानां विविधानाम् आख्यानानाम् उपाख्यानानां, व्रतादीनां, देवतोपासनादीनां पर्यालोचनेन विषयः अयं सुस्पष्टं प्रतीतो भवति पुराणाभ्यासकानाम् । वेदे संक्षेपेण निर्दिष्टाः सृष्ट्युत्पत्तिः, अवताराः, वर्णाः विप्रादयः, श्राद्धादयो विषयः, उपनयनादयः संस्काराश्च विस्तरेण प्रतिपादिताः उपलभ्यन्ते पुराणेषु । यथाहि अतिसूक्ष्मं वटबीजं अनुकूलायाः भूमेः लाभे अङ्कुरितं सत् आवश्यकस्य जलस्य गोमयादेः पोषकस्य च उपलब्धौ वृक्षरूपं भजते, एवमेव वेदे प्रदिपादितः सूक्ष्मः अंशः श्रद्धालूनां धर्मपराणां जनानां उपलब्धौ समाजपथप्रदर्शकानां व्यासनामभाजां पौराणिकानां हस्तगतः सन्, कालस्य आनुकूल्ये सति महान्तं विस्तारं भजते । तत्र विविधानि उदाहरणानि प्रदर्शयितुं शक्यानि । अस्मिन् प्रबन्धे परं एकमेव उदाहरणं आश्रित्य विषयोऽयं सुस्पष्टं प्रतिपाद्यते । वेदाः तावत् सोमयागपशुयागादिकं त्यागप्रधानं यज्ञमुपदिश्य त्यागमेव कर्तव्यत्वेन उपदिशन्ति । उपनिषदोऽपि 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः, इत्यादिभिः वाक्यैः त्यागमेव बोधयन्ति । एवं च वेदेन प्रभुसंमितया वाचा कर्तव्यतया उपदिष्टः त्यागः तेषु तेषु पुराणेषु तत्तत्कालानुरूपं आर्थिकस्थित्यनुरूपं च सुहृत्संमितेन मार्गेण विविधानां पदार्थविशेषाणां दानेन अभ्युदयं निःश्रेयसंच प्राप्नोति पुरुषः इति उपदेष्टुं विविधाः कथाः दानमाहात्म्यबोधिकाः प्रणीय विधीयते । केवलं पुराणानां अनुक्रमणिकापठनेनापि सर्वेषु पुराणेषु दानानां विविधानां माहात्म्यं प्रतिपादितं इति सुस्पष्टं प्रतीयेत ।

पुराणेषु प्रतिपादितः सोऽयं दानोपदेशः समाजस्य राष्ट्रस्य च नितराम् उपकारकः इत्यपि सूक्ष्मेक्षिकया विचार्यमाणे सर्वस्यापि प्रतीयादेव । ख्रिस्ताब्दस्य प्रथमं शतकमारभ्य पञ्चशतं वर्षाणि भारतस्य धनसमृद्धिम् अङ्गीकुर्वन्ति इतिहासविदः । विशिष्य तु चतुर्थं पञ्चमं च इति वर्षशतद्वयं सुवर्णयुगं भारतवर्षस्य इति तु अङ्गीकृतमेव सर्वैः विद्वद्भिः । काले अस्मिन् महान् सुवर्णराशिः भारतात् विदेशं प्रेष्यमाणानां

विविधानां पदार्थानां मूल्यरूपेण भारते वर्षे समायाति स्म । तदानींतनाः रोमनगरी-वास्तव्याः धनिकाः मुक्तोत्सुकाः अनल्पं सुवर्णनिचयं दत्त्वा भारतात् सुपाकान् सुगन्धीन् तण्डुलान्, शुकमयूरादीन् क्रीडाखगान्, सुगन्धितैलानि हस्तिदन्तनिर्मितानि गृहोपकरणानि, कौशेयादीनि सूक्ष्मतमानि वस्त्राणि हीरकेन्द्रनीलादीनि च रत्नानि क्रीणन्ति स्म । संप्रति शासनेन स्थापितेषु निर्बन्धेषु वस्तुजातं भारतात् देशान्तरं प्रेषयितुम् विदेशात् वस्तूनि आनेतुं सत्सु अपि ते ते वणिजः देशान्तरेषु क्रयं विक्रयं च कुर्वाणाः अचिरेणैव कालेन कोटिशः धनं अर्जयन्ति इति तु सुपरिचितं समेषाम् । एवंत्वे यदा नासीत् कोऽपि निर्बन्धः विदेशेषु प्रेष्यमाणेषु वस्तुषु नैव आसीत् वृद्धिप्रमाणे कोऽपि नियमः, तदा विदेशव्यवहारनिपुणाः वणिजः कियत् धनं संपादितवन्तः भवेयुः इति कल्पनया परिज्ञातुं पारयामो वयम् ।

एवं च यदा शताधिकानां वणिजां हस्तसादभूत् महान् सुवर्णराशिः तदा समाज-निरीक्षकैः पुराणकारैः संचितस्य धनस्य परितः चलनं संपादयितुं परंपराप्राप्तं दानमेव समुचितः उपायः इति चिन्तयित्वा विविधानि दानानि समुपदिष्टानि । ततश्च राष्ट्रे अर्थसंचयमूलः अनर्थः तैः दूरीकृतः इत्यपि वक्तुं शक्यम् । पुराणकाराणां कार्यं वैदिकं त्यागसूत्रमादाय दानरूपपटनिर्माणं इत्यपि कल्पयितुं शक्यम् । पुराणेषु तावत् दरीदृश्यते वैविध्यं दानानां, दानप्रसङ्गानां, देयवस्तूनां च । सर्वेषां परिचयः उद्बोधकः स्यादिति जानन्नपि विस्तरभयात् तं विषयम् अधिकृत्य न किमपि सांप्रतं प्रतिपादयामि । किं तु मत्स्यपुराणे लिङ्गपुराणे च वर्णितानां षोडशानां महादानानां स्वरूपं श्रीमतां पुरस्तादुप-स्थाप्य, दानस्वरूप पर्यालोचनेन आर्थिकीं स्थितिं भारतस्य वर्णयामि ।

मत्स्यपुराणे २७४ अध्यायमारभ्य २८९ अध्यायान्तं षोडशसु अध्यायेषु षोडश महादानानि वर्णितानि उपलभ्यन्ते । तत्र प्रतिपादितानां दानानां च अधिकारी नास्ति विशिष्य प्रतिपादितः मत्स्यपुराणे । किं तु तत्र सामान्यतया उक्तं यथा—'महादानमखं कुर्यात् विप्रैश्चैवानुमोदितः' (म. पु. २७४ ब.)'महादानानि देयानि संसारभयभीरुणा' । (म. पु. २७४-२३ ब) एवं च अग्रे प्रतिपादयिष्यमाणानां षोडशानां दानानां अधिकारी यः कोऽपि धनसंपन्नः ब्राह्मणः, क्षत्रियः वैश्यः, शूद्रोऽपि वा भवितुम् अर्हति इति स्पष्टमेव प्रतीयते । मत्स्यपुराणे च २७४ तमे अध्याये मण्डपनिर्माणं, देवतास्थापन-पूजनादि पूर्वाङ्गं प्रकृतिभूतं उपदिश्यते । तथैव ब्राह्मणभोजनादि उत्तराङ्गं विधायते । इदं पूर्वोत्तराङ्गं समेषामेव दानानां अङ्गभूतम् अतिदेशविधिना प्राप्तं भवति । २७४ तमे अध्याये एव प्रथमं तुलापुरुषदानं सविस्तरं प्रतिपादितं भवति । तत्रैव अध्याये षोडशानां दानानां नाम्नानिर्देशः कृतोऽस्ति यथा—

आद्यं तु सर्वदानानां तुलापुरुषसंज्ञकम् ।। म. पु. २७४.६

हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ।
कल्पपादपदानं च गोसहस्रं च पञ्चमम् ।। २७४.७

हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ।
हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा ।। २७४.८

पञ्चलाङ्गलकं तद्वत् धरादानं तथैव च ।
द्वादशं विश्वचक्रं तु ततः कल्पलतात्मकम् ।। २७४.९

सप्तसागरदानं तु रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत् षोडशं परिकीर्तितम् ।। २७४.१०

उपरिनिर्दिष्टानां सर्वेषां विस्तरेण निरूपणं मत्स्यपुराणे प्रतिपादितं तत् जिज्ञासुभिः तत एव अवलोकनीयम् । अत्र तु मया प्रत्येकं दानस्य कियत्सुवर्णं न्यूनान्न्यूनं अधिकादधिकं च दातव्यम् इति पुराणकृता आदिष्टं तावदेव कोष्टनिहितं उपस्थाप्यते ।

मत्स्यपुराणोपदिष्टानां दानानां स्वरूपम् —

| क्रमाङ्कः | नामधेयम् | न्यूनतमं सुवर्णं तोला परिमाणे | अधिकतमं सुवर्णं तोला परिमाणे |
|---|---|---|---|
| १ | तुलापुरुषः | ४००० | ७००० |
| २ | हिरण्यगर्भः | ४०० | ८०० |
| ३ | ब्रह्माण्डं | ८० | ८००० |
| ४ | कल्पवृक्षः | २५ | ८००० |
| ५ | गोसहस्रम् | ८०० | २५००० |
| ६ | कामधेनुः | २५ | ८००० |
| ७ | हिरण्याश्वः | २५ | ८००० |
| ८ | हिरण्याश्वरथः | २५ | ८००० |
| ९ | हेमहस्तिरथः | २५ | ८००० |
| १० | पञ्चलाङ्गलकम् | ४० | १६००० |
| ११ | धरा | ४० | ८००० |
| १२ | विश्वचक्रम् | ८० | ८००० |
| १३ | सप्तसागरकाः | ४० | ८००० |
| १४ | कल्पलता | ४० | ८००० |
| १५ | रत्नधेनुः | परिमितं सुवर्णं परं शतशः रत्नानि अपेक्ष्यन्ते । | |
| १६ | महाभूतघटः | सुवर्णमयः कुम्भः रत्नानि च अपेयक्ष्न्ते । | |

कटाक्षमात्रनिक्षेपेण एवं ज्ञायते अस्माभिः यत् मत्स्यपुराणस्य लेखनसमये भारते सुवर्णस्य वैपुल्यं धनिकानां वणिजां, राजपुरुषाणां वा हस्तगतं आसीत् । अतश्च संचितस्य धनस्य एतावता महता प्रमाणेन वितरणं प्रतिपादयन्ति पुराणकाराः ।

अग्निपुराणे २१० तमे अध्याये केवलं दानानि षोडश उपदिष्टानि यथा—

तुलापुरुष आद्यं तु हिरण्यगर्भदायकम् ॥ अ. पु. २१०.१
ब्रह्माण्डं कल्पवृक्षञ्च गोसहस्रं च पञ्चमम् ।
हिरण्यकामधेनुञ्च हिरण्याश्वस्तथैव च ॥ २१०.२
हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकं चैव धरादानं तथैव च ॥ २१०.३
विश्वचक्रं कल्पलता सप्तसागरकं परम् ।
रत्नधेनुः महाभूतघटः शुभदिनेऽर्पयेत् ॥ २१०.४

अत्र उल्लिखितानि दाननामानि तेषां क्रमश्च सर्वथा एकरूपः मत्स्यपुराणगतैः महादानैः । तत्र तु अग्निपुराणे नास्ति प्रतिपादितः कोऽपि विधिः येन व्ययीकर्तव्यं सुवर्णं कियदिति अस्माभिः परिकल्पयितुं शक्यं स्यात् ।

इदानीं लिङ्गपुराणे प्रतिपादितानां षोडशानां दानानां स्वरूपं पश्यामः । लिङ्ग-पुराणस्य उत्तरार्धे अष्टाविंशतितमम् अध्यायमारभ्य चतुश्चत्वारिंशदध्यायान्तं षोडशैः अध्यायैः दानानां षोडशसंख्याकानां वर्णनं अतिसंक्षेपेण कृतं उपलभ्यते । तत्र तु अयं विशेषः । मत्स्यपुराणे पूर्वोत्तराङ्गभूतविधिषु वैदिकानां मन्त्राणां प्रयोगः उपदिष्टः । लिङ्गपुराणे परं प्रायः तन्त्रशास्त्रगताः मन्त्राः प्रतिपादिताः सन्ति । तेन च एतावत् वक्तुं शक्यं, यत् लिङ्गपुराणस्य प्रणयनकाले तन्त्रशास्त्रस्य विपुलः प्रचारः समग्रे भारते आसीत् इति । किं च लिङ्गपुराणे दानानां अधिकारी अपि भिन्न एव निर्दिष्टो भवति । यथा राज्ञां षोडशदानानि नन्दिना कथितानि च ॥ लि. पु. २८.१४ ॥ तस्मिन्नेव अध्याये अपरमेकं वाक्यं उपलभ्यते यथा—

बन्दीकृतान् विसृज्याथ कारागृहनिवासिनः ॥ लि. पु. २८.८७ ॥

आभ्यां उपरिनिर्दिष्ठाभ्यां वाक्याभ्यां इदं स्पष्टं ज्ञायते, यत्, इदानीं भारते वर्षे सुवर्णं केवलं नृपाः एव व्ययीकर्तुं शक्नुवन्ति स्म न पुनः धनसंपन्नाः वणिजः, अन्ये कृषावलादयो वा । लिङ्गपुराणे इतोऽपि अधिकं किञ्चित् आर्थिकस्थितिविषये अस्माभिः अनुमातुं शक्येत प्रतिदानं आदिष्टं सुवर्णपरिमाणं अवलोक्य । अतश्च तदेव परिमाणं अत्रभवतां पुरस्तादुपस्थापयामि ।

लिङ्गपुराणोक्तानां षोडशानां दानानां स्वरूपं—

| क्रमाङ्कः | नामधेयम् | न्यूनतमं सुवर्णं तोला परिमाणे | | अधिकतमं सुवर्णं तोला परिमाणे |
|---|---|---|---|---|
| १ | तुलापुरुषः | ४००० | | ७००० |
| २ | हिरण्यगर्भः | १५०० | | — |
| ३ | तिलपर्वतः | २५ | | — |
| ४ | सुवर्णमेदिनी | १००० | | — |
| ५ | कल्पपादपः | १०० | | — |
| ६ | गणेशेशः | १० | | — |
| ७ | होमधेनुः | १०० | | १००० |
| ८ | लक्ष्मीः | १०८ | | १००० |
| ९ | तिलधेनुः | १० | | — |
| १० | गोसहस्रम् | २००० | प्रत्येकं एकं रत्नं | १००० |
| ११ | हिरण्याश्वः | १०८ | | १००८ |
| १२ | कन्या | — | | — |
| १३ | हिरण्यवृषः | १०८ | | १००० |
| १४ | गजः | १०८ | | १००० |
| १५ | लोकपालाष्टकम् | १६० | | — |
| १६ | त्रिमूर्तिः | १०८ | | — |

लिङ्गपुराणे षोडशसु दानेषु षण्णां दानानां स्वरूपमेव भिद्यते। किं च एकं तुलापुरुषं गोसहस्रं च विहाय सुवर्णप्रमाणं न्यूनात् न्यूनमेव उपदिश्यते। अधिकादधिकस्य सुवर्णस्य निर्देशः प्रायः कुत्रापि नास्त्येव। तथा च दानीयेषु द्रव्येषु सुवर्णेन रत्नेन च सह गावः, तिलाः, विविधानि धान्यानि च समावेशितानि सन्ति। अधिकारी च दाने नृपः एव केवलं निर्दिष्टः। तथैव मत्स्यपुराणे ग्रहीतुः विशिष्य निर्देशो नास्ति। अतश्च प्रतिग्रहाधिकृतः ब्राह्मणः एव तत्र ग्राह्यो भवति। लिङ्गपुराणे परं प्रतिग्रहीतुः स्वरूपं भिद्यते। तच्च यथा—

दीनान्धकृपणानां च बालवृद्धकृशातुरान्।
भोजयेच्च विधानेन दक्षिणामपि दापयेत्॥ लि. पु. उ. २८.९६॥

अग्रे पुनरपि प्रतिग्रहीतुः निर्देशो भवति। यथा—

दीनान्धकृपणानाथबालवृद्धकृशातुरान्।
तोषयेदन्नदानेन ब्राह्मणांश्च विशेषतः॥ लि. पु. उ. ३९.८॥

एवं च उभयोः मत्स्यलिङ्गपुराणयोः विहितानां षोडशानां दानानां परीक्षणेन एते विषयाः ज्ञायन्ते ।

(१) मत्स्यपुराणं तदा लिखितं यदा भारते सुवर्णस्य वैपुल्यं, न केवलं राज्ञां अपि तु अन्येषामपि वणिगादीनां संभवति ।

(२) लिङ्गपुराणं तु तस्मिन् समये लिखितं स्यात् यदा नृपान् विहाय अन्येषां सुवर्णं व्ययितुं सामर्थ्यमेव न स्यात् । किं च राज्ञः सविधे अपि सुवर्णस्य प्राचुर्यं न स्यात् यतः सुवर्णेन सहैव तिलादिधान्यानामपि उपयोगः अङ्गीकृतः पुराणकारेण ।

(३) मत्स्यपुराणकाले दीनाः, अनाथाः, पङ्गवः प्रायः न उपलब्धाः स्युः येषां पोषणं समाजेन दानधनेन संपाद्यं स्यात् ।

(४) लिङ्गपुराणकाले तु युद्धादिना ईतिभिश्च प्रजा अत्यन्तं परिपीडिता स्यात् येन राज्ञः दानार्थं व्ययीकर्तव्यं धनं ब्राह्मणैः सह दरिद्रेभ्यः अन्येभ्यः अङ्गविकलेभ्यः अपि दातव्यमापतति ।

अहं तु एवं मन्ये मत्स्यपुराणस्थ सोऽयं षोडशाध्यायात्मकः भागः गुप्तानां साम्राज्ये धनस्य यदा वैपुल्यं समग्रे राष्ट्रे तदानीं लिखितः स्यात् । लिङ्गपुराणस्य तु सोऽयमंशः यदा गुप्तानां राज्यं नैकवारं हूणैराक्रान्तं, यदा च नृपाणां सततं युद्धं कर्तव्यं भवति स्म । तेन च विदेशेषु वस्तुप्रेषणं दुर्घटं जातं किं च विद्यमानमपि द्रव्यं युद्धार्थं व्ययीकर्तव्यं अभवत् । तदा लिखितः स्यात् ।

एतं निष्कर्षं स्थापयितुं शिलालेखादिषु यदि षोडशमहादानानां निर्देशः उपलभ्येत तदा अतीव सुकरं स्यात् ।

# हिन्दू विवाहस्य केचन विशिष्टाः विधयः

डा० बी० डी० पाण्डया

**गृहस्थाश्रमः**

हिन्दू संस्कृतिश्चतुर्भिराश्रमैश्चतुर्भिश्चवर्णैः वर्णाश्रम व्यवस्थामादधती सुबहोः समयाद् भागीरथीवामन्दं वहन्ती अद्यापि मानवसमाजं पूर्ववदेव विभूषयति ।

अस्याः संस्कृतेः महत्त्वपूर्णेषु चतुर्षु आश्रमेषु गृहस्थाश्रमो महीयान् । अत एव तत्प्रशस्तिगीतं गायता भगवता मनुना अभाणि यत् 'यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः' । अपि च यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेन चान्नेन चान्वहन् । गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही । नानाजन चरित्र विचित्रितेऽस्मिन् खलु धरातले संताप ताप तातप्यमानसानां गृहस्थाश्रमः शोभनतमः आश्रमः ।

तादृशस्य गृहस्थाश्रमस्य विशिष्टः संस्कारः वरीवर्ति विवाहसंस्कारः । षोडशसु खलु संस्कारेषु अस्य महती विशेषता । ब्रह्मादिष्वष्टप्रकारकेषु च विवाहेषु ब्राह्मः सविशेषं प्रचलितः ।

**गृहस्थाश्रमे पत्नी**

अस्मिन् गृहस्थाश्रमे सौजन्यस्य सौमनस्यस्य च प्राप्त्यै समीचीना गृहिणी सबहुमान वर्णिता । अत एव शतपथ ब्राह्मणेन एतस्याः महिमानं गायता व्याहारि यत् 'अर्धो ह एष आत्मनो यज्जायेति' ।

महाभारतमपि एतद् दर्शयति यत् 'न गृहं गृहमित्याहु गृहिणी गृहमुच्यते' इति । अपि च तदेव व्याचष्टे यत् अर्धंभार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा । भार्या मूलं त्रिवर्गस्य भार्या मूलं तरिष्यतः । इति ।

एतादृश्याः पत्न्याः प्राप्त्यै क्रियमाणोऽयं विवाहविधिः 'संस्कार रूपेण' प्रथितः । एतदतिरिक्ताः अन्ये विवाहाः ये वर्तन्ते तत्र प्रथमं मुस्लिमसमाजोयदा वीक्ष्यते तर्हि

तत्र सम्पद्यमानो विवाह विधिः 'निकाह' नाम्ना प्रथितस्तरः । अयं विवाहः वधूवरयोः परस्परं विचार सामञ्जस्यं आश्रित्य जाजायते ।

अत्र लग्नस्य लक्ष्यं पुत्रोत्पत्तिः एवाऽस्ति । तत्र हिन्दू समाजस्येव पितृऋणापाकरण सदृशं पारलौकिकं लक्ष्यं न निरीक्ष्यते ।

पारसी विवाहस्तु स्वीयोत्तरदायित्व पूर्णयोः तुल्यवयस्कयोः दृश्यते ।

क्रिश्चियन समाजे विवाहो नाम ईश्वरेण स्थापिता काचन आदरणीया अवस्था मन्यते ।

नहि हिन्दू विवाहो यज्ञरूपेण उद्घोषितः ।

**विवाहस्य महत्त्वम्**

अत एव तैत्तिरीय ब्राह्मणं कथयति यत् 'अयज्ञियो ह वा एष योऽपत्नीकः अस्यायमाशयः यत् यो नाम जनः विवाहं कृत्वा गार्हस्थ्यं न प्रविशति सः अयज्ञियः ।

विवाहं केवलं भौतिकसुखसाधनायाः ये साधनं मन्यन्ते ते भ्रान्ताः । हिन्दू शास्त्रदृष्टिकोणानुसारं पत्नी पुरुषस्य अर्धाङ्गं भवति । अत्रार्थे पाणिनि सूत्रमपि प्रमाणं 'पत्युर्नो यज्ञ संयोग' इति ।

एतत् शास्त्रानुसारं मानवस्य कृते त्रीणि ऋणानि । तानि च देव ऋणम्, पितृ ऋणम् मनुष्य ऋणम् इत्याख्यानि । तत्र पितृ-ऋणस्यापि अपाकरणाय विवाहस्य महत्त्व वर्तते । एतस्मिन्विषये तैत्तिरीय संहिताऽपि ब्रवीति यत् जायमानो ह वै ब्राह्मण-स्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः इति ।

**विवाह शब्दस्यार्थः**

विपूर्वकाद् वहधातो र्घञि अयं शब्दो निष्पन्नः । "वाचस्पत्य" शब्द कोषानुसारं 'विवाहः दारपरिग्रहे तज्जनक व्यापारे चेति' तत्र भवन्तः काणे महोदयाः (१) उद्वाहः (२) परिणयः (३) उपनयः (४) पाणिग्रहणमित्यादीनपि विवाह पर्यायान् मन्यन्ते । अतएव ताण्ड्यमहाब्राह्मणं विवाह शब्दमेव मुख्यतया प्रस्तौति, तद्यथा— इमौ वै लोकौ सहास्तां तौ वियन्तावभूतां विवाहं विवहावहै, सह नावस्त्विवति ।

**विवाहस्य प्रयोजनम्**

हिन्दू धर्मानुसारं विवाहः केवलं जातीय सम्बन्धार्थं केवलं वा वंशविस्तरार्थं न अभिप्रेतः, किन्तु मोक्षार्थमपि । अतो वदति भगवान् मनुः यत् 'ऋणानि त्रीण्यपाकृत्य मनो मोक्ष निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः इति ।

[हिन्दू विवाहस्य प्रत्यक्षं प्रयोजनं अवैधानिक प्रवृत्ति निषेधपूर्वकं अनैतिक प्रवृत्तितः स्वस्य रक्षणं वर्तते, पत्नी सहयोगेनाग्निहोत्रादि कर्मणा अन्ततः पुण्यप्राप्तेश्चाप्रत्यक्षं प्रयोजनं वर्तते ।]

एतादृशस्य हिन्दूविवाहस्य प्रायोगिकविधौ केचन विशिष्टा विषयः कीदृशाः सन्ति, कश्च तेष्वन्तर्निहितो विशिष्ट आशयः, तद्दर्शनाय इदं पत्रं व्यलेखि मया ।

**(१) तत्र प्रथमं समायाति मधुपर्कः**

वाग्दानविधिना पूर्वं निषिद्धो वरः यदा विवाहमण्डपं समायाति, तदा तस्मै मधुपर्कः प्रदीयते अत्रेत्यमपि स्मर्तव्यं यत् वाग्दानस्य प्रथा कोरिया, जापान् चीनादि देशेष्वपि प्रचलिताऽस्ति । कोरिया-जापान स्थलयोः, तत्समये वधू र्महार्हैः आभूषणैः सज्जीक्रियते सुदीर्घ यवनिका विशेषं च वारयति ।

मधुपर्कविधेः आश्वलायन गृह्यसूत्रे पारस्कर गृह्यसूत्रादिषु सूत्रग्रन्थेषु विपुलतया वर्णनमुपलभ्यते । पारस्कर गृह्यसूत्रे च षण्णां अर्घ्याणां मधुपर्केण स्वागतविधेरुल्लेखोऽस्ति । तद्यथा ॐ षडर्घ्या भवन्त्याचार्या ऋत्विग्वैवाहो राजा प्रियः स्नातक इति ।

अत्र च समागताय वराय विष्टरं प्रदाय, पाद्यं समर्प्य पुनश्च विष्टरं विनिवेद्य, आचमनीयं च वितीर्य, मधुपर्कः प्रदीयते । मधुपर्कश्च—

दधिसर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः प्रोच्यते मधुपर्कः । एवमेतैर्द्रव्यै र्मधुपर्कः संपाद्यते ।

**मधुपर्क महत्वे**

आयुर्वेदिक दृष्ट्या वाक्ष्यमाणे दधि रसायनं भवति मधु शरीरदार्ढ्योत्पादकं घृतं बलबुद्धिवीर्यवर्धकं, च भवतीति विदितचरम् ।

कन्यापिता मधुपर्को मधुपर्को मधुपर्क इति कृत्वा वराय मधुपर्कपात्रं समर्पयति, ततश्च सः त्रिःप्राश्नाति ।

[अस्मिन्नवसरे गवालंभन प्रश्नः समुदेति, सच नितरां विवादास्पदीभूतः, स्वल्पे च समये स विस्तरेण चर्चितुं न शक्येत इति हेतोः सः प्रश्नः न स्पृश्यते ।]

संक्षेपेण अत्रेदमेव कथनीयम् यत् मधुपर्केण क्रियमाणः वरस्य स्वागतविधिः स्वकीयं निजं गौरवं आकलयति ।

**(२) ततः परं समायाति गोत्रोच्चारनामा विधिः**

हिन्दू धर्मशास्त्रानुसारं सगोत्रयोः सपिण्डयोः वरकन्ययो र्विवाहो निषिद्धः ।

अत्रार्थे भगवान् मनुरपि "असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ।

गोत्रशब्दस्य 'गोशालारूपः अर्थः (ऋग्वेदे) प्रथममण्डले दृश्यते तैत्तिरीय संहितायां गोत्रशब्दस्य दुर्ग रूपोऽप्यर्थः लभ्यते, 'पाणिनिना' च 'अपत्यं पौत्रप्रभृति गोत्रम्' इति रूपेण गोत्रशब्दो वीक्ष्यते ।

अत्र तां चर्चां विहाय केवलं गोत्रोच्चारस्य लौकिकप्रयोजनं किमस्तीति विचार्यमाणे इत्थं प्रतिभातियत् अनेन वर-कन्ययो विभिन्नं गोत्रमिति प्रतीतिर्भवति । (२) पूर्व पुरुषाणां पितृ-पितामह-प्रपितामहानां नाम श्रावं श्रावं कोऽप्यादर विशेषः बोभवीति ।

वर-वध्वोश्च तारस्वरेण नामग्रहणे जाते सर्वेऽनवबुद्धा अपि जानन्ति यत् इमौ वधूवराविति ।

**पाणिग्रहणम्**

गोत्रोच्चारादूर्ध्वं वरकन्ययोः पाणिग्रहणसंस्कारो भवति । एतद्विषयिण्यः रोमाञ्चिकाः कल्पनाः संस्कृतसाहित्ये प्राचुर्येण उपलभ्यन्ते — यथा अजेन्दुमत्योः पाणिग्रहणं वर्णयन् तत्रभवान् कालिदासः कथयति :—

'हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।
अनन्तराशोकलता प्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥

अपिच —

'आसीद्वरः कण्टकित प्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
तस्मिन्द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेन मनोभवेन ॥

काव्यप्रकाशेऽप्येकस्मिन्नुदाहरणे भव्यं वर्णनं समधिगम्यते यत्–

शैलेन्द्रप्रतिपाद्यमानगिरिजा हस्तोपगूढोल्लसद्
रोमाञ्चादि विसंष्ठुलाखिल विधि व्यासङ्ग भङ्गाकुलः ।

हाः शैत्यं तुहिनाचलस्य करयो रित्यूचिवान् सस्मितं —

शैलान्तः पुर मातृमण्डलगणैं र्दृष्टोऽवताद्वः शिवः ॥

पाणिग्रहणस्य विधिः प्रायः विश्वस्य समस्तेषु विवाहेषु लभ्यते, अहो कीदृशं मधुरं विधि साम्यम् ?

ख्रिस्ती, इस्लाम समाजेऽपि shake hand रूपेणायं विधि र्दृश्यते ।

(१) अस्मिन्नेव विवाहसंस्कारे लाजाहोम प्रसङ्गे वधूपाणिग्रहण विधिः दृश्यते। तत्रेदं सोमृत्यते यत् पाणिग्रहणं तु केवलं प्रतीकात्मकम्, किन्तु अधुना यथा भौतिकरूपेण तथा आत्मिक रूपेणापि वयं मिलितौ स्वः ।

(२) पाणिग्रहणं केवलं हिन्दू विवाह एव सम्पद्यत इति न, किन्तु तत्तु केनापि रूपेण विश्वस्य समस्तेषु विवाहेषु सम्पद्यते ।

(३) A short History of Marriage नाम्नि ग्रन्थे तत्रभवान् डा० वेस्टरमार्क Westermark महोदयः यन्निर्दिशति तदनुसारं अस्याः प्रथायाः अनेके अर्थाः । प्राचीनात्कालात्संपद्यमानोऽयं पाणिसंयोजनविधिः, उभयोर्मध्ये कमपि प्रतिज्ञा-विशेषं स्मारयति ।

पोलेण्ड, बल्गेरिया, पोर्टुगलादि भारोपीयेषु स्थानेष्वपि विवाह ग्रन्थिना बध्यमानयोः वधूवरयोः पाणिग्रहणं सम्पद्यमानं अद्यापि दृश्यते ।

विलियम टेग नामा विद्वान् स्वीये 'The knots tied' 'Marriage ceremonies of All Nations ग्रन्थमध्येपि यत् निर्दिशति तदनुसारं 'हस्ते हस्तस्य मेलनं स्वाभाविकतयैव मैत्र्याः प्रतिज्ञा विशेषस्य च सूचकं चिह्नमास्ते । तत्र दक्षिणो नाम हस्त मानवगत निष्ठायाः साक्षित्वेन गण्यते । कस्यापि प्रकारस्य वचनस्य प्रदाने परस्परं दक्षिणो हस्तः मंगनो भवति । सहि उत्साहकर्मा । यथायास्को भणति दक्षतेरुत्साहकर्मण इति । तर्हि विवाह सदृशे गभीरे प्रसङ्गे तादृशवचन परिपालनाय दक्षिणपाणि संयोजनं यदि भवति चेत्तर्हि न तद् विस्मयास्पदम् ।

योजकनाम्ने वैश्वानराय चतस्रः आहुतीः समर्प्य, ततः अष्टौ आहुतीः समर्प्य तत्र वधूवरौ मुख्यान् होमान् विदधाते ।

(३) होमः

अग्निसाक्षिकं क्रियमाणो विधिः हिन्दूविवाहस्य प्रधानतमं अङ्गम् । ते च (१) राष्ट्रभृत् होमः (२) जया होमः (३) अभ्यातान होमः (४) अग्न्यादिपञ्चक होम (५) लाजाहोमश्च भवन्ति ।

राष्ट्रभृत् होमः

यत्र होमे १२ द्वादश आहुतयः प्रदीयन्ते । तस्य होमस्य नाम राष्ट्रभृद् होम इति । राष्ट्रं यः बिभर्ति तादृशोहोमः सः राष्ट्रभृत् होमः । राष्ट्रं अवयवि, वधूवरौ च अवयवकौ । ततश्च राष्ट्रं संस्मृत्य तेन सहैकाकारत्वं संपादयितुं वधूवरौ अत्र अभिलाषां व्यङ्क्तः । अहो कीदृशी भव्या राष्ट्रिय भावना ।

अत्र विषये महीधरः स्वीये भाष्ये इदं लिखन्ति यत् पुरुषस्य क्लीबत्वादिदोषः अनेन दूरीभवतीति ।

राष्ट्रभृद् होमे इयमपि भावना व्यक्ता भवति यत् तत्र अग्नौ तिलानां यवानां च भस्मसात्त्वं संपद्यते, तथा आवामपि वधूवरौ राष्ट्रस्य रक्षार्थं तदर्थं बलिदानाय च सज्जौ भविष्याव इति ।

**ततः परं जया होमः**

अत्र त्रयोदशः आहुतयः अग्नौ समर्प्यन्ते । अस्य नामैव सूचकं यत् अनेन होमेन जीवन क्षेत्रे जयः प्राप्यते । अत्र च गदाधरः इत्थं गदति यत् अनेन तेजसः पराक्रमस्य च उदयो बोभवीतीति ।

**ततः परं अभ्यातान होमः**

अभि+आ+तन् धातोर्निष्पन्नोऽयं शब्दः वधूवरयोः उन्नतिं विस्तृतिं च सूचयति । अत्र १८ अष्टादश आहुतयः प्रदीयन्ते। अनेन दम्पत्योर्वियोगो न भवतीति हरिहर गदाधरौ भणतः अत्र पितृभ्योऽन्तिमाहुतिः प्रदीयते, येन भविष्यति तयोः वंशप्रतिष्ठा स्यात् यथा च पित्तरः संतुष्येयुः, वरश्च पितृऋणमुक्तो भवेदिति ।

**ततः परं अग्न्यादिपञ्चक होमः**

अत्र अग्निमुद्दिश्य चतस्रः, यमं चोद्दिश्य चैका इति पञ्चाहुतयः प्रदीयन्ते । अत्रापि मृत्युपाशान्मुक्त्यादिकं प्रार्थ्यते । सर्वदा सर्वथैव दुःखे सुखे च स्वीयपाणिग्रहीतुरेव साहचर्यं कामयमाना वधूः मृत्युमपि प्रार्थयते यत्सः स्वीयं करालं पदन्यासं स्वीयपत्यौ न विदध्यादिति । हिन्दू-शास्त्र काराणां अत्र चातुर्यं व्यक्तं भवति तद्यथा मृत्युस्तु सर्वथा-परिहार्यः तथापि दीर्घजीवित्वे सः बाधां न उत्पादयेद् इति तौ अग्न्यादिपञ्चक होमे मृत्युं प्रार्थयेते ।

**ततः परं लाजा होमः**

अयं नितरां विशिष्टो होमः । वैदिक साहित्यस्यापि अयं विशिष्टो विधिः । अस्मिन्होमे वधूवराभ्यां चतस्रः प्रदक्षिणाः करणीया भवन्ति । तस्यां वेलायां **अश्मारोहण-विधिः** अपि संपाद्यते ।

लाजा होमे लाजा नाम भ्राष्ट्रा यवा इति भानुजी भट्टः ।

एतस्मिन् लाजा होम प्रसङ्गे वधूवरौ यां प्रार्थनां कुरुतः यञ्च सङ्कल्पविशेषं वितनुतः, सः अलौकिकः संकल्पः ।

अत्र वधूः पत्युर्दीर्घजीवनाभिलाषां, ततश्च पतिकुलस्य समृद्ध्यै प्रार्थयते । इयं नार्यपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ।

ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धि करणं तव । ममतुभ्यं च संवननं तदग्नि-रनुमन्यतामियँ स्वाहा ।

ॐ तुभ्यमग्ने पर्यवहन् सूर्यां वहतुना सह । पुनः पतिभ्यो जायां दाऽग्ने प्रजया सह । ऋग्वेदे सूर्या सूक्ते समुल्लिखितोऽयं मन्त्रः कमपि अनिर्वचनीयं भावविशेषं व्यनक्ति ।

अत्रान्तरे पतिरपि यद्वदति, तद्भारतीय संस्कृतेर्नितान्तमनुरूपम् । अयं मंत्रः ऋग्वेदे सूर्यासूक्ते वर्तते ।

ॐ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः । अत्र वर इदं व्यनक्तियत् भगेन, अर्यम्णा, सवित्रादि कैश्च देवैः त्वं मह्यं दत्ताऽसि । मम सौभाग्याय ते हस्तं गृह्णामीति । ततः पुनरपि वरो ब्रवीति यत्—

ॐ अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहम् । सामाऽहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम् ।

अत्र स कथयति यत् अहं विष्णुस्वरूपः, त्वंलक्ष्मी स्वरूपा, अहंसामः त्वं ऋचा, अहं द्यौः, त्वं पृथिवीति । अहो कीदृशं भावगांभीर्यम् कीदृशश्चापूर्वो विचार विशेषः ।

ॐ तावेहि विवहावहै सह रेतो दधावहै, प्रजां जनयावहै, पुत्रान् विन्दावहै बहून् । अतः हे वधु आगच्छ, विवाहं करवावहै । विवाहस्य कीदृशः रम्यः आदर्शः उपलभ्यते ?

ॐ ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ ।
पश्येम शरदः शतंजीवेम शरदः शतं शृणुयाम शरदः शतम् ।।

वधूवराभ्यां जरदष्टित्वं काम्यते । अत्रेदमपि गम्यते यत् अग्नौ पतितः लाजा-कणः यथा तुषाद् वियुज्यते, तथा कलहायमानौ दम्पती परस्परं वियोगमाप्स्यत इति ।

लाजा होमस्य मधुरं वर्णनं कालिदासोऽपि करोति—अजेन्दुमती विवाह प्रसङ्गे ।

'हविः शमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।
कपोल संसर्पि शिखः स तस्या मुहूर्तं कर्णोत्पलतां प्रपेदे ।।

(रघु० ७।२६)

**(४) अश्मारोहणम्—**

ॐ आरोहेममश्मानमश्मेव त्वं स्थिरा भव। अभितिष्ठ पृतन्यतोऽववाधस्व पृतनायतः।

(१) अनेन विधिनेत्थं प्रतीयते यत् वधूवरौ स्वजीवने अविचलतया अश्मन इव द्रढीयसा स्वरूपेण स्थास्यतः।

(२) आपत् द्रढीभूतौ तौ वियोक्तुं न प्रभविष्यतः।

(३) अन्यदृष्ट्या निरीक्ष्यमाणे अश्मा शत्रुदमनस्यापि प्रतीकम्। अत एव च अश्मारोहणकाले योऽयं मंत्रो भण्यते तत्र अश्मेव स्थिरीभूय आवां शत्रोर्दमनं करिष्याव इति सूच्यते।

(४) पातिव्रत्यस्य स्थिरीभावनाया अपि अयं आदर्शः॥

**(५) ग्रन्थिबन्धनम्**

अत्रैवाग्नि प्रदक्षिणावसरे वधूवरयो र्वस्त्रप्रान्तस्य ग्रन्थिः संपाद्यते ग्रन्थि र्वा बध्यते।

(१) ग्रन्थिबन्धनस्येदं रहस्यं भवेद्यत् प्रथमं आवां वधूवरौ विभिन्नौ आस्व, किन्त्वधुना एकेन पवित्रग्रन्थिना वयं संयौजितौ स्वः।

(२) इदं ग्रन्थिरूपं एकं वैधानिकं बन्धनमपि प्रनिरूपयति।

(३) अस्मल्लग्न जीवनं प्रेम्णः सहानुभूत्याच बन्धनेन सदा संवलितं स्यादित्यपि सूच्यते।

**(६) सप्तपदी**

सप्तपदी संस्कारः हिन्दू विवाहस्यात्मा। सप्तानां पदानां समाहारः इति सप्तपदी। पाणिनिनाऽपि एतद्विषये उल्लेखः कृतः साप्तपदीनं सख्यम् इति।

अस्मिन्विधौ सप्त अक्षतपुञ्जान् अचलात्वेन परिकल्प्य, ततः प्रथमे पदे ऐश्वर्यं, द्वितीये बलम्, तृतीये उन्नतिः, तुरीये सुखं, पंचमे पशुसुखं, षष्ठे शत्रुनाशः, सप्तमेच अचला मैत्री प्रार्थ्यते। इदं तत्र अभिधीयते यत् "ॐ सखे सप्तपदा भव सा मामनुव्रता भवेति॥

मुख्यतः अत्र वधूः स्वस्य अनुव्रता भवेत् इति प्रार्थ्यते। हिन्दूधाराशास्त्रानुसारमपि यदा हि सप्तपदी संपन्ना भवति, तदा स विवाहविधिः अक्षुण्णः सन् वज्रलेपायते। अत्र सप्तमे पदे समाप्तेसति पाणिग्रहणमन्त्रोच्चारेण सा वरस्य वैधानिकी पत्नी भवति। अत्र विषये याज्ञवल्क्योऽपिभणति यत् 'नोदकेन न वाचा वा जायायाः पति रुच्यते। पाणिग्रहण संस्कारात् पतित्वं सप्तमे पदे॥

सप्तपदी (अग्नि प्रदक्षिणा)

लाजा होम समये चतुः कृत्वः वधूवरौ अग्निम्परितः प्रदक्षिणां कुरुतः । तत्र प्रथमवारत्रितयं यावत् वधूः अग्रे गच्छति, तदनु च वरः । अन्तिमे च प्रदक्षिणावसरे वरः प्रथम ततश्च वधूः ।

एतासां चतसृणां प्रदक्षिणानां तात्पर्यं कदाचित्पुरुषार्थचतुष्टये स्यात् । तत्र धर्मार्थकाममोक्षेषु धर्म अर्थ-काम साधने पत्नी अग्रे गच्छति । अत एव सा पत्नी, मन्त्रिणी, गृहिणी, सचिव, सखी मिथ, प्रियशिष्या ललिते कला विधौ । इति भण्यते । मनुरपि एतदर्थं सूचयन् कथयति यत् 'अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेदिति' ।

यदा च मोक्षपुरुषार्थस्य प्रसङ्गः समायाति तदा पुरुषस्य मार्गदर्शनमपेक्ष्यत इति प्रदक्षिणावसरे सः वरः अग्रसरो भवति ।

प्रदक्षिणायाः समये सम्पद्यमाने पाणिग्रहणे वरो वध्वाः पाणिप्रगृह्य प्रचलति । तत्र आश्वलायनगृह्यसूत्रं एकं रसिकं वस्तु निवेदयति तच्चेत्थं यत् 'गृभ्णामीति अङ्गुष्ठमेव गृह्णीयात्''' पुमांस एव मे प्रजा जायेरन्, अङ्गुलीरेव स्त्रीकामः रोमान्ते हस्तं साङ्गुष्ठमुभयकाम (आ. गृ. सूत्र. १।१।३''') अस्यायमाशयः यत् वरः वध्वा अङ्गुलीरेव गृह्णाति, तर्हि अङ्गुल्याः स्त्रीलिङ्गत्वात् इदमवगम्यते यत् सः पुत्रीः एव प्रजात्वेन कामयते, यदि चेदङ्गुष्ठं तर्हि पुत्रं, अङ्गुष्ठस्य पुल्लिगत्वात् यदि चेच्चोभयं तर्हि द्वयं कामयत इति ।

(७) हृदयस्पर्शः

सप्तपद्याः प्रतिज्ञानन्तरं वध्वाः स्कन्धं स्पृशन् अथवा पारस्कर भारद्वाज बौधायन मतानुसारं तदीयं हृदयं स्पृशन्, तद्भावनां वा कुर्वन् वरः यान् मंत्रान् पठति तत्रापि समुन्नततरा भावना अक्षिकुक्षीभवति ।

अत्र सः कथयति—

मम व्रते ते हृदयमादधामि मम चित्तमनु चित्तं तेऽस्तु ।
मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमिति ।

अस्यामृचि आदर्शपूर्णा भावनाः संनिहिताः वर्तन्ते । हे वधु । तव हृदयं मम व्रते राष्ट्र-देश समाज-सेवन कार्ये आदधामि । मामकीनानि हितकारीणि वचनानि त्वया एकमनसा उररी कर्तव्यानि । तदर्थं देवः प्रजापतिः तुभ्यं शक्ति प्रदेयादिति ।

अहो कीदृशः हृदयङ्गम आदर्शः ।

अन्ते च हिन्दू समाजानुसारं विवाहार्थं समेतो वरो नारायणः, वधूश्च लक्ष्मीः तदेवै तदपि नाभिविस्मर्तव्यम् । अथर्ववेदस्य दाम्पत्यमङ्गलमयी भावनां निवेदयन् विरमामि—सा चेत्थं—

अत्रत्य अयमपि आदर्शः यत् 'भूयो यथा मे जनन्नान्तरेऽपि त्वमेव भर्ता न च विप्रयोग इति ।

इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ ॥

(अथर्व. १४।१।२२)

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्—
विश्रामो हृदयस्य यत्र जरसा यस्मिन्न हार्यो रसः ।
कालेनावरणात्ययात् परिणते यत् प्रेमसारे स्थितं—
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥

इति दिक्

# देव भाषा-मीमांसा

ले० आचार्यः शारदाचरण दीक्षितः.

दैवीमानुषीभेदाभ्यां भाषाभेदस्य श्रुतिष्वप्यसकृद्वारमुपलभ्यमानत्वात् पुरायुगीयानां भाषाभेदाख्यानं संस्कृतासंस्कृतभाषाविधानमाम्नायते दीक्षितेन्द्रव्रतविधाऽववधान प्रदानाय भवताम् । यथा—

"अथ परिह्वालं वाचं वदति, नमानुषीं प्रसृताम्" इति ।।

अतएव यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः । ये याज्ञे कर्म्मणि यद्वानस्तद्वान इति संस्कृतामेव वाचमूचिरे, न तु जर्वाणस्तर्वाण इत्यसंस्कृताम्तस्या मानुषीत्वात् ।

किञ्च कृष्णाजिनग्रहणस्य 'शर्म्मासि' इति मन्त्रस्य ब्राह्मणे श्रूयते—

"चर्म्म वा एतम् कृष्णस्य । तदस्य तन्मानुषम् । शर्म्म देवत्रा ।

तस्मादाह—'शर्म्मासि' इति" ।

एतेनेह शर्म्मेति दैवभाषा शब्दः, चर्म्मेति मानुषभाषा शब्द इति भाषा भेद उपलभ्यते । अन्यत्रापि च—

"वाचो वा एषा व्यावृत्तिर्दैव्यै च मानुष्यै च मानुष्यै च यद्धिंकारः ।

स यद्धिंकृत्य प्रतिपद्यते, वाचमेव तद्व्यावर्त्तयति—

दैवीञ्च मानुषीञ्चेति" ।

अत्राह भाष्यकार :—

"दैव्यां वाचि हिंकारः प्रयुज्यते नतु मानुष्याम् ।
तदेतद्धिंकारस्य व्यावर्त्तकत्वम्" इति ।

एवमादिभिः श्रुतिभिः स्पष्टं पुरायुगे भाषाद्वय सत्तोपगम्यते । तत्र लोकव्यवहारेणानीताया मानुषभाषाया एव मानुषीत्वेनोपचारसंभवात् तद्व्यतिरेकेण गृहीताया अस्या

दवभाषायाः संस्कृतभाषापरनाम्न्याः शास्त्रभाषात्वमर्थादापन्नं भवति । अन्यथा-द्वयोर्लोक-भाषात्वाविशेषात् मानुषीतः पार्थक्यकरणं देवभाषाया असमञ्जसं स्यात् ।

देवभाषाशब्देन संस्कृतभाषाशब्देन च प्रतिपद्यन्ते ऽत्र तिस्रो भाषा लौकिकाः मन्त्र, ब्राह्मण, सूत्रादीनां ग्रन्थेषु च । संस्कारयोगस्य देवसम्बन्धस्य च तासु तिसृष्वपि भाषासु—अविशेषेण दृश्यमानत्वात् ।

भाषासु देवानां कः सम्बन्ध इति चेदत्रोच्यते । न तावद्देवानामिन्द्राग्नि वरुण-सोमादीनां सूर्य्यरश्मिस्थानां प्राणविशेषाणां सम्बन्धेन वाचो देव-देवभाषात्वमध्यवसीयते, तेषामनिन्द्रियाणां वागाद्यनुपपत्तेः ।

पञ्चविधा हि देवता रहस्ये व्याख्याताः—ज्योतिष्मत्यो रोचनावत्यो मन्त्र-वार्णिक्यो मनुष्यदेवताश्चेति ।

तत्र या मनुष्यदेवतास्तासामिह विवक्षा—तथाहि—

आसीत् किल ब्राह्मणानां पुरायुगे चातुर्विध्येन विभागो—विप्राश्च, ऋषयश्च, दवाश्च, ब्राह्मणाश्चेति, विद्याकर्म्म चैषां विभागे बीजम् । इहहि यज्ञकर्म्मणा दैवेन संस्कारविशेषेण यजमानस्य कश्चिदन्य एवात्मा दैवः सम्पाद्यते

"दैवो वा अस्य स आत्मा, मानुषोऽयम् । अमृतं वा अस्य
तद्रूपं देवरूपम्, मानुषं ह्यस्येदं रूपम् । स यदमूमेवोपदध्यात्—
नेमामपशिष्यात्—क्षिप्रे ह्यस्माल्लोकाद् यजमानः प्रेयाद्"

इति द्वियजुरिष्टकोपधानब्राह्मणादिश्रुतिभ्यस्तथावगमात् । त एव दैवेनात्मना-ऽभिसम्पन्ना यज्ञकृतामेतां दैवात्मसम्पत्तिमभिमन्वते—

"सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम ।
दिवं पृथिव्या अध्यारुहाम विदाम देवान् स्वर्ज्योतिः"—इति ।

तदित्थं दैवेनात्मना सम्पन्ना एव ते कृतकृत्या विद्वांसस्तदात्वे 'देवा' इत्याख्या-यन्ते स्म । श्रूयते च—

"द्वया वै देवाः । देवा अहैव दवाः । अथ ये ब्राह्मणाः
शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः" इति ।

तेषामेषां मनुष्यदेवानां संव्यवहारे या वाक् प्रयुज्यते सा देवभाषा नाम । दृश्यन्ते हि याज्ञेकर्म्मणि यथायथं तासां तिसृणामप्युपयोगाः, मन्त्रैश्च प्रैषैश्च परिकर्म्मि-शमादेशैश्च । तस्मात् तिस्रोऽपिता देवभाषाः स्युः । एवं तिसृष्वप्यासु वैयाकरणाः पदसमाससन्धिविकारनियमा यथायथमनवर्त्तन्ते । समाससन्धिविकारनियमेषु च संस्कार-शब्दं व्यपदिशन्ति ।

"स्वरसंस्कारयोश्छन्दसि नियमः"

इत्येवं प्रतिज्ञाय प्रातिशाख्ये भगवता कात्यायनेन स्वरनियमानां सन्धिसमास-नियमानामेव चोपदर्शितत्वात् । एताभ्यस्तिसृभ्योऽतिरिक्तासु तु लोकभाषासु कुत्रापि सन्धिनियमाः समासनियमा वा विशिष्य नोपलभ्यन्ते । तस्मादेता एव तिस्रोभाषाः संस्कारयोगात् संस्कृताः स्युः ।

नन्वेवं तर्हि देवभाषात्वेन संस्कृतभाषात्वेन चासां तिसृणामपि ऐकधर्म्ये सिद्धे, किं निबन्धनं भाषात्रित्वमुपचर्यते—इति चेत् तत्रोच्यते ।

मन्त्रभाषा ब्राह्मणभाषयोर्भेदस्यातिसूक्ष्मतया दुरुपपादत्वेऽपि तृतीयायाः सूत्र-भाषायास्ताभ्यां भेदः स्पष्टमुपलभ्यते—नामभेदाद्, उपचारभेदात्, शब्दभेदात्, विभक्त्यादिभेदात्, उच्चारणभेदाच्च ।

तत्र तावत्पाणिनिश्छन्दः शब्देन प्रथमाद्वितीये, भाषाशब्देन तृतीयां व्यपदिशति, यास्कस्तु निरुक्तकारोऽध्याय इति प्रथमाद्वितीये आह ।

अथोपचारो भिद्यते—

द्वितीयायां वाक्यारम्भ पदं वै पदोत्तरं प्रयुज्यते ।

नत्वेवं तृतीयायाम् ।

"सं नो देवो वसुभिरग्निः सं सोमस्तनुभी रुद्रियाभिः ।
समिन्द्रो मरुद्भिर्यज्ञियैः समादित्यैर्नो वरुणो अजिज्ञपत्" ॥

इति मन्त्रे 'समजिज्ञपत्' इत्यस्य सोपसर्गाख्यातपदस्यावृत्तिविवक्षायामादि-[illegible]वृत्तिः क्रियते । नत्वेवं तृतीयायामुपचार इष्यते ।

शब्दाश्च भिद्यन्ते शुनुकं छुबुकमिति प्रथमाद्वितीययोः, चिबुकमिति तृतीयायाम् । [illegible] शतुद्रिरन्ययोः । वगला तृतीयायाम्, वगलेत्यन्ययोः । एवं सब्दसहः, समरारात्रिः, यव्या मासाः सुमेकः सम्वत्सरः—इत्येतेषु सब्दादयः प्रथमाशब्दास्तृतीयायां न प्रयुज्यन्ते ।

अथ विभक्तिषु सूत्रभाषायान्तु चत्वारि—देवः, देवो, देवाः, देवासः इति । हरी [illegible] 'देवा' इत्येव द्विवचनमिष्यते नत्वेवं तृतीयायाम् । आदिति [illegible] एवोत्तरं प्रयुज्यते तृतीयायाम् । अन्यत्र तु पृथगपि । यथा—

"आद् रात्री वासस्तनुते सिमस्मै"

इत्यादिषु ।

आख्यातपदान्यपि 'सस्ति' चाकशीतीत्यादीनि प्रथमायां प्रयुज्यन्ते, न तृतीयायाम् । भवति, भवात्, भविषत्, भविषात्, इत्यादयो लेट् प्रयोगा न तृतीयायाम् ।

उपसर्गा इह प्रथमायां द्वितीयायाञ्च स्वातन्त्र्येण प्रयुक्ता विभक्त्यापि युज्यन्ते—अतीनि कर्म्माणीत्यतिशब्दः । प्रति प्रतीनिकरोति इन्द्रो वै सर्वान् देवान् प्रतिप्रतिरिति च प्रतिशब्दः । न त्वेवं तृतीयायाम् । निरुक्ते यास्क आह—

"नेति प्रतिषेधार्थीयो भाषायाम्,
उभयमन्वध्यायं—प्रतिषेधार्थीयः
पुरस्तादुपचारः, उपमार्थीय
उपरिष्टादुपचारः ।" इति ।।

अथ वर्णमातृकापि प्रथमायाश्चतुः षष्ठिवर्णा निर्दिश्यते, पञ्चाशत्तु तृतीयायाः । दुस्पृष्टयमादीनां प्रथमावर्णानामत्र भाषायामप्रयोगात् ।

अथोच्चारणं प्रथमाया यथायथमुदात्तादिभिरेव स्वरैर्नियम्यते, तृतीयायास्तु कमचारेण । दिग्दर्शनमेतत् ।

प्रत्यक्षन्तु वेदग्रन्थानाकलयतां संस्कृतविद्यानिष्णातानां पदे पदेऽयमुपतिष्ठते भाषाभेदो वैलक्षण्योपपादकैः बहुभिरन्यान्यप्रकारैः ।

तदित्थं सिद्धे मन्त्रब्राह्मणसूत्रभाषाणां भेदे, प्रश्नोऽयमुपतिष्ठते—

किमासां सर्वासामेव देवभाषाणां शास्त्रभाषात्वमास्थाय—अलोक भाषात्वं प्रत्याख्यायते, उतासामेकस्या एव कस्याश्चित्—इति । यदि सर्वासां, तर्हि का नाम सा चतुर्थीभाषा भविष्यति या मानुषीत्वेन विश्रुता श्रुतिषु ।

विलुप्तासेदानीमितिचेद्—एवमपि तस्याः केनचिल्लक्षणेनावशिष्टेन भवितव्यम् । सर्वासां हि भाषाणां प्रकृतिविकृतिभावो धारावाहिकतया प्रवर्त्तमानो नियत्यासिद्धो लोकेऽनुभूयते ।

सायद्येताभ्यस्तिसृभ्योऽतिरिक्ता काचिन्मानुषीभाषा पुरायुगेऽभविष्यत्—नूनं तर्हि तद्विकृत्या सम्पन्ना काचिदन्या भाषेदानीमपि लोके क्वचिदद्रक्ष्यत । नच पश्यामः, तस्मान्नासीन्नूनमन्या मानुषीभाषेति मन्यामहे ।

अपि च 'शर्म्मेति' दैव्यां 'चर्म्मेति' मानुष्याम् । नेत्युपमार्थीयो दैव्यां प्रतिषेधार्थीयो भाषायाम्—इत्यादिभिः प्रदर्शितैर्निदर्शनैरासामेवान्योऽन्यभेदो विवक्षितो दृश्यते । तस्मान्नासीन्नूनमन्यामानुषी भाषेति मन्यामहे ।

अपि च प्रचलितलोकभाषातिरिक्तायां भाषायां शास्त्रनिर्म्माणमेव नोपपद्यते । शास्त्रनिर्म्माणस्य लोकोपकारार्थतया लोकप्रत्ययावहभाषयैव निर्म्मातुमौचित्यात् ।

न चाद्यत्वे इव तदात्वेऽपि शास्त्रिकुलप्रणीतायाः शास्त्रमात्रप्रतिष्ठितायाः अस्याः संस्कृतभाषायाः प्रत्युत्पन्न मात्राया अर्थग्रहणे पुरायुगीयाः साधारण विद्वांसो वा क्षमतामापन्नाः सम्भाव्यन्ते । न वा प्रचलितभाषायां सत्यामपि तामुपेक्ष्य वृथैव नवभाषानिर्म्माणे प्राचामध्यवसायः सम्भाव्यते । तस्मान्नासीदेताभ्योऽतिरिक्ता काचिन्मानुषी भाषेति युक्तमुत्पश्यामः ।

अपिच कस्मिंश्चिदपि देशे आबालवृद्धमापामरमाविद्वत्कुलं सत्रा सर्वलोकानां सर्वव्यवहारविषयतया प्रचरिताया एव मातृभाषाया भाषात्वं सम्भाव्यते । अत्र देशे देशान्तरे वा, वर्त्तमानकाले कालान्तरे वा सर्वथापि लोके व्यवहारपथमप्राप्तायास्तु कस्याश्चिदपि वाचो भाषात्वे दृष्टान्तं नोपलभामहे । तस्मादासां देवभाषाणां-लोकभाषात्वं नासीदिति न प्रतिपद्यामहे । न वा देवभाषातिरिक्ताया मानुष्याः कस्याश्चिद्भाषायास्तदात्वे सत्तासीदिति श्रद्धाम् आनयामहे । तथा चासीदासामेव तिसृणामेकस्या देवभाषात्वम्—अन्यस्या—मानुषीत्वमिति सुनिभृतं प्रत्येतव्यम् ।

तत्र कस्या दैवीत्वं कस्या वा मानुषीत्वमित्यत्र वयं ब्रूमः—

श्रुतिपठिताभ्यां दैवीमानुषीशब्दाभ्यां मन्त्रभाषा-ब्राह्मण भाषयोर्विवक्षाऽस्तीति प्रतिजानीमः । मन्त्रविधानाम्—ऋग्यजुःसाम्नां दैवपदार्थतया वक्ष्यमाणतया तत्सम्बन्धेन मन्त्रभाषाया एव दैवीत्वोपपत्तेः ।

अथ ऋक्त्वादिव्यपदेशमलब्धायास्तु प्रचलितायाः ब्राह्मणभाषाया मानुषीत्वं युज्यते वक्तुम् । तथाच श्रूयते चयनश्रुतौ—

"तस्य वा एतस्याग्नेर्वागेवोपनिषत्
वाचा हि चीयते—ऋचा यजुषा
साम्नेति नु दैव्या । अथ यन्मानुष्या
वाचाह—'इतीदं कुरुतेदं कुरुतेति'
नद्वह तया चीयते । सा वा एषा वाक्
त्रेधा विहिता ऋचो यजूंषि सामानि ।
तेनाग्निस्त्रेधा विहितः" इति ।।

इह हि दैव्या च मानुष्या च वाचा चयनं निदर्शयन्ती श्रुतिः स्पष्टमेव ऋग्यजुःसामात्मिकाया मन्त्रभाषाया दैवीत्वम्, इतरस्याश्च तदात्वे लोकप्रचरिताया ऋत्विजां ब्राह्मणानां व्यावहारिक्या मानभाषाया मानुषीत्वं व्याकरोति । मानुषीब्राह्मणभाषैव स्यात् । यथाहि—

"अग्नेस्तनूरसि वाचो विसर्जनमिति"

मन्त्रब्राह्मणे श्रूयते—

"यां वा अमूं हविर्ग्रहीष्यन् वाचं यच्छति—अत्र वै तां
विसृजते । स यदिदं पुरा मानुषीं वाचं व्याहरेत् ।
—तत्रो वैष्णवीमृचं वा यजुर्वा जपेत् ।
तस्यो हैषा प्रायश्चित्तिः" इति ।

इह हि प्रणीता प्रणयनादूर्ध्वम् आहविष्कृदुद्वादनान्मानुष्या वाचा भाषणं प्रतिषिध्यते । कामं तु ऋचो यजूंषि प्रयुज्यन्ते । ततो हविष्करणकाले जायाम् अन्यं वा हविष्कृतमाह्वयति । तत्र "हविष्कृदेहि" इति मानुषीं वाचमुक्त्वा तदूर्ध्वं यथेच्छं मानुष्या व्याहरति ।

"हविष्कृदेहि—इति च ब्राह्मणभाषा भवति । तथाच श्रूयते—

"तानि वा एतानि चत्वारि वाचः—
एहीति ब्राह्मणस्य । आगहि आद्रवेति
वैश्यस्य राजन्य बन्धोश्च । आधावेति
शूद्रस्य । स यदेव ब्राह्मणस्य, तदाह"—

इत्यादिना ब्राह्मणभाषाया एव मानुषीत्वेन निरूपितत्वात् ।

नन्वेवं तर्हि ब्राह्मणभाषा सूत्रभाषयोर्देवभाषात्वं न स्यात्—इति चेदिष्टापत्तिः । मन्त्रभाषातिरिक्तासु भाषासु देवसम्बन्धाभावेन देवभाषात्वव्यवहारस्यानौचित्यात् ।

ननु चोक्तं तिसृष्वपि तासु भाषासु मनुष्यदेवानां संव्यवहारसम्बन्धोऽस्तीति चेत्—सत्यमुक्तम् ।

न खलु मनुष्यदेवानां संव्यवहारसम्बन्धेन देवभाषात्वमध्यवस्यामः । तथात्वे ब्राह्मणसूत्रभाषयोरपि देवभाषात्वापत्तेः ।

श्रुतिविरुद्धं तु तयोर्देवभाषात्वम्, तस्मादिह देवानाम् इन्द्राग्निवरुणसोमानां प्राणविशेषाणां सूर्य्यरश्मिप्रतिपन्नानां सम्बन्धेनैव वाचो देवभाषात्वमास्थेयम् । दैवसंस्कार—योगादेव तस्याः संस्कृतभाषात्वञ्च ।

अथ कः खलु भाषाविशेषे प्राणदेवतानां सम्बन्ध इति चेत्—

देवसम्बन्धिनां प्राणविशेषाणाम् ऋग्यजुःसाम्नां दिव्यवागविधानामिह मनुष्यवाग्विधाभिर्यः सम्बन्धस्तमिह देवतासम्बन्धमध्यवस्यामः ।

ननु ऋग्यजुःसामयोगाद्दैवीत्वेऽभ्युपगम्यमानेऽपि तासां तिसृणां देवभाषात्वमनिवार्य्यं प्रसज्जेत । "तेषाम् ऋक् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या शेषे यजुः

शब्दः"—इत्येवमाचक्षाणैः जैमिन्यादिभिः पद्यगद्यगेयेषु ऋग्यजुःसामपदानां व्युत्पादितत्वात् तासां पद्यादिविधानां मन्त्रभाषावद् ब्राह्मणसूत्रभाषयोरपि निसर्गसिद्धेरिति चेन्न—

जैमिन्यादिस्मरणस्य प्रतीकप्रदर्शनमात्रपरत्वात् । अन्यथा—पद्यगद्यगेयमात्राणाम् ऋगादित्वेऽभ्युपगम्यमाने रघुवंशादिश्लोकानां बृहत्कथादिगद्यानां रागरागिन्युदाहरणगीतीनाम् ऋक्त्वं यजुष्ट्वं सामत्वं वा प्रसज्येत ।

"इतीदं कुरुत" इत्येवमादिरूपायाः प्रश्लिष्टपठितायाः वाचोऽपि यजुष्ट्वापत्तौ ऋग्यजुःसामातिरिक्तत्वेन-अभिप्रेतायाः तस्या मानुषीत्वाख्यानमपि श्रुतौ व्याकुप्येत । तस्मान्न पद्यन्वादिमात्रम् ऋगादित्वमास्थेयम् ।

किन्तर्हि तासाम् ऋगादीनां लक्षणमितिचेदत्रब्रूमः—महोक्थलक्षणैरन्तर्भावितैः प्रणीतानां सायतन पृथ्वीदेवताच्छन्दः समभावितच्छन्दोभिः कृतपरिच्छेदानां वाचाम् ऋक्त्वम् । महाव्रतलक्षणैस्तथाकृतानां वाचां सामत्वम् । अग्निलक्षणैस्तु प्रणीतानाम् अनायतनान्तरिक्ष देवतावतच्छन्दस्कृतानां वाचां यजुष्ट्वमिति ।

"त्रयो हवै समुद्राः—अग्निर्यजुषाम् ।
महाव्रतं साम्नाम् । महदुक्थम् ऋचाम्" ।
इत्यादि श्रुतिभ्यः ।

यद्यपि श्रुत्यन्तरे—ऋचो यजूंषि सामानि च महोक्थेष्वेवान्तर्भाव्यन्ते—

"स वा एष वाचः परमोविकारो
यदेतन्महदुक्थम् । तदेतत्पञ्चविधम्—
मितममितं स्वरः सत्यानृते—इति ।
ऋग्गाथाकुम्व्यां—तन्मितम् । यजुर्निगदो
वृथावाक्—तदमितम् । सामाथो यः
कश्च गेष्णः सस्वरः ओमिति सत्यम्" इति ।।

तथापि यावन्मितं तस्यैवेह महोक्थपदेन विवक्षा द्रष्टव्या । यजुरादीनामग्न्यादिपदैः पृथक्त्वेनेह विवक्षितत्वात् ।

अयमत्राभिसन्धिः—ऋगादीनामतिनिगूढपदार्थतया तद्विज्ञानान्यथानुपपत्तेस्तद्विज्ञानोपायभूता वैदिकाः केचनपदार्था आदौ प्रतिनिर्दिश्यन्ते ।

अस्ति हि सर्वेषामेषां प्रथमोपादानभूतः कश्चिदेकः पदार्थः पुरुषो नाम,—
"पुरुष एवेदं सर्वं यद्भूतं यच्चभाव्यम्"

इत्यादि श्रुत्या सर्वस्यास्य जगतः पुरुषतादात्म्येनैव गृहीतत्वात् । स ब्रह्मकर्म्मोभयात्मकः । ब्रह्मज्ञानम्, कर्म्मक्रिया—एकेनान्यदविनाभूतं पुरुषरूपं भवति । तेन कर्म्म-

विशिष्टस्य ब्रह्मणः कर्म्मत्वम् इति सर्वाणीमानि कर्म्माणि । ब्रह्मविशिष्टस्य च कर्म्मणो ब्रह्मत्वम् इति सर्वं खल्विदं ब्रह्म । यत्त्वौपनिषदाः सजातीयविजातीय स्वगतभेदत्रय-शून्यम् इहाद्वैतमातिष्ठन्ते तदिदं सत्तैकत्व सापेक्षं द्रष्टव्यम् । सत्ताभेदस्यैव सर्वत्र वस्तुभेदे-ऽसाधारणकारणत्वात् । तावता न सदेकत्वे कर्म्मप्रतिषेधे वा तेषां पक्षपातः ।

"ईशा वास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्"

इत्यादिभिः श्रुतिभिः अकर्म्मकत्वस्य कर्म्मबहुत्वस्य च पारमार्थिकतयैवोपदिश्य-मानत्वात् । मिथ्यात्वन्तु । कर्म्मणामेषां परसत्तया सत्तावत्त्वादुपपद्यते न तु सत्ताना-श्रयत्वं मिथ्यात्वम् इह विवक्ष्यते ।

तथा च सन्त्येव ब्रह्मैकसत्तया सत्तावन्ति सर्वाणीमानि कर्म्माणि, तेषामेवेदमनु विज्ञानं बहुशाखं वेदशास्त्रम् । तच्चेदं ब्रह्मेत्युच्यते । सर्वेषां कर्म्मणां ब्रह्मतयाऽस्य तद्विज्ञानरूपत्वात् ।

यत्त्वस्य कर्म्मातीतविशुद्धब्रह्मप्रतिपादकत्वात् ब्रह्मत्वमातिष्ठन्ते केचन शुष्क-श्रद्धदानाः—तदसत् । तस्य वाङ्मनसागोचरतया निर्विषयत्वात् ।

"संविदन्ति न यं वेदा
विष्णुर्वेद न वैविधिः ।
यतो वाचो निवर्त्तन्ते
अप्राप्य मनसा सह"

इति श्रुतेश्च ॥

स चैष वेदप्रतिपाद्यः कर्म्मविशिष्टब्रह्मात्मकः पुरुषः सर्वज्ञो ब्रह्मत्वात् सर्वशक्ति-मांश्च कर्म्मत्वात् । तत्र ज्ञानसापेक्षः प्रजापति शब्दः । क्रियासापेक्षो यज्ञशब्दः । यज्ञः प्रजापतिरित्येकोऽर्थः । स चानेकरूपो भवति, महतो महीयांश्चाणोरणीयांश्च । तत्र महतो महीयान् परमेश्वरः । तच्छरीरान्तर्गता अन्ये बहवः प्रजापतयो यज्ञाः । तत्राप्ये-कैकस्यान्ये बहव इत्येवं क्रमेणान्त्या अणोरणीयांसोऽनन्ताः प्रजापतयो यज्ञाः ।

तस्य चेदमेकैकस्य यज्ञस्य शरीरं पञ्चधा विभज्यते । यः सर्वमध्योनाभ्यंशः—सोऽन्तरतमः, सोऽनिरुक्तः प्रजापतिर्नाम । यः सर्वान्त्यः—पृष्ठांशः—सः परमः, स वषट्कारोनाम । प्रजापतिञ्च वषट्कारञ्चान्तरा यज्ञस्य त्रयो भागाः । प्रथमो मध्यम उत्तमश्चेति । तेष्वेव तेषु त्रिषुस्थानेषु प्रतिस्थानं प्राणाश्च रय्यश्च पुरुषाः स्युः । तत्रैताः प्राणजातयः चतुर्विधा लक्ष्यन्ते—परोरजाश्च आग्नेय्याश्च सौम्याश्च आप्याश्चेति । सर्वा अप्येताः पञ्चभिर्भक्तिभिः समानावयवपर्वाणः शब्दस्पर्शरूपरसगन्धशून्यत्वेन विधार-कत्वेन च समानधर्म्माणः, परमेण मध्यमेनावमेन वा एकैकेन प्रजापतिना सम्वत्सरेण समानायतनाः, परमेण वा पुष्करेण वा दहरेण वा आकाशेन समानावपनाश्चेष्यन्ते । कर्म्माणि त्वासां प्रभिद्यन्ते ।

तत्राऽग्नेय प्राणेभ्यस्त्रयस्त्रिंशद्देवा अग्न्यादिविष्णवन्ता विवर्त्तन्ते । श्रूयते हि—

"इति स्तुतासो असथा रिशादसो योऽस्य
त्रयश्च त्रिंशच्च । मनोर्द्देवा यज्ञियासः" । इति ।।
"अग्निर्वै यज्ञस्यावराध्यो विष्णुः पराध्यः" । इति च ।।

अग्निर्वै देवानामवमो, विष्णुः परमः, तदन्तरेण सर्वा अन्या देवताः । एतेवै यज्ञस्यान्त्ये तन्वौ "यदग्निश्च विष्णुश्च" इति च । त एते नित्यमत्रैव सन्निहिताः संस्तब्धास्तिष्ठन्ति, नत्वन्यत्र यथेच्छं विचलन्ति ।

यज्ञशरीरारम्भकत्वाद्—आयज्ञसंस्थं निरात्मकतयाऽवस्थानासम्भवात् । तत्रापि चैते प्रतिनियतसन्निवेशक्रमा उपनिविश्यन्ते ।

"बृहस्पतिः पूर्वेषामुत्तमो भवति,
इन्द्र उत्तरेषां प्रथमः"

इत्यादि श्रुतिभ्यस्तथावगमात् ।

प्रतियज्ञं चैवमेते प्राणाः, प्राणेभ्यो देवाः, देवेभ्यो लोका भेदेन द्रष्टव्याः । तत्र प्रथमे स्थाने अग्निज्येष्ठा अष्टौ वसवः, स तावानयं पृथ्वीलोकः अग्निर्लोकपतिः । तदूर्ध्वं सोमज्येष्ठा एकादशरुद्राः, स तावानन्तरिक्षलोकः, वायुर्लोकपतिः तदूर्ध्ववरुणज्येष्ठा द्वादशादित्या विष्णुपरमाः सन्निविशन्ते, स तावानसौ द्युलोक, आदित्योलोकपतिः । इत्यञ्च यावानयं विष्णुस्तावानेव यज्ञ. स्वं रूपं धत्ते । तस्येयं संस्था वषट्कारः । त एते सर्वेऽप्यग्न्यादयो विष्णवन्ता देवा एकोऽग्निः—

"अग्निः सर्वा देवताः" इति श्रुतेः

सोऽयमग्निः प्रजापत्युपक्रान्तो वषट्कारान्तो विक्रममाणस्त्रीन् अप्येतान् लोकान् परिव्याप्नोति ।

एवमेते समानायतनास्त्रिस्थाना ये सोम्याः प्राणाः—तेभ्यः त्रिस्थानाः पितरो विवर्त्तन्ते—अवमा, मध्यमाः परमाश्चेति ।

"उदीरतामवर, उत्परास,
उन्मध्यमाः पितरः सोऽम्यासः"

इत्यादिश्रुतेः ।।

सर्व एवैते पितर एकः सोमः । स हि वषट्कारोपक्रान्तः प्रजापत्यन्तो नित्यमग्नौ हूयमानस्त्रीनप्येतान् लोकान् यथायथमृत्वात्मना परिव्याप्नोति ।

एवमेभिः सनातनायतनास्त्रिस्थाना आप्याः प्राणाः तत्रान्तर्भवन्ति । तेभ्यो वेदा ऋग्यजुःसमाख्या महोक्थाग्नि महाव्रतलक्षणाः प्रवर्त्तन्ते ।

एवमेषामाप्यप्राणानां घनः सरस्वानित्युच्यते । इन्द्रश्च स सर्वलोकव्यापी सर्वरसः । आसमेवाप्यप्राणजातीनां याः पञ्चविभक्तयः ताः सरस्वत्यः--ता एवापः । ता एव इह वाचो विवक्षिताः । एतत्परतयैव श्रूयते —

"सो-पोसृजत-वाच एव लोकात् ।
वागेवास्य साऽसृज्यत । सेयं
सर्वमाप्नोति यदिदं किञ्च ।
यदाप्नोत् तस्मादापः ।
यदवृणोत् तस्माद्वा" ।। इति ।।

अन्यत्रापि श्रूयते—

"अथो वागेवेदं सर्वम्" इति—

एतामेव नित्यां प्रजापतितादात्म्यसम्पन्नां वाचमुपलक्ष्य लक्षणज्ञाः विचक्षणाः स्मरन्ति—

"अनादि निधना नित्या
वागुत्सृष्टा स्वयं भुवा ।
आदौवेदमयी दिव्या
यतः सर्वाः प्रवृत्तयः" ।। इति ।।

अनिरुद्धाद्धि प्रजापतेः समन्तादेता वाच उत्सृज्यन्ते नित्याः । आभ्य एवोपादानभूताभ्योऽद्भ्यः सर्वमिदमुत्पद्य प्रवर्त्तते, सर्वे च व्यवहाराः तत एव प्रवर्त्तन्ते । ऋग्यजुःसामात्मिकाचेयं वागस्मिन् महतो महीयसि यज्ञशरीरे नित्याऽपि तदन्तर्गतेषु यज्ञशरीरेषु प्रतियज्ञं तेन तेन यज्ञेन सहैवान्ये जायन्ते ऋग्यजुःसामविशेषाः— इति तत्तात्पर्य्येणैवासां जन्यत्वमपि श्रूयते—

"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत" ।।
इत्यादिषु ।

अतएव नित्यानित्ययज्ञानां प्राधान्या प्राधान्यविवक्षा तारतम्यानुरोधेन—वेदानामीश्वर त्वमीश्वरनिश्वसितत्वमीश्वरजन्यत्वम् ऋषिजन्यत्वञ्चेति—सर्वं विरुद्धमप्यविरुद्धं

यथायथमुपपद्यते । ऋचोयजूंषिसामानीति तिस्रो वाग्विधा नित्यायास्ते वाचो नित्या एव स्युरनित्याया आपेक्षिका नित्यानित्याः ।

तत्र ऋक्सामे एकस्यैव तत्वस्य सङ्कोचविकासाभ्यां रूपभेदाद् भिन्नसंस्थाने भवतः यजुस्तु तत्वान्तरम् । तेषु ऋक्सामाभ्यां न किञ्चिज्जन्यते । ते एवाश्रित्य स्थितं पुरुषलक्षणं तु यजुः सर्वमिदं चराचरं जनयति । तथा च श्रूयते—

"अयं वाव यजुर्योयं पवते ।
एषहि यन्नेवेदं सर्वं जनयति ।
एतं यन्तमिदमनुप्रजायते ।
तस्माद् वायुरेव यन् ।
अयमेवाकाशोजू-र्यदिदमन्तरिक्षम् ।
एतं ह्याकाशमनुजवते ।
तदेतद् यजुर्वायुश्चान्तरिक्षञ्च ।
यच्च जूश्च तस्माद् यजुरेष एव यदेषह्येति ।
तदेतद्यजुः ऋक्सामयोः प्रतिष्ठितम् ऋक्सामेवहतः

तस्मात् समानैरेवाध्वर्य्युर्ग्रहैः कर्म्म करोति ।
अन्यान्यन्यानि स्तुतिशस्त्राणि भवन्ति ।" इति ।।

"यजुषाऽध्वर्य्युर्ग्रहंगृह्णाति स उभे स्तुतशस्त्रे अनुविभवति,
उभे स्तुतशस्त्रे अनुव्यश्नुते" इति च ।।

ऋचा स्तूयते इति ऋङ्मयं स्तुतम् । साम्ना शस्यते इति साममयं शस्त्रम् ।

तेषामेषां वेदानां रस एवोपनिषत् । स च रसो विस्रस्तस्य प्रजापतेः शरीरात् समुत्पन्नाः समन्तात् प्रसृता आपः । एष खलु सम्वत्सरोनाम प्रजापतिः प्रजाः सृष्ट्वा विस्रंसते । विस्रस्तस्य रसोऽग्रंगच्छति, तमनुगच्छन्ति सर्वे देवा ऋक्सामाभ्यां यजुषा च तथा च श्रूयते—

"सः प्रजाः सृष्ट्वा व्यस्रंसत ।
प्रजापतेर्विस्रस्तस्याग्रं रसोऽगच्छत् ।
योऽस्य सोऽग्रं रसोऽगच्छत् महत्तदुक्थमिति ।
तमस्य तं रसम् ऋक्सामाभ्यामनुयन्ति,
यजुः पुरस्तादेति । तं सम्वत्सरे आप्नुवन्ति ।
तमध्वर्य्युर्ग्रहेणगृह्णाति । तस्मिन्नुदगाता महाव्रतेन रसं दधाति ।

सर्वाणि हैतानि सामानि यन्महाव्रतम् ।
तस्मिन् सर्वैः सामभीरसं दधाति ।
तस्मिन् होता महोक्थेन रसं दधाति ।

सर्वा हैता ऋचो यन्महदुक्थम् ।
तदस्मिन् सर्वाभिः ऋग्भी रसं दधाति ।
ते यदा स्तुवते, यदानुशंसति-अथास्मिन्नेतं
वषट्कृते जुहोति । तदेनमेष रसोऽप्येति ।
नवै महाव्रतमिदं स्तुतं पश्यन्ति नो महदिदमुक्थमिति ।
अग्निमेव पश्यन्ति । आत्माह्यग्निः तदेनमेते उभेरसोभूत्वा
पीत-ऋक् च साम च । तदुभे ऋक्सामे यजुरपीतः" इति ।।

एवमादिभिः बहुभिरेव श्रौतप्रकरणैः पृथिव्यन्तरिक्ष द्युलोकानाम् ऋग्यजुःसाम-वेदानाम् अग्निवाय्वादित्यदेवानां परस्परेणान्वाभक्तास्तिस्रः संस्था लभ्यन्ते । तेन प्राजापत्यरसात्मिकानामासां तिसृणां वाग्विधानामग्निभक्ता ऋचः प्रथमोलोकः, वायु-भक्तानि यजूंषि द्वितीयो लोकः, आदित्यभक्तानि सामानि तृतीयो लोकः ।

यत्तु श्रुत्यन्तरे यजुषां प्रथमलोकत्वम्, साम्नामन्तरिक्षत्वम्, ऋचां तृतीयलोक-त्वमित्येवं विरोधेन श्रूयते । यथा—

"प्रजापतिरिमान्लोकानैप्सत् । स एतम्
आत्मानमग्निं व्यधत्त, तेनेमंलोकमाप्नोत् ।
स आत्मानं महाव्रतं व्यधत्त, तेनान्तरिक्षमाप्नोत् ।
स आत्मानं महदुक्थं व्यधत्त, तेनदिवमाप्नोत् ।
अयं वाव लोक एषोऽग्निः । अन्तरिक्षं महाव्रतम् ।
द्यौर्महदुक्थम् । तस्मादेतानि सर्वाणि सहोपेयाद्
अग्निं महाव्रतम्—महदुक्थम् । सह हीमे लोका असृज्यन्त" इति ।।

तदिदं पृथिवीस्थानां विदुषां पृथिवीप्राजापत्यमनपेक्ष्य सूर्य्यप्राजापत्यानुदर्शन-सापेक्षं द्रष्टव्यम् । स्पष्टं चेह सूर्य्यात्मकप्रजापतिस्थानीयत्वम् ऋगादीनामाम्नायते—

"सा या सा वाग् असौ स आदित्यः । सा वा एषावाक्
त्रेधा विहिता ऋचोयजूंषि सामानि, मण्डलमेवर्चः ।
अर्चिः सामानि । पुरुषो यजूंषि । यदेतन्मण्डलं तपति
तत् महदुक्थम्, ता ऋचः स ऋचां लोकः । अथ यदेतदर्चिः

दीप्यते—तन्महाव्रतम्, तानि सामानि, स साम्नां लोकः ।
अथ य एतस्मिन् मण्डले पुरुषः सोऽग्निः, तानि यजूंषि,
स यजुषां लोकः । सैषा त्रय्येव विद्या तपति उभयोरेतस्य
चार्चिष=, एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा, तस्मान्
महदुक्थमिति" ।

इत्थमेता ऋगादिबोधिकाः काश्चनश्रुतयोऽङ्गुलीनिर्देशमात्रेण इहोपदर्शिताः । न चैताः शक्यन्तेऽस्मिन् क्षुद्रलेखे निरवशेषार्थपरामर्शपुरस्कृतं वैशद्येन व्याख्यातुम् ।

इदमप्यत्राकलयन्तु । इह हि यज्ञविधायां सहस्रं परमा संख्या सहस्रकः प्रजापतिः । सहस्रे सर्वं परिसमाप्यते । अत एव एकाहमारभ्य सहस्रसम्वत्सरपरमाः सर्वे यज्ञाः विधीयन्ते । यज्ञशरीरे चाग्नेयप्राणाः सहस्रमंशवो नाम । सहस्रमहानि स्तोमाः ।

एवं सौम्यप्राणाः सहस्रंगावोनाम । तत्र त्रीणि शतानि त्रयस्त्रिंशच्च । वसूनामग्नेः । तावत्य एव रुद्राणां वायोः । तावत्य एव आदित्यानामादित्यस्य । अवशिष्टा सहस्रतमी प्राजापत्या कामधेनुरित्यन्यत्र तैत्तिरीयकादावाम्नातम् । एवमाप्यप्राणा अप्येते वाङ्मयाः सहस्रं शाखाशब्देनाख्यायन्ते । तत्र नवमीं यावत् ब्रह्मा एकविंशतिं यावदृचः । एकशतं यावद् यजूंषि । सहस्रं यावत् सामानीति वेदानां विज्ञानम् ।

यद्यपि चतुर्विधाः प्राणाः पूर्वं प्रतिज्ञाताः, तथापि परोरजसः प्राणस्य ब्रह्मरूपतया दैवतप्राणाभावादिह निरूपणं नापेक्ष्यते, इत्यतस्त्रिविधा एव प्राणा इह दर्श्यन्ते । तेष्वाग्नेयसौम्याप्यभेदात् त्रिविधेषु प्राणेष्वाप्यानां वाक्छब्देन, आग्नेयानां प्राणशब्देन, व्यपदेशा भवन्ति-इत्याहुः ।

तान्येतानि वाक्प्राणमनांसि प्रजापतिशरीरारम्भकद्रव्याणि नित्यमस्मिन् यज्ञशरीरे सन्निदधते । नित्यस्याविनाशिनः परमेश्वरस्य महतोमहीयसः प्रजापतेस्तैरेतै र्वाक्प्राणमनोभिरविनाभूतत्वात् । प्रत्येकमेतानि षट्त्रिंशत्सहस्राणि, प्रत्येकञ्चेतराभ्यां नित्यमन्वाभक्तान्यनिरूपकृतान्येव यज्ञरूपाणि भवन्ति । प्रत्येकं चैतान्यग्नि वाय्वादित्यानां देवानां भक्तिद्रव्यैः ऋषिच्छन्दः सवनस्तोमपृष्ठाज्यर्त्तुलोकादिभिः कृतरूपाणि देवभक्तिसंयोगादिव दैवानीष्यन्ते । अतएव चैतानि देवभक्तिसम्पन्नानि यज्ञशरीरस्थानि ऋग्यजु सामान्येव दैवीवाग् इति सिद्धम् । इयमेव च सम्बन्धविशेषात् क्वचिदन्यथापि श्रूयते --

"तस्यैव वाचः पृथिवी शरीरं ज्योतिरूपमयमग्निः ।
तद्यावत्येव वाक् तावती पृथिवी, तावानयमग्निः
पृथिव्यै चैनमग्नेश्च दैवीवागाविशति ।
सा वै दैवी वाक् यया यद्येव वदति तत्तद्भवति" इति ॥

इह हि पृथिवीपदेन सर्वलोकाधारभूता भूमिः परामृश्यते, अग्निपदेन च सर्वा देवताः । न तु प्रथमलोकमात्रे निष्ठाकार्य्या ।।

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभाविभर्म्यहमिन्द्राग्नी अहमश्विनोभा ।। १ ।।

मया सोऽन्नमत्ति, योविपश्यति, यः प्राणिति ईं श्रृणोत्यक्तम् ।
अनन्तवो मां त उपक्षियन्ति श्रुधिश्रुत श्रद्धिवंते वदामि ।। २ ।।

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।। ३ ।।

अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूव" ।। ४ ।।

इत्यादिभिः सूक्तमन्त्रैरस्या वाचः सर्वलोकव्यापित्वेनाख्यातत्वात् ।

तदित्थमस्या एव तावदुपपद्यते वाचो मुख्यं दैवीत्वम् । तस्या एव साधर्म्य-संस्कारेण संस्कृताया मनुष्यदेवानां प्रथमाया भाषाया अपि सम्पाद्यते दैवीत्वम्—तेनैषा संस्कृता देवभाषा भवति ।

अत्रायमभिसन्धिः—

यच्च यावच्चेदं क्वचित् किञ्चिद् दृश्यते—प्राकृतं वा कृत्रिमं वा, प्रत्येकं स एकैको यज्ञ एवानुवर्त्तते । पृथ्वी वा सूर्य्यो वा चन्द्रो वा वृक्षो वा मनुष्यो वा सर्व एव यज्ञात्मनैव जीवनं धत्ते ।

सर्व एवायं वेद्यामग्नौ सोमाहुत्या स्वं स्वमात्मानं धत्ते । सर्वेषां यज्ञत्वाविशेषा-दिह यज्ञेनैव यज्ञ इज्यते । बहवो यज्ञा महतो यज्ञस्यान्नं भवन्ति । यज्ञो हि देवानामन्नं श्रूयते । निसर्गेण तायमानोऽयमाध्यात्मिको यज्ञः प्रतिपलमाधिदैविके यज्ञे संसृज्यते । श्रूयते च—

"अहरहर्वा एष यज्ञस्तायते, अहरहः सन्तिष्ठते, अहरहरेनं
स्वर्गस्य लोकस्य गत्यै युङ्क्ते, अहरहरनेन स्वर्गं गच्छति" ।। इति ।।

स एष सर्वोऽयमाधिदैविको वाऽऽधिभौतिको वा ऽऽध्यात्मिको वा यज्ञो देवैरे-वाग्निवाय्वादिभिः प्रवर्त्तितत्वात्—देवयज्ञ एवोच्यते, तमेतमेवं दैवं यज्ञं याथातथ्येन दृष्ट्वा तत्सादृश्येनैव लोके यज्ञाः प्रवर्त्यन्ते, यद् यावदिह जायते यज्ञादेव जायते,

"देवा ह वै सत्रमासत—श्रियं गच्छेम, यशः स्याम,

अन्नदाः स्यामेति । तथो एवेमे सत्रमासते, ये सत्रमासते—

श्रियं गच्छेम, यशः स्याम, अन्नदाः स्यामेति" ।

"कामैर्हस्य पुरर्षयः सत्रमासते—असौ नः कामः—

स नः समृद्ध्यताम्" ।

इत्यादि श्रुतिभ्यो यज्ञस्य सर्वकामार्थत्वावगतेः । तत्र चैतस्मिन् लौकिके यज्ञे सर्वा आवृतः सर्वे पदार्थाः सर्वाश्च ता वाचो देवयज्ञानुसारेणैव कल्प्यन्ते । तथा च श्रूयते—

"देवानां वै विधामनुमनुष्याः" ।। इति ।।

"तद्वा एतत् क्रियते यद्देवा अकुर्वन्" इति च ।।

"नोपदध्यान्नेदतिरेचयानीति ।

एतावद्वा एतद्देवा अकुर्वन्" ।। इति च ।।

'यद्देवा अकुर्वंस्तत्करवाणि" ।। इति च ।।

अपि च श्रूयते—

"यद्वै यज्ञेऽभिरूपं तत्समृद्धम्" ।। इति ।।

तथा च यथा दैवे यज्ञे दैवान्येव सर्वाणि यज्ञसाधनानि भवन्ति, एवमिहापि लौकिके यज्ञे सर्वाण्येव साधनानि दैवेन संस्कारेण संस्कृत्य संस्कृत्य दैवान्येव सम्पाद्यन्ते, असंस्कृतानामयज्ञियत्वात् ।

संस्कारेण चायं यजमानो, ब्राह्मणाः, अग्नयः, प्रोक्षण्यादिद्रव्याणि च, दैवान्येव भूत्वा दैवैर्युज्यन्ते । तत्रैतेषां यज्ञिय द्रव्याणां दैवसंस्कारो दैवसंस्कार संस्कृतया वेद-मन्त्रमय्या वाचैव सम्पाद्यते । वाचस्तु तस्या दैवीत्वम्—ऋग्यजुः सामभिर्वेदशब्दैर्योगात् । स च शब्दयोगो वेदः ऋगादिभिः साधर्म्यात् । साधर्म्यञ्च—ऋषिच्छन्दः सवनादि देव भक्तियोगात् । तत्र यथाऽस्या ऋषिच्छन्दः सवनादिभिः साधर्म्यं सम्पाद्यते तथोदाहृत्य प्रदर्शयामः ।

आरण्यके श्रूयते—

"विश्वामित्रं ह्येतदहः संशिप्यन्तमिन्द्र उपनिषसाद । स हान्नमित्यभिव्याहृत्य त्रिबृंहतीसहस्रं शशंस । तमिन्द्र उवाचऋषे ! प्रियं वै मे धामोपागाः, वरं ते ददामीति । स होवाच—त्वामेव जानीयामिति । तमिन्द्र उवाच—प्राणोवा अहमस्मि ऋषे ! प्राणस्त्वं, प्राणः सर्वाणि भूतानि । प्राणो ह्येष—य एष तपति । स एतेन रूपेण

सर्वादिशो विष्टोऽस्मि । तस्य मेऽन्नं मित्रं दक्षिणं—तद्वैश्वामित्रम् ! एष तपन्नेवास्मीति ह्रो वाच । तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसम्वत्सरस्याह्नां सहस्राणि भवन्ति, तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूयदेवता अप्येति—य एवं वेद । तदयोऽहं सोऽसौ, योऽसौ सोऽहम् । तदुक्तम्—ऋषिणा "सूर्य्य आत्मा जगतस्तस्थुषश्चेति" ।

अस्यायमभिसन्धिः – महाव्रताख्ये कर्म्मणि माध्यन्दिनसवने निष्केवल्यं नाम शस्त्रं पठ्यते । तत्र पाठ्यानां नाना छन्दस्कानां मन्त्राणामक्षराणि षट्त्रिंशत्सहस्राणि भवन्ति । अक्षरैः प्रमितानां च प्राणानामप्येवं तावती संख्या सम्पद्यते । एकैकेन चाह्ना प्रमितानां प्राणानां सूर्य्यादुत्थितानां तावती संख्या शतसम्वत्सरेषु दृश्यते । तथाच शतसम्वत्सरात्मकपुरुषायुषोपपाद्या आह्निकाः प्राणास्तेन शस्त्रेण शंसिता भवन्ति । तावताञ्च प्राणानां य एको घनः स बृहतीसहस्रात्मक एवेह विश्वामित्रो नामेन्द्रः प्राणः । तत्र च गायत्रीतृचाशीतिः बृहितीतृचाशीतिरौष्णिहीतृचाशीति-रित्येता स्तिस्रोऽशीतयः क्रियन्ते । तावता सप्तशतानि विंशतिश्चाहोरात्राणि सम्पद्यन्ते साम्वत्सरिकाणि । तदिदमैन्द्रं धाम । तावतैव षट्त्रिंशत् सहस्राणि सम्पाद्यन्ते । तत्र या एतास्तिस्रोऽशीतयः क्रियन्ते, (२४०+२४०+२४०=७२०) तेनैतत् त्रिरन्नमभिव्याहृतं भवति । "अन्नमशीतय" इति श्रुतिसमयात् । तथा चान्नाभिधायिशब्दाभिहितसंख्यया गायत्री-बृहत्युष्णिहां सौरतेजो विशेषाणां त्रिरभिव्याहरणादन्नवतां सम्वत्सराहोरात्राणामिन्द्र-प्रियधामत्वं व्याहृतं भवति । इन्द्रोऽयमात्मा तदन्नसंयोगात् प्रसन्नः सम्पाद्यते, इत्यतोऽन्न-सम्पत्या धाम्नः प्रियत्वमाख्यायते । स एव सूर्य्य एवायं सर्वेषां बाह्यः प्राणो बृहत्या विष्टब्धः प्राणेनैव रूपेण सर्वादिशो विष्ट इन्द्रो विवक्षित, स एवास्माकं सर्वेषां चराचराणामात्मा । आत्मत्वादेव चैष विम्वेषामेषां मित्रमेव भवति, नत्वेवात्मा कदाचिदपि कञ्चन हिनस्ति । तस्मात् स विश्वामित्रोनाम । स एवाध्यात्मं प्रविशन्नायुः सर्वेषाम् । तमेवाराधयितुमुभयोः सन्ध्ययोः सूर्य्यमुपतिष्ठन्ते । सावित्रीञ्च गायत्रीं वैश्वामित्रीं ध्यायमानाः प्रजपन्ति । तत्सम्पत्या च दीर्घायुषोभवन्ति । स्मरन्ति च—

"ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः" इति । ये त्वेतामयथा कुर्वते न ते फलेन सम्पद्यन्ते । तस्मात् कालं देवताद्रव्यं चाविलोप्य सावहितोऽहरहः सन्ध्यामुपासीत । तथा चात्मा सुप्रसीदेद् दीर्घञ्चायुर्विन्देदिति ।

तदित्थमत्र निष्केवल्ये शस्त्रे प्रयोगनिष्ठतया विश्वामित्र ऋषिर्विधीयते, तत्कर्म्म-देवताया इन्द्रस्य षट्त्रिंशत्सहस्रात्मकप्राणविषयत्वमुक्तं भवति । एवमन्यत्रापि सर्वत्र वाचामार्षेयसंस्कारेण देवताविषयोऽध्यवसीयते । यस्य यस्य मन्त्रस्य य ऋषिः प्रयोग निष्ठतया विधीयते तत्र तन्मन्त्रप्रतिपाद्य देवताया उत्पत्तिस्थानभूतोऽन्यान्यप्राणघनो निर्द्धारितो भवति । प्राणेभ्यो देवाः, देवेभ्योलोकाः इति श्रुतिपरिभाषणात् सर्वेषां देवानां प्राणादुत्पत्तेः । यादृशप्राणजन्या या देवता यत्र कर्म्मणि विवक्षिता तत्र तदार्षेय-

संस्कृतैरेव मन्त्रैः सा देवता निर्दिश्यते 'प्राणा वा ऋषयः' इति श्रुतेस्तत्तदृषि नाम्ना प्राणविशेषस्य विवक्षितत्वात् । स एष वाचामार्षेय संस्कारेणार्थः ।

अथच्छन्दांसि वाचां परिच्छेदा भवन्ति । तथा चच्छन्दोविशेष परिच्छिन्नेन ऋगात्मना मन्त्रेण स्तुताया देवतायास्तादृशच्छन्दः परिछिन्न महोक्थस्थानविषयत्वं सुगृहीतं भवति । तेषाञ्च महोक्थस्थानानामनेकत्वेऽपि गायत्र्या पृथिवीस्थानं, बृहत्या विषुवत्स्थानमुष्णिहा दिक्प्रान्तस्थानं, जगत्या द्युस्थानमित्येव परिच्छिन्नप्रदेशविशेष-विषयत्वं विशिष्टपरिमाणपरिमितत्वञ्च यथायथमुन्नीयते । एवं तिसृभिस्तृचाशीतिभिः सप्तशतानि विंशतिश्चाहोरात्राणि साम्वत्सरिकाणि लक्ष्यन्ते । (७२ × ८० = ५७६० गा० । १०८ × ८० = ८६४० वृ० । ८४ × ८० = ६७२० उ० अतः त्रिच्छन्दोऽक्षराणि । ५७६० + ८६४० + ६७२० = २११२०, अन्यच्छन्दोऽक्षराणि १४८८० । सर्वम् २११२० + १४८८० = ३६००० अ०) तेन प्रकृते देवताया इन्द्रस्य सम्वत्सर स्थानीय-त्वमुक्तं भवति । अथ यत्र साम्नामन्त्रेण देवताऽनुशंसिता भवति तत्र महाव्रतस्थानीयत्वं देवताया विवक्ष्यते एवं यजुषा देवतानामनायतनान्तरिक्षस्थानीयत्वं विषयीक्रियते । यजुषामच्छन्दस्कृतानामनायतनार्थोपलक्षकत्वात् । स एष वाचां छन्दः संस्कारेणार्थः ।

अथैवं श्रूयते— यदा वा एष प्रातरुदेति अथ मन्द्रं तपति तस्मान् मन्द्रया वाचा प्रातः सवने शंसेत् । अथ यदाभ्येति-अथ बलीयस्तपति-तस्माद् बलीयस्या वाचा मध्यन्दिने शंसेत् । अथ यदा— भितरामेति अथ बलिष्ठतमं तपति— तस्माद् बलिष्ठत-मया वाचा तृतीय सवने शंसेत् । एवं शंसेद् यदि वाच ईशीत वग्धि शस्त्रम्— इति । तदनुगतमेव स्मर्य्यते च—

प्रातः पठेन्नित्यमुरःस्थितेन ।
स्वरेण शार्दूलरुतोपमेन ।।

मध्यन्दिने कण्ठगतेन चैव ।
चक्राह्वसंकूजितसन्निभेन ।। १ ।।

तारन्तु विद्यात्सवनं तृतीयं ।
शिरोगतं तच्च सदा प्रयोज्यम् ।।

मयूरहंसान्यभृतस्वराणां ।
तुल्येन नादेन शिरः स्थितेन ।। २ ।। इति ।।

तथा चोरसा शंसितं प्रातः सवनम्, कण्ठेन माध्यन्दिनम्, शिरसा तृतीयसवन-मित्थंभिन्नप्रकृतेन शस्त्रेण प्रातः सवनीयादय एव तास्ता देवता विषयी कृता भवन्ति । स एष वाचां सवनसंस्कारेणार्थः ।

एवमाज्यपृष्टस्तोमादिरपि दिव्यैः पदार्थविशेषैरस्या लौकिक्याः वाचः संस्कारः कृतोभवति ।

तदित्थमेताभिर्देवता भक्तिभिः संस्कृताया एव वाचो देवतास्वरूपस्थितसम्प्रतिबोधकत्वाद् दैवीत्वमास्थीयते । ता एव वाचो मन्त्रा उच्यन्ते । तत्राशक्यमेकेनाप्यक्षरेण स्वरेण वा ह्रापयितुमतिरेचयितुमन्यथा वा कर्त्तुम् । अतो यत्र कर्म्मणि यया संख्यया, यया मात्रया, येन रूपेण, येनाक्षरेण, येनस्वरेण ये मन्त्रा यथा विहितास्ते तत्राविकलं तथैवानुप्रयोक्तव्या इत्यादिश्यते । लेशतोऽप्यन्यथाकरणे छन्दः सवनादिस्वरूपहान्याभीष्टदेवतास्वरूपव्यभिचारादनिष्टोत्पत्तिप्रसङ्गात् । अतएवान्यथा कुर्वाणा यजमानस्यात्मानं लोकात् प्रच्यावयन्ति । तथा च श्रूयते—

"सौऽस्यैष सुकृत आत्मा । तद्यस्य हैतमेवं
सुकृतमात्मानं कुर्वन्ति—एतं ह स सुकृत-
मात्मानमभिसम्भवति । अथ यस्य हैतमतोऽ
न्यथा कुर्वन्ति—दुष्कृतं ह तस्यात्मानं
कुर्वन्ति । स ह स दुष्कृतमेवात्मानमभि-
सम्भवति" इति ।।

अयमत्राभिसन्धिः—

दैवाधीनं हीदं सर्वम् । दैवसम्पत्यासुरसम्पत्तिभ्यामेवेह सर्वविधिविकारप्रवृत्तेः । देवाश्च सूर्य्यमण्डलस्था अपि सूर्य्योत्पादितेषु सर्वेष्वेवैतेषु चतुर्दशभूत ग्रामेषु यथायथं सन्निदधते ।

"जायमानो वै जायते सर्वाभ्य एताभ्यो देवताभ्यः"

इति श्रुतेः ।

ते चैते देवा निसर्गतः सत्यपरायणा भवन्ति । तथा च श्रूयते—

"देवाश्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुः वाचमेव सत्यानृते । सत्यञ्चैवानृतञ्च । त उभय एव सत्यमवदन्उभयेऽनृतम् । ते ह सदृशं वदन्तः सदृशा एवासुः । ते देवा उत्सृज्यानृतम्—सत्यमन्वालेभिरे । असुरा उ होत्सृज्य सत्यमनृतमन्वालेभिरे । ते देवाः सर्वं सत्यमवदन्, सर्वमसुरा अनृतम् । ते देवा आसक्ति सत्यं वदन्त ऐषा वीरतरा इवासु रनाढ्यतरा इव । तस्माद् हैतद् य आसक्ति सत्यं वदति ऐषा वीरतर इवैव भवत्यनाढ्यतर इव । स ह त्वेवान्ततो भवति । देवा ह्येवान्ततोऽभवन् । अथ हासुरा आसक्त्यनृतं वदन्त ऊष इव पिपिसुराढ्या इवासुः । तस्माद् हैतद् य आसक्त्यनृतं वदति—ऊष इवैव पिस्यत्याढ्य इव भवति । परा ह त्वेवान्ततो भवति । पराह्यसुरा अभवन्" इति ।

अन्यत्रापि श्रूयते—

"सत्य संहितावै देवा अनृतसंहिता मनुष्या" इति। सत्यञ्चात्र लोकनियतिरेव।

"तद्यत् तत्सत्यम्—आप एव तत्। आपो हि वैसत्यम्।

तस्माद् येनापो यन्ति तत्सत्यस्य रूपमित्याहुः" इति श्रुतेः॥ सा चेयं लोकनियतिरव्यभिचारेण प्रवर्त्तते लोके। सेयमव्यभिचारेण प्रवृत्तिरेवैतेषां देवानां सत्यपरायणता। अत एव दैवीवागप्यव्यभिचारेण प्रवर्त्तते।

"सा वै दैवी वाक् यथा यद्यदेव वदति

तत्तद्भवति" इतिश्रुतेः।

ऋग्यजुःसामात्मिका चेयं दैवी विद्या याथातथ्येन नियतिं प्रतिपादयति। तया च त्रय्या विद्यया क्रियमाणाः सर्वे यज्ञा यथाकामं तामेव नियतिमनुलोमयन्ति। श्रूयते हि—

तद्यत् तत्सत्यं त्रयी सा विद्या। ते देवा

अब्रुवन् यज्ञं कृत्वेदं सत्यं तननामहा" इति॥

यथा च यज्ञानां प्रत्यक्षं सत्यलक्षणं तथोदाहृतं श्रूयते—

"तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच य एनं शुष्केस्थाणौ

निषिञ्चेत्—जायेरन् शाखाः प्ररोहेयुः

पलाशानीति"।

तान्येवं विधानि बहूनि तत्र तत्र श्रूयमाणानि यज्ञानां सत्यता लक्षणानि सत्यायास्त्रय्या विद्यायाः प्रभावो, वाचश्च दैव्याः सत्यायाः प्रभावो वेदितव्य इति।

इदमत्रापरं बोध्यम्—

य एते वाचो दैवीत्व प्रयोजका दैवसंस्कारा अतिपुरातन्यां देवविदां महर्षीणां कस्यांचिदेकस्यां भाषायामुपक्लृप्ता दृश्यन्ते। त एते शक्यन्ते सर्वास्वेव लोकप्रचरितासु यथेच्छं वेदविद्भिरुपनेतुम्। भाषान्तरेष्वेतेषां संस्काराणामसम्भाव्यत्व प्रयोजकनियमानुपलब्धेः, अत एव दाशतय्यामन्यान्यमन्त्रभाषातिरिक्तभाषयैव प्रणीतं सूक्तमेकं दृश्यते। यथा—

"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका।

उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु॥ १॥

पर्ज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ।
ऋभूनापात् खरमज्रा खरज्रुर्वायुर्न पर्फरत् क्षयद्रयीणाम् ।। २ ।।

धर्म्मेव मधु जठेर सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिङ् मनऋङ्गा मनन्या न जग्मी" ।। ३ ।।

इति ह्येकादशर्चं सूक्तम् । तत्रैकादशीमेकामृचं त्यक्त्वा दशान्या ऋचोऽन्य-विलक्षणयैव कयाचिद् भाषया संगठितादृश्यन्ते । मदेरू, सनेरू, उष्टारा, चचरा, पतरा, आरङ्गरा, कीनारा, फारिवा, खरमज्रा—इत्यादीनामत्र सूक्ते पठितानां शब्दानामन्यत्र अदृश्यमानत्वात् । इष्यते चासामपि दशानां दैवीत्वं मन्त्रत्वञ्च । तस्मादिह यत्रैव भाषायां यावतीनां वाचामृत्वादयो देवसंस्काराः सम्पद्येरन् तत्र तावतीनामेव संस्कृतत्वं मन्त्रत्वं दैवीत्वञ्च । नान्यासां तद्भाषासम्बन्धिनीनां वाचामितिसिद्धम् ।

यथा यज्ञोपनीतास्वप्सु यावतीनामपां प्रोक्षणीत्वादिदैवसंस्कारः क्रियते तावतीना-मेवापां प्रोक्षणीत्वादिसिद्धिर्नान्यासां, तद्वत् । एवं स्थिते संस्कृतभाषा, देवभाषा, मन्त्र-भाषेति च काचिद्भाषाविशेषजातिरतिरिक्ता सिद्धा भवति । एकस्यामेवभाषायां संस्कृतत्वासंस्कृतत्वाभ्यां व्यवहारवैशेष्ये संभवत्यपि तावता भाषाभेदव्यवहारस्य—अप्रामाणिकत्वात् । अतएव यत्पूर्वं देवभाषास्वरूपनिर्वाचनसौकर्य्याय मन्त्रभाषा ब्राह्मण-भाषा, सूत्रभाषेति भाषात्रैविध्यमाख्यातं तत्रेदानीं भाषाद्वैविध्यमेव पर्य्यवसीयते । मन्त्राणां ब्राह्मणानां च भावाभेदोपपादक धर्म्मानुपलब्ध्या भाषैक्यस्यैवाभ्युपगन्तव्यत्वात् । अतएव सोभयी पुराकालादारभ्येदानीं यावदेकेनैव नाम्ना व्यवहृता दृश्यतेपथ्यास्वस्ति-रिति, छन्द इति, अध्याय इति, अध्याय इति वा । यदि मन्त्रब्राह्मणयोर्भिन्ने भाषे अभविष्यताम्-अवश्यं तर्हि तयोर्भेदेन व्यवहाराय भिन्ने नामनी निरदेक्ष्येताम् । तस्मादे-कैव सोभयी भाषेति सिद्धम् ।

तस्याश्च छन्दोभाषाया बहुभिःपरिकरैर्मानुषीत्वं प्रागाख्यातम् । अतएव तस्या अंशतः कतिपयीनां वाचां संस्कृतत्वाद्दैवीत्वेऽपि मन्त्रत्वेन पृथग्व्यवहारेऽपि तावता तद्भाषाया लोकभाषात्वं न व्याहन्यते । दृश्यन्ते हीदानीं प्रचलितास्वपि लोकभाषासु बङ्गभाषादिषु मन्त्रभागाः । अथापि न दृश्यते मन्त्राणां भाषान्तरत्वं, न वा बङ्गभाषायाः तावता लोकभाषात्वाभावः । एवमिहापि छन्दोभाषायां क्लृप्तेष्वपि मन्त्रेषु न भाषाया मानुषीत्वं व्याहन्यत इति लोकभाषात्वं तदात्वे सिद्धम् ।

अस्याञ्च छन्दोभाषायां प्रणीतानि शास्त्राणि सङ्कलितानि श्रूयन्ते, आथर्वणे तावत्—

इमे सर्वे देवा निर्मिताः सकल्पाः सरहस्याः

सब्राह्मणाः, सोपनिषत्काः, सानुशासना,

सवाकोवाक्याः'' इति ।

ब्राह्मणे च—

''ऋग्वेदो, यजुर्वेदः, सामवेदो, ऽथर्वाङ्गिरस,

इतिहासः पुराणं, विद्या, उपनिषदः, श्लोकाः,

सूत्राण्यनुव्याख्यानानि, व्याख्यानानि,

अस्यैवैतानि सर्वाणि निश्वसितानि ।

स यथा सर्वासामपां समुद्र एकायनम्—

एवं सर्वासां विद्यानां वागेकायनम्'' इति ।।

उपनिषदि च श्रूयन्ते—

''ऋग्वेदो, यजुर्वेदः, सामवेद, आथर्वणश्चतुर्थ,

इतिहास पुराणः पञ्चमो वेदानां वेदः,

पित्र्योराशिः, दैवोनिधिः, वाकोवाक्यमेकायनम्,

देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या,

नक्षत्रविद्या, सर्पदेवजनविद्या'' इति ।।

एषाञ्च निबन्धानामेकैकयैव भाषयोपनिबद्धानां पुरायुगेऽध्ययनाध्यापनप्रचारो ऽनुमीयते ।

कापि भाषा न चिरायावतिष्ठते । सर्वासां हि भाषाणां प्रकृतिविकृतिभावो धारावाहिकतया प्रवर्त्तमानो दृश्यते लोके । अतएव-अन्यामन्यां कामपि भाषामुत्पाद्य सा पूर्वाभाषा कालेन विलुप्यते इति निसर्गः । तत एव छन्दोभाषाप्यात्मानं लोकप्रचाराद् व्यावर्त्तयन्ती कालेन भाषान्तरमुदपादयत् । तामेतां सूत्रभाषेति आचक्ष्महे । तश्याश्च सूत्रभाषाया लोके प्रचारकाले पूर्वा सा छन्दोभाषा शास्त्रमात्रे प्रतिष्ठिता ऽभूत् । अतएव तु तस्याः पश्चादध्याय नाम्ना निगमनाम्ना चाभूत् प्रसिद्धिः । अध्यायः शास्त्रभाषेत्यैकार्थ्यं प्रतिपद्यामहे । तदितरस्यास्तु सूत्रभाषाया लोकभाषात्वादेव तदानीं भाषाशब्देनोपचाराः प्रवृत्ता आसन् । पाणिनिव्याकरणादिशास्त्रेषु भूयसा भाषाशब्देनैव तस्या विवक्षितत्वात् ।

अतएव च वृत्तिकार भाष्यकारौ तद्गतशब्दार्थसम्बन्धस्य लोकतः सिद्धिं ब्रुवाणौ तस्या लोकप्रचारं दर्शयतः—

"सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते
शास्त्रेण धर्म्मनियमो यथा लौकिक-
वैदिकेष्विति"

एवमेव—

'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य"

इति वदता भगवता भाष्यकृता तद् भाषायां लिङ्गविज्ञानस्य लोकव्यवहारतः सिद्धिरनुज्ञायते। यदि तस्याः शास्त्रमात्रप्रतिष्ठितत्वमभविष्यत कथमिव तर्हि तस्या लिङ्गविज्ञानं लोकेन साध्यमवक्ष्यत्।

अपि च भगवान् पाणिनिः प्रायेण प्राचामुदीचां च विभज्य शब्दान् व्याकरोति। शरावत्या नद्याः पूर्वदक्षिणदेशाः प्राच्याः, पश्चिमोत्तरास्तूदीच्याः। प्रागुदक्शब्दौ प्राच्योदीच्यपरौ॥

भगवान्निरुक्तकारोऽप्याह—

"अथापि भाषिकेभ्यो धातुभ्यो नैगमाः
कृतो भाष्यन्ते—दमूनाः क्षेत्रसाधा इति।
अथापि नैगमेभ्यो भाषिकाः—उष्णं घृतमिति।
अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय
एकेषु—शवतिर्गतिकर्म्मा कम्बोजेष्वेव,
विकारमस्यार्य्येषु भाषन्ते शव—इति।
दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु" इति॥

अत्र च देशविशेषेण भाषान्तर्गतशब्देषु विशेषाख्यानाद् अञ्जसैवास्या लोक-भाषात्वमुपपद्यते।

सा चेयं सूत्रभाषा छन्दोभाषात एव जन्माधत्त। तद्विकाराणामिह भूयसा दृश्यमानत्वात्। दर्शिताश्चैते विकारा वर्णसमीक्षायामन्ते वर्णनिरुक्तौ। ते तत्रैव द्रष्टव्याः इह लेखबाहुल्य भयादुपरम्यते।

सर्वथापि पालीभाषातः संस्कृतभाषाया उत्पत्तिरिति वदन्तस्तु नितान्तं भ्रान्ता इत्यन्यत्र सत्यवकाशे व्याख्यास्यामः।

छन्दोभाषाजन्यत्वादेव चैतस्याः सूत्रभाषायाः अपीदानीं संस्कृतभाषाशब्देन चोपचारा लक्षणयोपपद्यन्ते।

॥ इति दिक् ॥

# पृथिव्यां विशेषतो भारते संस्कृतस्यावश्यकता

**श्रीदिवाकरदाश शर्मा**

ॐ यामृषयो मन्त्रकृतो मनीषिणः, अन्वैच्छन्देवास्तपसा श्रमेण ।
तां देवीं वाचं हविषा यजामहे, सा नो दधातु सुकृतस्य लोके ।।
(तैत्तिरीयब्राह्मणम्, ११।८।८)

श्रुति-स्मृति-पुराणेतिहास-दर्शन-विज्ञानं—साहित्य—शिल्पकला-वैद्यकादिविविध-शास्त्रोपबृंहिता, धर्मार्थकाममोक्षात्मकचतुर्वर्गप्रदायिनी, मानवीयसंस्कृतिप्रकाशिनी, अर्थनीतिराजनीतिसमाजनीतितत्त्वविलासिनी, विश्वजनमनोहारिणी, विश्ववन्द्या भारत-जनताहृदयतन्त्रीरियं सुरभारती चिरकालं पृथिव्यां देदीप्यते। सुतरां सुरभारती-विभूतिकामाः शोभनान्तःकरणाः वैदेशिका अपि महता कालेन महता यत्नेन महता परिश्रमेण च संस्कृतशिक्षायां दृढं दत्तावधाना दृश्यन्ते ।

अधुना जर्मन्—इटली—रुष्प्रभृतिषु देशेषु संस्कृतविषये गवेषणा क्रियते तद्देश-वासिभिः। तत् तत् विश्वविद्यालयेषु संस्कृतभाषाया महत्त्वपूर्णं स्थानं विद्यते। तेषा-मयमभिप्रायः यत्, संस्कृतशिक्षां विना मानवीयसंस्कृतेः प्रकृतस्वरूपमाकलयितुं न शक्यते इति। इदानीं जर्मन्प्रभृतिदेशेषु संस्कृतभाषाया उपयोगोविहितः। रुष्देशे महाभारत-रामायणादिग्रन्थचर्चा प्रचलति। देशान्तरवासिभिः कृतेषु ईदृशेषु प्रयत्नेषु पृथिव्यां तथा संस्कृतस्य मूलपीठे स्वाधीने गणतन्त्रशासने भारतवर्षे संप्रति संस्कृतशिक्षोपयोगिता नूनं निरूपणीया ।

प्रथमतः संस्कृतस्य स्वरूपम् आकलनीयम्। संस्कृतम् एसियामहादेशस्य बहुषु देशेषु प्रतिष्ठितानां संस्कृतीनां मूलभूतम्। पृथिव्यां ग्रीक्-रोमादिमहतीनां सभ्यतानां यथा ग्रीक्लाटिन्—आरबिक्—चीनप्रभृतिभाषाः प्रतिष्ठिताः तथा संस्कृतमपि पृथिव्याः प्राचीनतमसभ्यतायाः एका प्रतिष्ठिताभाषा। अनया विश्वभाषाः प्रभाविताः। मानवजातिपक्षे विशेषतः भारतीयानां कृते अस्याः मूल्यं महत्तममेव। संस्कृतभाषा ईदृशी महत्त्वपूर्णा यया मानवीयसभ्यता बहुसहस्रवर्षाणि अतिक्रम्य तस्याः भावप्रकाशं

कृतवती । सर् विलियम् जोन्स्महोदयेन ख्रीष्टीये अष्टादशशतके इदमुक्तं यत्, "संस्कृतभाषा ग्रीक्भाषापेक्षया अधिकतरसमुन्नता, सम्पूर्णा च, तथा लाटिन्भाषापेक्षया अधिकतरपूर्णावयवा, किंच उभयभाषापेक्षया अतीव मनोरमा परिमार्जिता च" इति ।

भारतस्य पश्चिमभूभागे स्थितैः इण्डो-युरोपीयैः आर्यभाषाभाषिभिः तथा इरान्-आर्मेनिका-युरोपप्रभृतिभिः सह भारतस्य आध्यात्मिकसंबन्धः मानसिकसंबन्धश्च अनया एव संस्कृतभाषया प्रतिष्ठापितः । ग्रीक्-लाटिन्-प्राचीन आइरिस्-प्राचीनस्लाभ्प्रभृति-भाषाणाम् इयं ज्येष्ठा भगिनी । इत्थम् अस्याः भाषायाः महत्त्वम् अतुलनीयमेव । पुरा तिब्बत्-चीन-कोरिया-जापान्-वियतनाम-ताइलाण्ड्-कम्वोडिया-मालय-इण्डोनेसिआ ब्रह्म-सिंहलप्रभृतिदेशेषु संस्कृतस्य स्थानं महत्त्वपूर्णमेव आसीत् । इयं भाषा विदेशेषु जनानाम् आध्यात्मिक-मानसिक-सांस्कृतिकक्षेत्रेषु समुचितस्थानम् अलभत । एतेन अस्याः संस्कृतभाषायाः तथा तच्छिक्षायाः उपयोगिता सुविदिता एव ।

पर्य्यालोचनया अवसीयते यत्, पृथिव्याम् आदिधर्मो-वैदिकधर्मः । कालक्रमेण स एव भाव-भाषाभेदेन इदानीं जगति बहुधा विभक्तः । उपनिषद्दर्शनादिवैदिकशास्त्रैः सह पारसी 'जिन्दावस्ता'-धर्मग्रन्थस्य बहु सामञ्जस्यं परीक्षितं डॉक्टर हाग्, सर् विलियम् जोन्स्, अध्यापक मेक्समुलार प्रमुखैः विद्वद्वरैः । पारसीमतात् इहुदीमतं संगृहीतम् । इहुदीमतेन इसलाममतस्य सर्वे सिद्धान्ताः प्रभाविताः । ख्रीष्टीयमतस्य ज्ञानकाण्डसंबन्धिसिद्धान्ताः इहुदीमतेन प्रभाविताः, तथा सदाचारसंवलित सिद्धान्ताः बौद्धमतेन प्रभाविताः । वैदिकधर्मेण सह बौद्धमतस्य संबन्धः सुविदित एव समेषां विदुषाम् ।

इत्थं परम्परया वैदिकवाङ्मयरूपस्य प्रभावः पृथिव्यां कालक्रमेण परिव्याप्त इति निगदन्ति केचिद्विद्वांसः तत्त्वदर्शिनः प्राच्याः पाश्चत्त्याश्च । संस्कृतमूलस्य वेदशास्त्रस्य प्राधान्यं पृथिव्याम् अद्वितीयमिति आकलय्य विदुषा मेक्स्मुलार महोदयेन उक्तम्—"वेदैः यत् कार्यं साध्यते तत् अन्याभिः भाषाभिः कर्तुं न पार्यते" इति । ("In the history of the world, the vedas fill a gap which no literary work in any other language could fill") ।

आर्य-सेमेटिक्-तुरानीभाषासमूहपर्यालोचनया अवगम्यते यत्, एताः भाषाः एकस्या एव भाषायाः समुद्भूताः । सा च एका भाषा संस्कृत भाषा एव । संस्कृतेन जन्द् भाषाया साम्यं स्पष्टं प्रतीयते । यथा—संस्कृते 'कस्मै', जन्दभाषायां 'कह मै, संस्कृते 'अस्मै' जन्दभाषायाम् 'अहमै,' संस्कृते 'येषाम्' जन्द 'यशाम्,' इत्यादि । एवं च सेमेटिक भाषासमूहान्तर्गतासु आरबी-हिब्रूप्रभृतिभाषासु स्त्रीलिङ्ग द्योतकः आकारान्तशब्दप्रयोगः बहुलं दृश्यते । तथा तुरानीभाषासमूहान्तर्गतासु चीन-जापान-तुर्कीप्रभृतिभाषासु बहवः आर्यभाषाऽपभ्रंशाः दृश्यन्ते । संस्कृते द्यौः, चीनभाषायां

'तौ', जापानी भाषायाँ 'दे', संस्कृते होमः, चीनभाषायां घोम इत्यादि । आंग्लभाषायाः बहवः शब्दाः संस्कृतेन प्रभाविताः । यथा—संस्कृते 'पितर', आंग्लभाषायां 'फादर', एवं प्रकारेण मातर्-मदर्, भ्रातर-ब्रदर्, स्वसर-सिस्टर्, त्रिकोणमिति-ट्रिगोनमिट्रि गोलभू-ग्लोब् वकाशनम्-वेकेशन् इत्यादि । एतेन भाषा दृष्ट्याऽपि पृथिव्यां संस्कृतस्य प्रभावः परिलक्ष्यते ।

संस्कृतेन पाश्चात्यविद्याः सर्वाः कथं प्रभाविताः पाश्चात्यधर्मोऽपि कथं प्रभावितः, एतद्विषये पूर्वाम्नायपुरी-गोवर्द्धनपीठाधीश्वरैः ब्रह्मलीनैः श्रीमद्जगद्गुरुभिः भारतीकृष्ण-तीर्थस्वामिपादैः विरचितेभ्यः पद्यात्मकनिबन्धेभ्यः कियानंशः लिख्यते । यथा—

"नन्वत्र वैदिकमतानुगशास्त्रपूगाः सर्वागमप्रभवतां श्रुतिवाग्व्रजस्य, यद्बोधयन्ति सततं बहुभिः प्रमाणैः, पाश्चात्यशास्त्रविषयेकिमनेनजातम्, इतिचेत्शङ्कातर्हि स्पष्टीकुर्मः प्रमाणमिह चापि ।

पाश्चात्यशास्त्रजालेतिहास विज्ञेयवस्तुरूपमिदम् ।। २ ।।
कार्लैल येमर्सन् प्रोफेसर् मकेन्सी, प्रमुख्यपाश्चात्य विमर्शकेशाः,
अध्यात्मविज्ञानविचारशीला, न केवलं प्रत्युत सर्व एव ।। ३ ।।
पाश्चात्यविद्वांस इदं गदन्ति, स्वे स्वे नये स्वानुभवेन सिद्धम्,
यद् भारतीय श्रुतिमूलकत्वं वेदानुसारित्वमपि ह्यमीषाम् ।। ४ ।।
संप्रत्यशेषधरणीविलसत्पुरेषु, सर्वोत्तम-स्वसुषमत्वधियासमस्तैः,
पाश्चात्यसभ्यनिकरैः परिगण्यमाने, फ्रान्साख्यराष्ट्रनगरीव्रजमूर्धरत्ने ।
प्राचीनधर्मालिमुखेतिहास-प्रवीणशीर्षण्यपदस्थितेन ।
'पारिस्'पुरे वासकृता प्रोफेसर्-लूयीजकोलीयट' संज्ञकेन ।
पाश्चात्यदेशाप्तबहुप्रमाणै-स्तत्रत्यसद्ग्रन्थविमर्शनेन,
विद्वद्वरेण्येन महोद्यमेन, धर्मव्रजानां व्यरचीतिहासः ।

तत्रेदं प्रतिपाद्यते बहुतर प्रख्यतिमत्प्राक्तन—
ग्रन्थाल्युद्धृतगद्यपद्यमयवाग्जालान्युदाहृत्य यत्,
धर्मो भारतवर्षतो विषयतः क्रीट् ग्रीस् मिश्रादिकान् ।
हीब्रूरोममुखात् शनैः कथमिमान् देशान् क्रमेणागमत् ।

\+ \+ \+ \+

पाश्चात्यलोकाद्रियमाणधर्मग्रन्थोऽस्ति यो बाइबेल् नामधेयः प्रत्यक्षरं सोऽपि किलास्ति वेदमूलस्तथा वेदविकाररूपः ।। इति

भारतविषये—प्रथमतः इदमत्रावधेयम्, यत् संस्कृतमेव भारतवर्षस्य स्वरूपम्, संस्कृतं विहाय भारतस्य स्वरूपं नैवोपलभ्यते । एतद्देशस्य सृष्टितः अद्यावधि इयं पुण्य-भूमिः कस्मिन्नपि काले संस्कृतविच्छिन्ना न जाता । प्रत्युत भारतस्य आचारधाराः विचारधाराश्च संस्कृतैकाश्रिता एव । भारतीय संस्कृतिः सनातन धर्मप्रतिपादिता । सनातनधर्मश्च वेदप्रतिपादित । वेदस्तु निखिलः संस्कृतवाङ्मय एव । सच भारतस्य प्राणरूपः । विश्वसंस्कृतेरपि भारतीय संस्कृति प्रभवत्वमिति प्रागुक्तं नैव विस्मर्तव्यम् ।

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।

इति मनुनापि कीर्तितमेतत् । किं बहुना, संस्कृतमेव भारतम्, भारतमेव संस्कृतम् इति एतावता एव सर्वं पर्युपयुक्तं भवति ।

भारतीयजीवने तथा तस्य समुन्नतपरम्परायां संस्कृतस्य निरवच्छिन्नप्रवाहः यथा दृश्यते पृथिव्यां कुत्रापि एतज्जातीयमुदाहरणं दृष्टिपथं नायाति । मानवीय मौलिकचिन्ता संस्कृते एव उपलभ्यते । अन्यासु भाषासु यत् प्राप्यते तत्तु संस्कृतादेव नीत्वा । इदं वक्तुं समुचितं स्यात् यत्, भारतीयजनता संस्कृतजननीक्रोडे जाता, लालिता पालिता चेति । एवं भारतीय सभ्यतापि । भारतस्य ऐतिहासिका अग्रगतिः अनया एव संसाधिता । अनया एव भारतस्य लोकचरित्रं सुनियन्त्रितम् ।

यदा इयं भाषा भारतीयानां कृते अपरिहार्य्या आसीत् तदा विविधविद्यानु-शीलने देशोऽयं परमोन्नतिम् अलभत । तदानीं संहतिः दृढा आसीत् । कर्तव्यबोधश्च जनानां समधिकः समजायत । परस्परं विश्वासभाजः जनाः स्वकर्मणि प्रवृत्ताः सफल मनोरथाः सुखेन कालं यापयन्तिस्म । अध्यात्मज्ञान विकसितान्तःकरणाः देशवासिनः भौतिकसुखम् अनित्यं मन्वानाः तत्प्राप्तये प्रतियोगितां नाकुर्वन् ।

"यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम्" इत्येवं रूपा गाथाः प्रतिमुखं निःसृता आसन् ।

"निन्दन्तु नीतिनिपुणा यदिवा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वायथेच्छम्, अद्यैव वा मरणमस्तु युगान्तरेवा न्याय्यात् पथः प्रविचलन्ति पदंन धीराः । इयं मनोवृत्तिः सामाजिक शृंखलायाः कारणमभूत् । इत्थं देशवासिनाम् अन्तर्दृष्टिः सुप्रशस्ता, बाह्य दृष्टिश्च सुसङ्गता इति कृत्वा भारतीय संस्कृतिः विश्वजनसमादृता समभवत् ।

समुन्नत मानवत्वप्रदायिनी सकल ज्ञानसंचारिणी भारतस्य भारती रूपा इयं भाषा कालक्रमेण भारते यदा अधोगता तदा संस्कृत विमूढा भारतीया जन्मभूमेः स्वरूपमपि व्यस्मरन् । एतेन ज्ञानविज्ञान पूर्णानि दुर्लभानि बहूनि शास्त्राणि संरक्षणा-

भावात् चिरं विलुप्तानि । यथा संस्कृतशिक्षया भारतस्य महत्त्वं विश्वविदितमासीत् तदभावेन देशवासिनां परमलघुत्वमेव परिलक्षितम् । अद्यापि सैवावस्था परिदृश्यते भारते । का नाम भारतीयसंस्कृतिः ? तस्याः वैशिष्ट्यं च किम् ? कानि कानि च भारतीयशास्त्राणि ? तेषु तेषु शास्त्रेषु किं लिखितमास्ते इति स्थूलतः इमे प्रश्नाः यदि अधुना केनचित् वैदेशिकेन विश्वविद्यालयशिक्षितं भारतीययुवानं प्रति पृष्टाः भवेयुः तर्हि उत्तरं प्रतिशतं शून्यमेव स्यात् । नेयमत्युक्तिः । हा हा हन्त ! ! स्वाधीनेऽपि देशे गणतन्त्रेऽपि शासने समुच्चशिक्षितानाम् अवस्था ईदृशी । अतो दुःखतरं नु किम् ? तस्मात् सम्प्रति नूनमेव शिक्षापद्धतिः संस्करणीया । नात्र क्षणमपि विलम्बः सह्यः ।

इदानीं भारते गणतन्त्रं प्रतिष्ठितम् । गणतन्त्रस्य इदमेव स्वरूपं यत्,— गणेन गणाय प्रतिष्ठितं तन्त्रं (शासनं) गणस्य सकल समुन्नतये भविष्यति । गणतन्त्रे भारते जनानां दुरवस्थादूरीकरणाय पंचवर्षीययोजनाः पर्यायक्रमेण परिकल्पिताभवन्ति । कृषि-शिल्पादि विषयेषु यथा प्रयत्नो विधीयते तथा शिक्षाविषयेऽपि । शिक्षायोजनायां संस्कृत शिक्षायाः समृद्धये भारतशासनेन विविधा आयोगाः नियुक्ता आसन् ।

विश्वविद्यालय शिक्षा संस्कारार्थं यः आयोगः नियुक्तः तत् भारतस्य भूतपूर्व-राष्ट्रपतिः विश्वविख्यात दार्शनिक प्रवरः डॉक्टर् सर्वपल्ली राधाकृष्णन् महोदयः अध्यक्षः आसीत् । तेन आयोगेन स्पष्टमभिहितं यत् माध्यमिक शिक्षायां महाविद्यालयशिक्षायां संस्कृतस्य स्थानम् अनिवार्यमेव । विश्वविद्यालयेषु संस्कृतम् अवश्यमेव पाठ्यमिति सूचितमायोगेन ।

माध्यमिकशिक्षासंस्कारार्थं यः आयोगः नियुक्तः तत्र डॉक्टर ए लक्ष्मणस्वामी मुदलियार महोदयः विश्वविख्यातशिक्षावित् अध्यक्ष आसीत् । तेनापि संस्कृतस्य स्थानं महत्त्वपूर्णमिति प्रादर्शि ।

शासनगतभाषानुशीलनार्थं चः आयोगः (The official Language commission) नियुक्तः तत्र स्वर्गीयः बालगङ्गाधर खेर महोदयः अध्यक्षः संवृत्तः । अनेनापि आयोगेन संस्कृतभाषायाः गुरुत्वं प्रकटितम् ।

स्वाधीने भारते संस्कृतशिक्षायाः कथम् उपयोगः कर्तव्यः इति अनुसन्धानार्थम् एकः संस्कृतायोगः (The Sanskrit Commission) सर्वकारेग नियोजितः । तत्र परमः भाषातत्त्ववित् डॉक्टर सुनीतिकुमार चाटर्जी महोदयः अध्यक्षः आसीत् । अनेनापि आयोगेन भारतस्य जातीयजीवने संस्कृतस्य प्रभावः कीदृशः, सर्वेषु कालेषु सर्वासु च अवस्थासु भारतीयानां कृते इयं भाषा कथम् उपयोगिनी तद् विविच्य सुचिन्तितं स्वाभिमतं प्रकाशितम् । संस्कृतशिक्षायाः प्रचाराय प्रसाराय च प्रयोजनानुरूपं विविध-मार्गोऽपि प्रदर्शितः । अनेन आयोगेन भारते सर्वत्र पर्यटनं विहितम् संस्कृतविषये भारतीयानां विशिष्टानां मतं प्रश्नावलीद्वारा संगृहीतम् । अनेन सर्वत्र संस्कृतशिक्षायाम् अभिरुचिः परिलक्षिता ।

भारतीय विश्वविद्यालय संस्कृताध्यापकानाम् एका सभा भारतशिक्षामन्त्रालयेन देहल्यामाकारिता । यस्यां महामहोपाध्यायः डाक्टर पि० भि० काणे महोदयः मम्मानं निमन्त्रितः । अध्यापकः के० ए० नीलकण्ठशास्त्री महोदयश्च तत्र आहूतः । सर्व सम्मतम् इदमभिमतं जातं यत् भारते साधारणशिक्षाक्षेत्रे संस्कृतस्य नितरामुपयोगः कर्तव्य इति ।

पण्डित जवाहरलाल नेहरु महोदयः एकदा इत्यम् उक्तवान्—"यदि कश्चिन्मां प्रश्नयति यत् भारतस्य सर्वोत्कृष्टा सम्पत्तिः का ? एवं च तस्य समुन्नतपरम्परा का ? तदा निःसन्देहं वदिष्याम्यहं यत् संस्कृत भाषा संस्कृतसाहित्यं च तत्, तन्निहित—सकलवस्तु च तत्" इति ।

एतेन भारते संस्कृत शिक्षायाः उपयोगिता कीदृशी इति प्रतीयते ।

प्रसङ्गसङ्गत्या संक्षेपतः इदमत्रोच्यते यत्, संस्कृत शिक्षायाः प्रचाराधिक्येनैव देशस्य महत्त्वं स्फुटीभविष्यतीति आकलय्य पुरा भारतचक्रवर्त्तिनः बहुधा अचेष्टन्त । एतदर्थं बहवः विश्वविद्यालयाः संस्थापिता बभूवुः । येषु चीन—जापान—मध्यएसिया—तिब्बत,—श्याम—बर्मा—मालय प्रभृतिदेशेभ्यः ज्ञानपिपासवः विद्यार्थिनः आगत्य विविधविद्यामधिजगिरे । तस्मिन् काले तक्षशिलायां नालन्दायां विक्रमशिलायां च प्रतिष्ठिता विश्वविद्यालया विश्ववन्द्या अभूवन् । नालन्दायां रत्नसागरः, रत्नोदधिः, रत्नरञ्जकः इति नाम्ना प्रसिद्धानि त्रीणि ग्रन्थागाराणि आसन् । तेषु विश्वविद्यालयेषु चाणक्य—भद्र कौमार जीव - दिनमित्र--रत्नवज्रादयः बृहस्पतिकल्पाः प्रकाण्ड-पण्डिताः अध्यापकरूपेण आसन् । विक्रमादित्यस्य पण्डितसभा कालिदासादिनव-रत्नविमण्डिता आसीत् इति तु साधारणी वाक् । संस्कृत प्रचारः तदानीमीदृशः संजातः तत्र मनुष्याणां का कथा, "स्वतः प्रमाणं परतः प्रमाणां कीराङ्गना यत्र गिरं गिरन्ति", इतिखलु प्रसिद्धिरासीत् आस्तां तावत्, प्रकृतमनुसरामः ।

शिक्षापद्धति रेव जातीय जीवनस्य सञ्जीवनी । शिक्षा यादृशी मनोवृत्तिरपि तादृशी । अतः साधारणशिक्षया साकं संस्कृतशिक्षा अवश्यं प्रदातव्या ।

मानवीय संस्कृतेः संरक्षणाय संस्कृतस्य उपयोगः कर्तव्य. । समुपसर्गपूर्वक 'कृ' धातोः "सम्परिभ्यां करोतौ भूषणे" (६।१।१३७) इति सुडागमे 'क्तिन्' प्रत्यये च संस्कृतिरिति पदं सिध्यति । तथाहि लौकिक—पारलौकिक—धार्मिकाध्यात्मिकादि सकलाभ्युदयाय देहेन्द्रिय मनोबुद्धयहङ्कारादीनां भूषणभूता सम्यक् कृतिरेव संस्कृतिः । मानवानां जीवनस्य प्रतिक्षेत्रं भूषणभूता या सम्यक् कृतिः साएव मानवीयसंस्कृतिः । अस्याः संस्कृतेः स्वरूपं श्रीमद्भगवद्गीतायाम् इत्थं वर्णितमास्ते, यत्—

"अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः

दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्, इत्यादि, गीता ।१६।१।

अस्याः संस्कृतेः आधारः वेदादिसंस्कृतशास्त्राणि एव । देहेन्द्रियाणां या क्रिया सा आचार रूपा, मनोबुद्धयहङ्काराणां या क्रिया सा विचाररूपा । अतः आचार प्रभवाणि धर्मशास्त्रादीनि, विचारप्रभवाणि दर्शनशास्त्रादीनि मानवीय संस्कृतेः प्राणभूतानि । एषां शास्त्राणां महत्त्वं पृथिव्यां सुविदितमेव । दौर्भाग्यात् बहूनि शास्त्राणि चिरं विलुप्तानि इदानीम् उपलब्धेषु स्वल्पेष्वपि ग्रन्थेषु यत् तत्त्वं निहितं पठनपाठनादिद्वारा तदेव अवगन्तव्यम् । तेन भारतीयशास्त्राणां संरक्षणं सम्भवेत् ।

भारतीयशास्त्रेषु गवेषणादि कार्यार्थं संस्कृतस्य उपयोगिता विद्यते एव । संस्कृत-ज्ञानाभावात् आधुनिकशिक्षाप्राप्तैः भारतीयगवेषकैः भारतीयग्रन्थाः प्रायेण गवेषिता न भवन्ति । एषु ग्रन्थेषु गवेष्यमाणाः बहुविषयाः वर्त्तन्ते । सम्प्रति रामायणादिविषये देशान्तरेषु गवेषणा प्रचलति । तदर्थं बहवः रामायणादिग्रन्थाः भारतीयग्रन्थागारेभ्यः तत्तद्देशवासिभिः संगृहीताः । रामायणे अहल्याशापोद्धारः वर्णितः । तत्र रामचन्द्रपाद-स्पर्शबलेन पाषाणमयी अहल्या मानुषीं दिव्यतनुमाश्रिता । तथा नौकायाः नायिकात्व-प्राप्तिर्न भवतु इति धीवरेण रामपादधावनविधिः विहितः । किमेतद्रहस्यमिति तत्र अनुसन्धीयते ।

रामचन्द्रस्य वनवासात् प्रत्यावर्तनार्थं भरद्वाजाश्रमे प्रविष्टस्य भरतस्य बहूनां प्रजानां युगपत् नानाभोज्यवस्तुभिः अतिथिसत्कारः भरद्वाजेन विहितः । अरण्ये कुटीर-निवासिनः भरद्वाजस्य विभवः शौवस्तिकत्वं नाव्रजत् । तत्र ईदृशःसत्कारः कथं संजात इति इदमपि तत्रानुसन्धीयते ।

सेतुनिर्माणार्थं वानरैः ये बृहत्प्रस्तराः सागरे निक्षिप्ताः तेतु कथं तदानीं प्लवमानाः आसन् । तत्र कः उपायः तैरवलम्बितः, एतदपि अनुसन्धीयते ।

महाभारत युद्धे व्यवहृतानाम् अस्त्राणां रहस्यभेदः कथं करणीय इति वैदेशिकाना-मुत्कण्ठाबलवती । भारते तु "श्रुतं हरति पापानि पुराणं कलुषात्मनः ।"

पृथिवीप्रसिद्धेन वैज्ञानिकप्रवरेण निउटनमहोदयेन वस्तुनः गतिविषयकं यत् वैज्ञानिकतत्त्वमाविष्कृतं तत्तु भारतीयोपनिषच्छास्त्रविलसितमिति आभाति । निउटन्-तत्त्वस्य इदं तात्पर्यं यत्— यस्य कस्यापि वस्तुनः गतिसंचालनार्थम् अपरस्या एकस्या बाह्यशक्तेः आवश्यकता वर्त्तते । एतदेव ईशावास्योपनिषदि इत्थं वर्णितमास्ते यत्—

"तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ।

इति अत्र "तदेजति, तन्नैजति" इति वर्णनेन साकं निउटनगतितत्त्वस्य बहुसामञ्जस्यं परिलक्ष्यते । इदम् ईश्वरस्य कार्यमिति मन्वानः ग्रीक् विद्वान् 'अरिष्टाटल' महोदयः एतदेव वदति यत्—ईश्वरः ईश्वरः एक एव प्रथमः गत्युत्पादकोऽपि स्वयं गतिग्रस्तो न भवति इति ।

("God is merely the source of movement, the first mover who himself is never moved".

(The Age of Aristotle)

उपनिषद् वाक्यार्थस्तु—तत् सः परमेश्वरः एजति गतिमुत्पादयति । परन्तु तत् स एव न एजति गतिग्रस्तो न भवति ।

एवमेव आविष्कृतानां बहुवैज्ञानिकतथ्यानां मूलभूतानि इमानि भारतीय-शास्त्राणीति प्रतीयते । तथा च पृथिव्याः गोलत्वम् आकर्षणशक्ति च प्रमाणयन् ख्रीष्टीयद्वादशशतके भारतीयः विद्वान् भास्कराचार्यः लिखति—

"समो यतः स्यात् परिधेः शतांशः, पृथ्वी च पृथ्वी नितरां तनीयान् ।

नरस्य तत्पृष्ठगतस्य कृत्स्ना, समेवतस्य प्रतिभात्यतः सा । इति ।

अनेन पृथिव्याः गोलत्वं प्रतिपादितम्। पुनश्च—

"आकृष्टशक्तिश्च महीतया यत् स्वस्थं गुरु स्वाभिमुखं स्वशक्तया,

आकृष्यते तत् पततीव भाति, समे समन्तात् क्व पतत्वियंखे ।"

अनेन पृथिव्याः गोलत्वं प्रतिपादितम् । पुनश्च "आकृष्टशक्तिश्चमहीतया यत् स्वस्थंगुरुस्वाभिमुखं स्वशक्त्या, आकृष्यते तत् पततीव भाति, समे समन्तात् क्वपतत्वि-यंखे ।" अनेन पृथिव्याः मध्याकर्षणशक्तिः निरूपिता । किन्तु भास्कराचार्यस्य जन्मतः षट्शताब्द्यनन्तरं समुद्भूतेन वैज्ञानिक निउटनमहोदयेन एतद्रहस्यं विज्ञातम्, ततः तेन तत्र प्रपञ्चीकृतम् । परन्तु अस्याः शक्तेः प्रथमः आविष्कारकः भारतीयः भास्कराचार्य एव ।

पृथिवीं प्रति भारतीयगणितशास्त्राणां दानं सुप्रथितमेव । भारतीयगणितशास्त्रेषु गवेषणादिकार्यं प्रायः न दृश्यते । पूर्वाम्नायपुरीगोवर्द्धनपीठाधीशैः ब्रह्मलीनैः जगद्गुरुभिः शङ्कराचार्यश्रीभारतीकृष्णतीर्थस्वामिपादैः वेदेभ्यः षोडश गणितसूत्राणि आविष्कृतानि । भारते तानि च सम्प्रति मुद्रितानि उपलभ्यन्ते । सूत्राणि च इत्थम्—निखिलं नवतः चरमं दशतः," "ऊर्द्ध्वतिर्यग्भ्याम्," "परावर्त्य योजयेत्", "एकाधिकेन पूर्वेण" इत्यादीनि । एभिः सूत्रैः सर्वं गाणितिकसमाधानं सहजं सम्भवतीति तैः स्वामिपादैः प्रत्यक्षमेव प्रतिपादितं, प्रमाणितं च तेषां जीवद्दशायाम् । विज्ञानविषयमवलम्ब्य भारतीयशास्त्रेषु गवेषणा विधातव्या । प्राक्तनैः भारतीयवैज्ञानिकैः विरचितानां बहूनां विमानशास्त्राणां नामानि श्रुतिपथमायान्ति । किंच भरद्वाजमुनिप्रणीतम् 'यन्त्रसर्वस्व' नाम्ना प्रसिद्धं विमानशास्त्रं भारते आविष्कृतम् । इदं हस्तलिखितं बरोदाराज्यग्रन्थागारे सुरक्षितं वर्तते इत्यपि श्रूयते । उक्ते यन्त्रसर्वस्वग्रन्ते स्थितस्य बोधानन्दवृत्तिसहितस्य वैमानिक प्रकरणस्य पूर्वप्रकरणे विमानशास्त्राणां नामानि सूचितानि । यथा—

अगस्त्यकृतं शक्तिसूत्रम् ईश्वर कृता सौदामनीकला, भरद्वाजकृतम् अंशुमतन्त्रम्, आकाशशास्त्रम्, यन्त्रसर्वस्वंच, शाकटायनकृतं वायुतत्त्वप्रकरणम्, नारदकृतं वैश्वानर-

तन्त्रम्, धूमप्रकरणं च, नारायणकृता विमानचन्द्रिका, शौनककृतं व्योमयानतन्त्रम्, गर्गविरचितं यन्त्रकल्पम्, वाचस्पतिरचित. यानबिन्दुः, चाक्रायणिकृता खेटयानप्रदीपिका, धुण्डिनाथकृतः व्योमयानार्कप्रकाशः, इत्यादीनि ।

यन्त्रसर्वस्वस्थितविमानप्रकरणे बहुविधं विमानचालनारहस्यं वर्णितमास्ते । यथा —कृतकरहस्यम्, गूढरहस्यम्, अपरोक्षरहस्यम्, सार्पगमनरहस्यम्, परशब्दग्राहकरहस्यम्, रूपाकर्पणरहस्यम् दिक्प्रदर्शनरहस्यम्, स्तब्धकरहस्यम्, कर्षणरहस्यम् इत्यादि । रहस्यानां विवरणमपि तत्र प्रदर्शितम् । तच्च इत्थम्—गूढरहस्यं नाम—वायुतत्त्वप्रकरणोक्तरीत्या वातस्तम्भाष्टमपरिधिरेखापथस्य यासा-वियासा-प्रयासादिवातशक्तिभिः सूर्यकिरणान्तर्गत तमःशक्तिमाकृष्य तत्संयोजनद्वारा विमानाच्छादनरहस्यम् । अपरोक्षरहस्यं नाम—शक्तितन्त्रोक्त—रोहिणीविद्युत्प्रसारणेन विमानाभिमुखस्थवस्तूनां प्रत्यक्षनिदर्शनक्रिया-रहस्यम् । इत्यादि ।

प्राचीन विमान यात्रायाः सत्यम् ऐतिहासिकदृष्ट्यापि प्रतिपादितं तैरेव श्रीभारतीकृष्णतीर्थस्वामिपादैः स्वकीये पद्यात्मकप्रबन्धे, यथा—

"किंच ज्ञेयं विश्वविद्यालयेषु रत्नाकारे मौण्टवेर्णन् निजाख्ये ।
कर्नल्'चर्चवुड्'नामपूर्वेतिहास-निष्णातो यो विद्वदुत्तंस आस्ते ।
तेन स्वीयाधीतिमध्ये सुमात्रा, जावा बोर्न्यो मेक्सिकोमुख्यदेशे ।
तत्रत्यानां प्राच्यभाषानिकाया·वाप्तग्रन्थव्रातलब्धेतिहासात् ।
न्यरूपीदं क्रिस्तोर्जनिसमयतोऽसंख्यशरदां
सहस्रालीतः प्राक् निखिल विषयान् रक्तजलधेः ।
समात्रा जावादीनृगभिहितरीत्या स्वविहितैः
विमानव्रातै र्द्रागि् गगनगमनैर्न्यक्कृत मरुत् ।।
पुरा सुग्रीवोऽगाद् व्यजयत च सर्वान् रिपुगणान्,
ततः कुन्ती माद्री चरमतनुजातावजयताम् ।
पुनश्चेरै र्नौकावरततिभिराकाशगतिभिः
पराजीयन्तारं यवनशक मुख्यारि निचयाः ।।
किं च चेर-चोल-पाण्ड्य-पल्लवप्रमुख्यभू—
भृद्वरेण्यपुङ्गवैः प्रबन्ध ईदृगारचि ।
यत् कलिङ्ग देशतोऽनुघस्र मेवसिंहल—
द्वीपमाम्बरै र्विमानकैरगुर्जना ।। इति ।।

संस्कृत शिक्षायाः व्यापकप्रसारद्वारा संस्कृतशास्त्रेषु यदि सम्यग् गवेषण स्यात् तदा बहुषु विषयेषु बहुतथ्य नूनम् आविष्कृतं स्यात् । यद्यपि आधुनिक विज्ञान विस्माययति विश्वं तथापि प्राचीनशास्त्ररूपं पैतृकं रिक्थं सर्वथा यत्नेन रक्षणीयम् अन्वेषणीयं च ।

सुरभारत्याः महत्त्वमाकलय्य वैदेशिकाः गेटे-मेक्समुलार-मेकडोनाल्ड-कीथ्प्रमुखाः विद्वांसः संस्कृतशास्त्राणि आलोच्य, आलोक्य, अवगाह्य, अवलोड्य बहुविधान् ग्रन्थान् स्वभाषया विरचितवन्तः, ते च ग्रन्थाः सम्प्रति विश्ववासिनां परमादरणीयाः प्रवर्त्तयन्ति प्राच्यान् पाश्चात्त्यांश्च संस्कृत शिक्षार्थम् ।

भारतीयभाषाणां तत्साहित्यानां च समृद्धये संस्कृतस्य प्रयोजनं सुस्पष्टम्। भारतीयजातीयजीवने संस्कृतस्य प्रभावोऽपि सुस्पष्ट एव । जातीयसाहित्याभिवृद्धिश्च अनया एव भाषया सम्भवेत् । इदानीं जातीयभाषारूपेण प्रतिष्ठिता या हिन्दी भाषा तस्याः जननी संस्कृतमेवेति प्रागुक्तम् । संस्कृतमाश्रित्य अस्याः परिपुष्टिः जाता, भविष्यत्कालेऽपि संस्कृतेनैव संकलसमुन्नतिर्भविष्यतीति निश्चप्रचम् । भारते प्रतिप्रान्तं परस्परालापः हिन्दीभाषया चेत् सा हिन्दी संस्कृतशब्दबहुला एव भवितुं युक्ता। भारतशासनस्य सर्वेषु विभागेषु हिन्दीप्रचलनं चेत् साहिन्दी तथैव संस्कृतशब्दावली-संवलिता भवेत् । एतेन प्रतिप्रदेशं सर्वेषां व्यवहारः सुकरः स्यात् ।

मानवसमाजस्य संहतिसम्पादनाय संस्कृतमेव प्रभवेत् । संस्कृतशास्त्रेषु निहिताः विषयाः मानवसमाजस्य कल्याणाय अभिप्रेताः । अतः संस्कृतानुशीलनेन एव मानवानां मनोवृत्तिः रुचिरा मार्जिता च स्यात् । संस्कृतप्रसाराय अवलम्बनीयोपायास्तु—साधारण-शिक्षायाम् अवश्यपाठ्यव्यवस्था विशेष ज्ञानार्थं पृथक्संस्था, संस्कृतविश्वविद्यालयस्थापनम्, छात्राणां तथा अध्यापकानां तत्र सुव्यवस्था । जीविकाक्षेत्रेषु समानः सुयोगः, ग्रन्थानां-सरलीकरणम्, अनुवादकार्यम्, संवादपत्रप्रकाशनम्, पत्रादिव्यवहारः, सांस्कृतिक-समारोहः, अन्ताराष्ट्रियसभा, शास्त्रार्थप्रवर्तनम्, फलकादिषु संस्कृतेन नामोल्लेखः, आकाशवाणी व्यवस्था, चलच्चित्रम् नाटकाभिनयः, विविधप्रतियोगिता, विविधगवेषणा, विदेशेषु प्रचारव्यवस्था, साधारणविश्वविद्यालयेषु स्वतन्त्राध्यापनव्यवस्था । पाण्डुलिपि-संग्रहः, यथासम्भवं परस्परालापे भाषाव्यवहारः, साधारणसमारोहे भाषाव्यवहारः। पुराणेभ्यः तथा अन्यतः उपाख्यानानि संगृह्य पुस्तक प्रकाशनम्, प्रौढानां नारीणां च शिक्षाव्यवस्था, विविधग्रन्थसंकलनम्, गुरुकुलप्रतिष्ठा च ।

आर्यसमाजप्रतिष्ठाता स्वामी दयानन्दसरस्वती, ब्रह्मविद्यासमिति प्रतिष्ठात्री श्रीमती आनिबेसान्ता, परमवेदान्ती श्रीरामकृष्णपरमहंसः, तदीयः शिष्यप्रवरः श्रीविवेकानन्दः विश्वभारतीप्रतिष्ठाता विश्वकविः श्रीरवीन्द्रनाथठाकुरः, पाण्डिचेर्य्याश्रमप्रतिष्ठाता श्रीअरविन्दघोषः भारतीयविद्याभवन प्रतिष्ठाता डाक्टर के. एम. मुन्शीमहोदयः मेक्स-मुलारप्रमुखाः एते विश्वविश्रुताः विद्वांसः साधकाश्च इमामेव सुरभारतीमाश्रित्य इदानीं पुण्यश्लोकाः संजाताः । महात्मा गान्धिरपि निखिलशास्त्रसारभूतां भगवद्गीतामाश्रित्य तत्कर्माचरणद्वारा महात्मा संवृत्तः विश्ववन्द्यश्च संजातः ।

परिशेषे तु एतदेव वक्तव्यं यत्—परमाणुशस्त्रसंपातशङ्कातङ्कितायां धरायां सम्प्रति मानवान् उद्धर्त्तुम् आध्यात्मिकता एव प्रभवेत् । आपातरमणीयं भौतिकसुखमेव परमसुखमिति मन्यमानाः जनाः दुःखप्रपीडिता दृश्यन्ते । एषां मानसिकी व्यथा उत्कटा एव । सर्वत्र कलह सन्देह-स्वार्थसाधनादिदुर्गुणाः प्रसरन्ति । लोकचरित्रं कलुषितप्रायम्, मनुष्येषु प्रेमदयासारल्यादिसुगुणाः क्रमशः ह्रासतामुपयान्ति । फलतः सर्वत्र नैतिकतायाः संचारः न दृश्यते । विज्ञानबलेन सर्वत्र विजिगीषामनोवृत्तिः प्रसृता । मारण-क्षेपण-ध्वंस साधनार्थम् अस्त्रनिर्माणप्रतियोगिता तीव्रतमा प्रचलति । एतदर्थं सहस्रकोटि परिमितं वित्तं वृथा व्ययितं भवति । अत्र केनचित् उपायेन प्रतिरोधव्यवस्था यदि उद्भाविता न स्तात् तर्हि इयं पृथिवी क्षणेन धूलिसात् भविष्यति । मानवसमाजः निश्चिह्नतां यास्यति इति सर्वेषां हृदयमालोडितम् आशङ्कितं च वर्त्तते ।

अत्रायम् एक एव उपायः पुरतो भाति । सतु सर्वत्र आध्यात्मिकता नैतिकता-धार्मिकता प्रचारप्रसाररूपः । पृथिव्यां सर्वत्र आध्यात्मिकमनोवृत्तिः यथा प्रसरेत् तथैव यत्नः करणीयः । भौतिकवादस्य असारता दृढं प्रतिपादनीया । विज्ञानेन सह आध्यात्मिकता संयोजनीया । धार्मिक मनोभावः सर्वत्र सर्जनीयः । संयमशीलता प्रसारणीया । यत्र प्रबला शक्तिः समुदेति तत्र संयमस्य प्रयोजनम् । शक्तेः साधुविनियोगाभावेन सृष्टिसंहारः स्यात् । महाभारते निर्यातित अन्यायेन हतपुत्रोऽपि अर्जुनः ब्रह्मास्त्रस्य प्रयोग-प्रत्याहारवेत्ता अपि संयमशीलः सन् तस्य अस्त्रस्य प्रयोगं न कृतवान् । अन्यत्र तदस्त्रस्य प्रयोगमात्रवेत्ता नतु प्रत्याहारवेत्ता अश्वत्थामा आत्मसंयमं विहाय अस्त्रप्रयोगं कृतवान् ।

अतः मानवेषु सद्बुद्धिप्रसाराय वेदादि संस्कृतशास्त्राणां प्रचारः पृथिव्यां सर्वत्र अपेक्ष्यते । सर्वत्र संस्कृतशास्त्राणां पठनपाठनादिकं यथा सम्भवेत् तथा व्यवस्था करणीया । तदर्थं विविधाः संस्थाः संस्थापनीयाः । सर्वे विश्ववासिनः समानाः इति अयं मन्त्रः प्रचारणीयः । 'संगच्छध्वम्' 'संवदध्वम्' 'समानी व आकूतिः' इत्यादिगाथाः प्रसारणीयाः । एवं सति पृथिव्यां शान्तिः प्रतिष्ठिता भवेत् । श्रीभगवत्कृपया पृथिव्याम् आध्यात्मिकता प्रसरतु । सुरभारती पृथिव्यां सुरक्षिता सुसेविता समर्च्चिता च चिराय देदीप्यतामिति श्रीनीलशैलनिलये मोहननयनवलये वृन्दारकवृन्दवन्दितपदारविन्दद्वये अद्वये परित्रातनिखिलानाथे श्रीजगन्नाथे प्रार्थये ।

न शास्त्रवरुणालयोऽत्र सुगमो ह्यपारत्वतः,
निसर्गकरुणालयास्तु कृतिनो गुणाढ्यत्वतः ।

क्षितावखिलविन्न कश्च्युतिरपीह पुंधर्मिका,
नतिः सकलमार्जनीति रचयामि विज्ञेषु ताम् ।।

इति शम् ।

# वैदिक सूर्य विज्ञानम्

**ले० आचार्य विजयमित्र शास्त्री विद्यावारिधिः व्याकरणाचार्यः**

प्राचीनवैदिकवाङ्मये सूर्यविज्ञानसम्बंधिनी सामग्री प्राचुर्येण बहुत्र समुपलभ्यते। तदध्ययनस्य महत्यावश्यकता वर्तते । आधुनिकविज्ञानस्याप्ययमञ्चिन्तनीयो विषयः। को नाम सूर्यः ? कथं सूर्योत्पत्तिः ? सूर्यस्य कियन्तः किरणास्सन्ति ? भगवान् सूर्यः स्वकीयकिरणैः कथङ्कारं विश्वं परिपालयति ? सूर्यस्य शक्तिस्त्रोतः किम्, कुत्र चास्ति येन निरन्तरं प्रतपन् लोकान् जीवयंश्चाप्ययं सूर्यः मनागपि ह्रासं नापैति ? किं सूर्य-किरणैरेवान्येषामपि ग्रहाणमुत्पत्तिर्भवति । सूर्यमण्डलकेन्द्रे कदाचित् कदाचित् विक्षोभो दृश्यते तस्य किं कारणम् ? किं सूर्यः महान् विद्युद्भाण्डागारोस्ति ? सूर्ये विद्यूद्वाहि-किरणतरंगाः के सन्ति ? सूर्यः स्वकिरणैः पृथिवीं दिवञ्च कथं धारयति ? सूर्यस्यैक-स्मिन्नाम्नि सम्पूर्ण सूर्यविज्ञानं कथं व्याख्यायते वैदिकविज्ञानविद्भिरित्यादि प्रश्नाः साधारणानां जनानां वैज्ञानिकानाञ्च मनस्सु सामान्येनाविर्भवन्ति ? एतेषां प्रश्नानां समाधानं कर्त्तुमाधुनिकवैज्ञानिकैःस्वकीय प्रयोगशास्त्रेषु निरन्तरं ध्यानावस्थितचेतोभिः प्रयत्नः क्रियते ।

## को नाम सूर्यः

यः खलु प्रकाशमयः तेजोराशिः पृथिव्यादिग्रहनक्षत्रसंयन्ता, सकलसृष्टि प्रादुर्भावा-न्यतमहेतुभूतः, रविः, विष्णुः, सविताः भानुः, तपनः, दिनमणिः, दिवाकरतः, आदित्यः, सहस्ररश्मिः, विवस्वान्, भास्वान्, इन्द्रः, इनः, अथर्वा, दध्यङ्, सुपर्णः केशी, शकुनिः, विश्वानरः, भुरण्युः, अहिर्बुध्न्यः, समुद्रः वृक्षः, यमः वृषाकपिः, परिरविः, विश्वकर्मा, तरणिः, मित्रः, चित्रभानुः, अग्निः, जातवेदाः, द्रविणोदाः, संवत्सर इत्यादि नामभिर्लोके वेदे च प्रसिद्धः सकलदृश्यजगत्प्रमाणभूतो वरीवर्ति स एव सूर्यः ।

## कथं सूर्योत्पत्तिः

कथं सूर्योत्पत्तिरिति महती प्रहेलिका । आसृष्टेरद्ययावत् विदुषो वैज्ञानिकांश्चास्याः अनुसन्धानेऽन्वेषणे च प्रेरयतितमाम् । ब्राह्मण ग्रन्थेष्वस्याः प्रहेलिकायास्समाधाने महान्प्र-यत्नः कृतः । तत्रैवमाख्यायिका शतपथे समाम्नायते :—

सोऽकामयत भूय एव स्यात् प्रजायेतेति स वायुनाऽन्तरिक्षं मिथुनं समभवत्तत आण्डंसमवर्तत, तदभ्यमृशद्यशो बिभृहीतिततोऽ सावादित्योऽसृज्यतैष वै यशोऽथ यदश्रु सङ्क्षरितमासीत्सोऽश्मापृश्निरभवदश्रुर्हं वै तमश्मेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अथ यः कपाले रसोलिप्त आसीत्ते रश्मयोऽभवन्नथ यत्कपालमासीत्साद्यौरभवत् । शतपथ । ६।१।२।३

सः प्रजापतिः कामयाञ्चक्रे, सृष्टेर्विस्तारो भवेत् । स वायोरन्तरिक्षस्य च मिथुनयोगञ्चकार ततः हिरण्यगर्भरूपाण्डस्य प्रादुर्भावो जातः । प्रजापतिस्तं स्पृष्ट्वा प्रोवाच 'यशो विभृहि' तस्मादण्डादयं सूर्यस्समुत्पन्नः । अयमेव निश्चयेन यशइत्युच्यते । यदश्रुन्यपतत् तदश्मापृश्निरभवत् । कपाले यो लिप्तो रस आसीत् सः किरण रूपत्वं प्रतिपेदे । यःकपाल आसीत् स द्युलोक रूपमन्वावर्तत ।

एतदाख्यायिकातः पूर्णतया स्पष्टमेतद्यत् सूर्ये पार्थिवांशस्य सर्वथा भावोस्ति । तस्मिन् केवलं वायोरग्नेरपामेव साम्राज्यमस्ति ।

शतपथब्राह्मणेऽन्यत्रोक्तम्—

असौवाऽदित्योऽश्मा पृश्निः ।६।२।३।१४।

अर्थात् सूर्यः अश्मापृश्निरस्ति । अश्मापृश्नि समुदाये द्वौ शब्दौ स्तः । अश्मा + पृश्निः । 'अश्मा' इत्यस्यार्थः शिला, ग्रावावेति । पृश्नि शब्दस्यार्थः किरणाः । प्राकृतिक चुम्बकशिलाखण्डेभ्यः किरणाःनिस्सरन्ति । ते चुम्बकीय किरणाः विद्युत्किरणैर्न विसंवदन्ते । चुम्बकीयकिरणाः विद्युत्किरणाश्च समानधर्माण इति सर्वे भौतिक विज्ञान विदस्समामनन्ति । अतो वयंचुम्बकीयकिरणान् वैद्युत्किरण नाम्नाऽभिव्याहर्तुं शक्नुमः तथा च—

| | |
|---|---|
| १. प्राकृतिक चुम्बकशिलायाम् | किरणाः भवन्ति |
| २. मेघविद्युति | किरणाः भवन्ति |
| ३. घर्षण विद्युति | किरणाः भवन्ति |
| ४. रासायनिक विद्युति | किरणाः भवन्ति |

∵ उपर्युक्त किरणाः परस्परं न भिद्यन्ते

∴ सर्वे किरणाः 'विद्युत्किरण' शब्देन व्यवहर्तुं शक्यन्ते ।

अनया उपपत्या सिद्धमेतत् यत् सर्वत्र एकैव विद्युच्छक्तिः परिव्याप्ता । तस्मात् सूर्यः विद्युच्चुम्बकीय किरणानां बृहन्मण्डलमस्ति । इयं व्याख्या तु मयाऽधुनिक विज्ञानदृष्ट्या कृता । वैदिक ग्रन्थेषु प्रकारान्तरेण विवृतमेतत् । तथा च शतपथे समाम्नायते :—

स एष प्राणः प्राणमेवैतदात्मन्धत्ते तदेतदायुरायुरेतदात्मन्धत्ते तदेतदन्नमाहुर्ये तदन्नमु वा आयुरश्मा भवति स्थिरो वा अश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्न. । शतपथ ६।२।३।१६

अर्थात् 'अश्मा' प्राणोस्ति । अयमेव सूर्यं धारयति । पृश्निरन्नमस्ति अर्थात् सूर्यः पृश्नि रूपमन्नं भुङ्क्ते ततश्च तस्मादश्मा रूपी प्राणःनिरन्तरं गतिशीलतामापद्यते । तथा च तत्रैव शतपथेऽग्रे विशदं व्याख्यातम्:—

पृश्निर्भवति रश्मिभिर्हि मण्डलम् ।

शतपथ ६।२।३।१६

अर्थात् किरणानां यन्मण्डलं तत् पृश्नि शब्देनोच्यते ।

सर्वस्यैतत्प्रपंचस्यायमेवार्थः यत सूर्यः केवलं विद्युन्मय किरणानामेवैकं बृहन्मण्डलमस्ति । तत्र घनीभूत पृथिवीतत्त्वस्य सर्वथाऽभाव एवास्तीति विज्ञेयम् ।

**कियन्तः सूर्यकिरणाः**

सूर्यस्य कियन्तः किरणास्सन्तीत्यस्मिन्विषये वैदिक ग्रन्थेषु विस्पष्टं वर्णितम् । तथा च ऋग्वेदीयाः समामनन्ति —

रूपं रूपं प्रतिरूपोबभूव तदस्य रूपं प्रति चक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश । ऋग्वेदः ६।४७।१८ ।

युजानो हरितारथे भूरि त्वष्टेह राजति । ऋग्वेदः ६।४७।१९

संसारे प्रतिवस्तु प्रतिपदार्थं सूर्य एवं प्रतिभासितो भवति । प्रतिवस्तुभिन्नतायाः कारणमपि सूर्य एवास्ति । सूर्यस्य किरणा उपर्युक्त ऋग्वचनानुसारेण —

१०० × १० = १००० एक सहस्र संख्याकास्सन्ति ।

अयं सूर्यः किरणरूपानश्वान् स्वरथे नियुज्यात्यन्तं शोभतेतमाम् ।

अधुनायं प्रश्नस्समुत्तिष्ठते यत् सहस्रसंख्याकाः किरणाः केसन्ति ? यत्प्रभावात्सूर्यः सहस्ररश्मि नाम्ना प्रसिद्धः । तथा च ऋग्वेदे समाम्नायते :—

सहस्राक्षो विचर्षणिरग्नि.....।

ऋग्वेदः १।८०।१२।

अर्थात् सूर्यः सहस्रचक्षुष्मानस्ति । किरणा एव तस्य चक्षूंषि । जैमिनि ब्राह्मणेप्युक्तम् :—

सहस्रं ह एत आदित्यस्य रश्मयः । जैमिनि ब्रा० १।४४।५।

अर्थात् सूर्यस्य सहस्रसंख्याकाः किरणास्सन्ति ।

कपिष्ठल संहितायामपि व्याहृतम्—

अग्ने सहस्राक्ष ।२८।४।

अर्थात् सूर्यस्य सहस्र संख्याकाः किरणास्सन्ति ।

एतेषां सहस्रसंख्याकानां किरणानां नामानि वैदिक वाङ्मये सर्वत्र विकीर्णानि सन्ति । तान्यन्वेष्टव्यानि । वैदिक निघण्टुब्राह्मणग्रन्थेभ्य विचित्य कानिचिन्नामानि दिङ्मात्रमिह निर्दिश्यन्ते । एतानि सर्वाणि नामानि सूर्यगुणवैशिष्ट्यं पृथक् पृथक् सम्यग्विवृण्वन्ति—

| निघण्टु पठितानि | | | ब्राह्मणग्रन्थपठितानि | | | | | |
|---|---|---|---|---|---|---|---|---|
| खेदयः | साध्याः | सुपर्णाः | शुचिः | अनीकवान् | अन्नादः | पतङ्गः | सर्पः | हंसः |
| किरणाः | अभीषवः | वनम्, | महिषः | वाजसृक् | प्रविष्टः | स्वर्णरः | सुकृत | हरित् |
| गावः | दिधीतमः | उस्राः | सहस्रः | रक्षेहा | रुक्मराट् | ज्योतिष्मान् | अक्षितिः | सुरुक् |
| रश्मयः | गभस्तयः | वसवः | अद्भुतः | यष्टिकृत् | अरोगः | विभासः | चंद्रः | गन्धर्वः |
| मारीचिपाः | मयूखाः | सप्तर्षयः | विविधः | सुरभिः | भ्राजः | सुषुम्णः | गौः | वृष्टिवनिः |
| | | | अर्कः | वसुः | पटरः | हरिकेशः | | मरीचिपाः |

अन्वेषणात् सर्वाणि सहस्र संख्याकानि नामानि प्राप्तुं शक्यन्ते । इह तु दिङ्मात्रं प्रदर्शितेष्वेतेषु नामसु किरणानां विभिन्नतायाः वैशिष्ट्यस्य च रहस्यं निगूढ मस्ति ।

एतेषां व्याख्यानं वेदेषु ब्राह्मणग्रन्थेषु पुराणादिषु च विस्पष्टं दरीदृश्यते । तथा च ऋग्वेदे समाम्नायते —

हंसः सुचिषद् वसुरन्तरिक्षसद्धोता नेदिषदतिथिर्दुरोणसत् । ऋग्वेदः ४।४०।५

अस्य मन्त्रस्य व्याख्यानं कुर्वता महर्षियास्केनोक्तम् :—

हंसाः सूर्य रश्मयः । निरुक्तम् ४।३४

अर्थात् सूर्यकिरणानां "हंस" इत्यपि संज्ञास्ति । द्रष्टव्यमेतद्यत् हंसनामान किरणाः नीरक्षीरविवेकी हंस इव पदार्थपरमाणून् वियोजयन्ति । एवमेव हरित शब्दोपि

किरण पदवाचकः । तथा च ऋग्वेदे समाम्नायते :—

तत्सूर्यस्य देवत्वं तन्महित्वं मध्याकर्तोर्विततं संजभार ।

यदेतदयुक्त हरितः सधस्था दाद्राचीवासस्तनुते सिमस्मै ।। ऋग्वेदः १।११५।४।

अस्मिन् मन्त्रे पठितस्य "हरितः" शब्दस्य व्याख्यानं कुर्वता निरुक्त टीकायां श्रीस्कन्दस्वामिना विस्पष्टमुक्तम् :--

हरित शब्दः हरित शब्द पर्यायः, नीलवर्णवचनः । निरुक्तम् ४। ११

पूर्वमुक्तं यत् हरित शब्दः किरणवाची वैदिक वाङ्मये प्रयुज्यते । नीलवर्णवन्तः किरणः हरित शब्देनोच्यन्ते नीलवर्णवन्तः किरणाः किं कुर्वन्तीति जिज्ञासायां महर्षिणा यास्काचार्येणोक्तम् :—

हरितः हरणादादित्यरश्मीन् । निरुक्तम् ४।११

अर्थात् सूर्यस्यान्यान् किरणान् हरितवर्णवन्तः किरणाः पुनः सूर्यमण्डलं संहरन्ति अतएवैते किरणाः हरित उच्यन्ते ।

अक्षिति शब्दोपि किरणवाचित्वमाह । तथा च तैत्तिरीयाः समामनन्ति—

यमक्षितिमक्षितयः पिबन्ति । तैत्तिरीयब्राह्मणम् २।४।१४

अस्यायमर्थो:—अक्षिति नामकाः किरणाः 'अक्षितिं' अर्थात् क्षितिबाधामतीत पिबन्ति सोममित्यर्थः । अक्षितिनामकाः किरणाः पार्थिवतत्त्वबाधामतीत्य गच्छन्तिय आधुनिक वैज्ञानिकैरिमे एव किरणा एक्सरे नाम्ना समधिगताः ।

शतपथब्राह्मणे सुकृतनामक किरणस्य व्याख्यानमुपलभ्यते—

तस्यसूर्यस्य ये रश्मयस्ते सुकृतः ।।१६।३।१०

अस्यायमर्थो विज्ञायते यत् सुकृतनामानः किरणाः प्रकृतौउत्पन्नांविकृतिं शोधयन्ति । समस्तसृष्टौ समुत्पन्नान्दोषान्निवारयन्ति ।

इदमत्र विशेषतो ज्ञातव्यम् यदीमानि सर्वाणि नामानि लोकाः प्रायः पर्यायिरूपेणैव प्रयुज्यते । इदज्वानर्हम् । इमानि सर्वाणि नामानि पारिभाषिकाणि सन्ति । एतेषां व्याख्यानं वेदाध्ययनेनैव विस्पष्टम्भवितुमर्हति । तथा च मैत्रायणीयाः समामनन्ति —

बहूनि वै रश्मीनां रूपाणि ।

मैत्रायणी संहिता २।२।२१

अर्थात् विविधानि किरणानां रूपाणि भवन्ति ।

शतपथ ब्राह्मणे "मेध्याः" नामककिरणानां वर्षकर्मणा संम्बन्धो वर्ण्यते—

मेध्या वा एता आपो भवन्ति या आतपति वर्षन्ति ।

शतपथ ५।३।४।१३

आपः शब्दोत्र किरणवाची तेनायमर्थः एताः मेध्याः किरणाः आतपति ग्रीष्मे ये वर्षन्ति वर्षा कुर्वन्तीत्यर्थः ।

तथा च तैत्तिरीयाः समामनन्तिः—

यश्चापश्चन्द्राः प्रथमो जज्यान । तैत्तिरीयब्रा १।७।६।३

केचन किरणाः गावः, विश्वभृतः, ककुभः आदि शब्दैरपि ऋग्वेदे समाम्नाताः—

सोमं गावो धेनवो वावशानाः । ऋग्वेदः ९।९७।२५

गौनामानः किरणाः समस्त संसाराय लौकिक धेनुवत् भोजनदातारः शक्ति दातारश्च सन्ति । लोकभरणात् पोषणाच्च केचनकिरणाः विश्वभृत उच्यन्ते ।

सूर्यस्य केचनकिरणाः सर्पनाम्नोच्यन्ते तथा च यजुर्वेदे समाम्नायते—

येऽमी रोचने दिवो येवासूर्यस्य रश्मिषु ।
येऽप्सु पदांसि चक्रिरे तेभ्यो सर्पेभ्योनमः ।। यजुर्वेदः १३।३।२

तेभ्यः सर्पवाचिशक्तिशालिकिरणेभ्योऽस्माकं नमस्कारास्सन्तु ।

सर्पाः यथा विसर्पन्ति वायुमण्डलात् दुष्टं वायुं पीत्वा वायुं शोधयन्तितद्वत् सर्प-वाचिनः किरणाः वायुशोधकास्सन्तीति विज्ञेयम् ।

सुरुच् नामक किरणानां विषयेऽथर्ववेदे पठ्यते—

ब्रह्मजज्ञानं प्रथमं पुरस्तात् विसीमतः सुरुचोवेन आवः ।
सं बुध्न्या उपमा, अस्य विष्ठा सतश्चयोनिमसतश्च विवः ।।

।अथर्व ४।१।१

अस्य मन्त्रस्य व्याख्याने महर्षिणा यास्काचार्येणोक्तम् :

सुरुचः आदित्यरश्मयः । निरुक्तम् १।७

"सुषुम्णः" शब्दोपि सूर्यस्य प्रमुखकिरणानेव द्योतयति । तथा च यजुर्वेदे समाम्नायते :—

सुषुम्ण:सूर्यरश्मिश्चन्द्रमा: गन्धर्व: । यजु० १८।४०

मन्त्रमेनं व्याख्यायता महर्षियास्केनोच्यते :—

अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रतिदीप्यते तदेतेनोपेक्षितव्यम् ।
आदित्यतोऽस्य दीप्तिर्भवति । निरुक्तम् २।२।

अर्थात् सुषुम्णो नामैक: किरणश्चन्द्रमसं प्रकाशयति ।

वृष्टिवनिनामक: सूर्यकिरणविशेष: शतपथे पठचते :—

सूर्यस्य हवा एको रश्मि: वृष्टिवनिर्नाम येनेमा सर्वा प्रजाबिभर्ति । शतपथ: १४।२।१।२१।

अर्थात् सूर्यस्य एक: वृष्टिवनिनामक: किरणोस्ति येन समस्तां सृष्टि सूर्य: पालयति । वृष्टिवनिशब्दस्यार्थ: वर्षाकारका: किरणा: ।

इमामेव व्याख्यां तैत्तिरीया अपि समामनन्ति :

एष वा ओषधीनां वृष्टिवनि: ।

तया च वृष्टिमाच्यावयति ।। तैत्तिरीयसंहिता ११ ।४।१०।

अर्थात् वृष्टिवनि नामककिरणेन सूर्य: वर्षां करोति ।

अस्यामेव संहितायां मरीचिपा: शब्दोपि व्याख्यायते :—

आदित्यस्य वै रश्मयो देवा मरीचिपा: । तैत्तिरीय संहिता ६।४।५

एवं ज्ञायते यत् केचन किरणा किरणान्तरान् पिबन्ति, आत्मसात्कुर्वन्तीत्यर्थ: । एत एव किरणा मरीचिपा उच्यन्ते ।

ऋषिशब्द: अङ्गिरस् शब्दश्च सूर्यकिरण बोधकौस्त: । तथा च ऋग्वेदे समाम्नायते :—

विरूपास इदृषयस्त इ द् गम्भीरवेप्स: ।
ते ङ्गिरस: सूनवस्ते अग्ने परिजज्ञिरे ।। ऋग्वेद: ।१०।६२।५

ये अग्ने परिजज्ञिरे विरूपासो दिवस्परि ।
नवग्वो नु दशग्वो अंगिरस्तम: देवेषु मंहते ।। ऋग्वेद: १०।६२।६

अर्थात् द्युलोके नानाविधा किरणा: सन्ति । अत्र ऋषि शब्द: अङ्गिरस् शब्दश्च साक्षात् किरणार्थद्योतकौ ।

अत्रि शब्देनापि सूर्यस्य विशिष्ट:किरणोऽवबुध्यते ऋग्वेदिन: समामनन्ति :—

यं वै सूर्यं स्वर्भानु: तमसा विध्यदासुर: ।
अत्रयस्तमन्वविन्दन् नह्यन्येऽशक्नुवन् ।। ऋग्वेद: । ५।४०।६

यदा सूर्यपृथिव्योरन्तरं चन्द्रमा उपतिष्ठते तत उत्पन्ना छाया स्वर्भानुनाम्ना राहुनाम्ना वा विख्याता सूर्यबिम्बमावृणोति । तदानीं पार्थिवाग्निरर्थात् अत्रिनामकः पार्थिवविद्युत्किरणास्सूर्यं संस्पृशन्ति ।

जैमिनि ब्राह्मणे आदित्याङ्गिरस रश्मीनां विस्पष्टो भेद प्रत्यपादि :—

तद्ये हवा एत आदित्यस्योदञ्चो रश्मय. त आदित्याः ।
ये दक्षिणास्तेऽङ्गिरसः । जैमिनि ब्राह्मणम् २।३।६६

अर्थात् सूर्यस्योर्ध्वभागे ये किरणास्सन्ति ते आदित्यनाम्नोच्यन्ते । तदधोभागोत्थिताः किरणाः अङ्गिरस नाम्नावगम्यन्ते । अस्यायमर्थः यत् पृथिवीये किरणाः समायान्ति तेऽङ्गिरस नाम्ना प्रसिद्धाः । सूर्यपृष्ठभागाद् ये किरणाः निर्गच्छन्ति ते आदित्यकिरणास्सन्ति । आदित्य किरणाः द्युलोकं प्रकाशयन्ति ।

इदं विज्ञानं वायु पुराणेऽति सरल रूपेण व्याख्यातम् :—

यश्चासौ तपते सूर्यः पिबन्नाम्भो गभस्तिभिः ।
पार्थिवैर्हि विमिश्रोसौ दिव्यः शुचिरितिस्मृतः ।।१७।।

सहस्रपादः सोग्निस्तु वृत्तः कुम्भनिभ शुचिः ।
आदत्ते तत्तु रश्मीनां सहस्रेण समन्ततः ।।१८।

नादेयाश्चैव सामुद्रीः कौप्या श्चैव सधान्वनीः ।
स्थावराः जङ्गमाश्चैव यश्च सूर्यो हिरण्मयः ।
तस्य रश्मि सहस्रन्तु वर्ष शीतोष्ण निस्रवम् ।।१९।।

तासां चतुश्शताः नाड्यो वर्षन्ति चित्रमूर्त्तयः ।
वन्दनाश्चैव वंद्याश्च ऋतना नूतनास्तथा ।।
अमृत नामतः सर्वा रश्मयो वृष्टि सर्जना ।।२०।।
वायुपुराणम् ५३।१७-२०।

सूर्येस्थितः योग्निःजलं पिबन् तपति स दिव्यः "शुचिः" नामा अग्निरासीत् । अयं पार्थिवाग्नि मिश्रितः । अयं शुचिनामाग्निः सहस्रकिरणात्मक पवित्रघटइवास्ति । अयमग्निः सहस्रकिरणैः नदीसमुद्रकूपजलाशयेभ्यः स्थावरजंगमजलबिन्दून् पिबति । अस्य सूर्यस्यसहस्रकिरणाः वर्षाशीततापोत्पादकाः किरणास्सन्ति ।

**वर्षाकारकाः किरणाः**

सूर्यस्यैकसहस्रकिरणेषु चतुश्शत किरणाः वर्षाकारकास्सन्ति । ते च किरणाः चित्रमूर्तय इति नाम्नोच्यन्ते । चित्रमूर्तिकिरणानां चत्वारः मुख्य भेदास्सन्ति— १. वन्दनाः, २. वन्द्याः ३. ऋतनाः, ४. नतनाः । एते सर्वे अमत नाम्नापि चोच्यन्ते ।

एतेषामेवावान्तरभेदाः चतुश्शतसङ्ख्याकाः भवन्ति । सोमतत्वस्य चामृतम् इतिनाम सर्वत्र वेदेषुप्रसिद्धम् । सोमः अर्थात् जल तत्वमेव सूर्यशक्तेः कारणमुक्तम् । तथा च शतपथे :—

अमृतं ह्यापः । शतपथः ३।६।४।१६

अर्थात् जलतत्वमेवामृतम् । तथा च ऋग्वेदे समाम्नायते :—

आणिं न रथ्यम् अमृताधितस्थुः । ऋग्वेदः १।१५।६

अर्थात् यथा कीलैःरथाङ्गानि परस्परं सङ्घटितानि सुरक्षितानि भवन्ति तथैव सूर्योपि जलतत्वमाश्रित्य सुरक्षितः ।

**करकावर्षुकाः किरणाः**

हिमवाहश्च ताभ्योन्याः रश्मयस्त्रिशता पुनः ।
दृश्या मेघ्याश्च बाह्याश्च ह्लादिन्यो हिमसर्जनाः ॥२१॥
चन्द्रास्ता नामतः सर्वा पीताभास्तु गभस्तयः ॥ वायुपुराणम् २१-२२

अर्थात् दृश्याः मेघ्याः बाह्याः, ह्लादिन्यः इत्येते किरणाः हिमसर्जनाः करकावर्षुका इत्यर्थः । सामूहिकरूपेण इमे सर्वे किरणाः चन्द्र नाम्नोच्यन्ते । इमे किरणाश्च पीताभाः भवन्ति ।

**ऊष्मतापोत्पादकाः किरणाः**

शुक्लाश्च ककुभश्चैव गावो विश्वभृतस्तथा ॥२२॥
शुक्लास्ता नामतः सर्वास्त्रिशता घर्मसर्जनाः ।

शुक्लाः, ककुभः, गावः विश्वभृतः इमे चतुर्विधाः किरणाः उष्माणं, तापं, घर्मञ्च जनयन्ति । इमे सामूहिकरूपेण शुक्लनाम्नोच्यन्ते । एतेषामवान्तरभेदा त्रिशता भवन्ति ।

**सूर्यः स्वकिरणैः कथं विश्वं परिपालयति**

सूर्यः स्वकिरणैः कथं विश्वं परिपालयतीति जिज्ञासायां वायुपुराणमग्रे समापत्ते—

समंबिभर्ति ताभिस्तु मनुष्य पितृ देवताः ।
मनुष्यानौषधेनेह स्वधया च पितॄनपि ॥२३।
अमृतेन सुरान् सर्वास्त्रींस्त्रिभिस्तर्पयत्यसौ ।
वसन्ते चैव ग्रीष्मे च स तैस्सुतपते त्रिभिः ॥२४॥
वर्षास्वथो शरदि च चतुर्भिः सम्प्रकाशति ।

हेमन्ते शिशिरे चैव हिमञ्च सृजते त्रिभिः ।।२५।।

ओषधीषु बलन्धत्ते स्वधया च पितृनपि ।
सूर्योऽमरत्वममृतत्त्वन्त्रयं त्रिषु नियच्छति ।।२६।।

एवं रश्मिसहस्रन्तत् सौरं लोकार्थसाधकम् ।
भिद्यते ऋतुमासाद्य जल शीतोष्मानिस्वयम् ।।२७।।

अयं सूर्यः समानरूपेणमनुष्यान्, पितृन्, देवांश्चैतैस्त्रिविधैः किरणैः परिपालयति । क्रमशः ओषधीभिः मनुष्यान्, स्वधया पितृन् अमृतेन च देवान् रक्षति । वसन्ते ग्रीष्मे च सूर्यः त्रिशतकिरणैः उष्माणं तापञ्च जनयति । वर्षर्तौ शरदि च चतुश्शतकिरणैः सोम तत्त्वमाप्याययति । हेमन्ते शिशिरे च त्रिशत किरणैः करकं शैत्यं तुषारञ्च जनयति ।

एवं सूर्य ओषधिषु बलमुत्पाद्य मनुष्यान्तर्पयति । पितृभ्यः स्वधाम् देवेभ्यश्चामृतं प्रवर्तयति ।

एवञ्चात्र सहस्रकिरणानामेवं संग्रहः क्रियते—

| **कालः** | **किरणाः** | **किमुत्पादयन्ति** |
|---|---|---|
| वसन्ते ग्रीष्मे च | ३०० | उष्माणम्, तापम् घर्मम् |
| प्रावृषि शरदि च | ४०० | सोमतत्ववृद्धिम् |
| हेमन्ते शिशिरे च | ३०० | करकाः शैत्यम्, तुषारम् |
| योगः | १००० किरणाः | |

एवं सूर्यभगवान् एकसहस्रकिरणैः समस्तं विश्वं परिपालयति । ऋतुचक्रमनुसृत्यैतेषां बहुशो भेदाः भवन्ति ।

### सूर्यस्य शक्तिस्रोतः

पूर्वमुक्तं यत् सोमतत्वेन सूर्यः संरक्षितः । तथा च युजुर्वेदे समाम्नायते :—

अपां गम्भन्त्सीत् । यजु १३-३८

अर्थात् जलतत्वगर्भे सूर्यो निहितः । अस्य मन्त्रस्य व्याख्या शतपथब्राह्मणे कृता:—

एतद् ह अपां गम्भिष्ठं यत्रैष एतत् तपति । शतपथः ७-५-१-८

अर्थात् निश्चितप्रायमेतद्यत् जलतत्वस्यगम्भीरतमं स्थानं यतः सूर्यस्तपति ।
जैमिनिब्राह्मणे स्पष्टमुक्तम्—

अथ यदेतन्मण्डलं ता आपः । जैमिनि ब्राह्मणम् ३-६३

अर्थात् यदिदं सूर्यमण्डलम् तत् जलतत्त्वमयमस्ति ।

एवमेव ऐतरेयिणः समामनन्ति :—

एष (आदित्यः) वा अब्जोअद्भ्यो वा एष प्रातरुदेति । आपः सायं प्रविशति।
ऐतरेय ब्राह्मणम् ४-२०

निश्चितमेतत्सूर्यमण्डलं जलतत्वादुत्पन्नम् । जलतत्त्वादेवायं सूर्यः प्रातरुदेति सायञ्च जलतत्वमेव प्रविशति ।

जैमिनि ब्राह्मणे समाम्नायते :—

ये ह्वा एत आदित्यस्य रश्मयः एतानि ह्वा एतस्य शृंगाणि मध्ये उह्वा एष यदपाम् । तासु वारवन्तोयम् । जैमिनि ब्राह्मणम् २-१४५

अर्थात् निश्चितमेतत् यत् सूर्य किरणाः तच्छृङ्गाणीव सन्ति । अयं सूर्यः जलतत्त्वमध्ये स्थितः ।

शतपथब्राह्मणे समाम्नायते :—

आपोवार्कः । शतपथ १०।६।५।२
अर्थात् जलमय एव सूर्य इति विज्ञेयम् ।

एवं ऋग्वेदे चापि पश्यते :—

गर्भो योऽपाम् । ऋग्वेदः १।७०।२
अर्थात् सूर्यः जलतत्वस्य गर्भोस्ति ।

शतपथब्राह्मणे व्याख्यायते :—

यच्छुक्लं तदाग्नेयम् यत्कृष्णं तत्सौम्यम् । शतपथः १।६।३।४१

अर्थात् सूर्यमण्डले यः शुक्लोभागः स आग्नेयः यश्च कृष्णोभागः स आप्यः जलमय इत्यर्थः ।

तथा च छन्दोगाः समामनन्ति—

यत्कृष्णं तदन्नमस्य छान्दोग्य ६।४।२

अर्थात् सूर्यमण्डलमध्ये यः कृष्णोभागस्तदन्नम् भोज्यम् आहारभूतम् । कृष्णभाग एव सोममयः जलतत्त्वस्यकेन्द्रम् । तत एव निरन्तरं सूर्यः शक्ति गृह्णाति । इदं जलतत्वमत्यन्तं सूक्ष्मम् । सम्भवतः इदं जलतत्वमाधुनिक विज्ञान परिभाषया हाइड्रोजनगैस तत्वंभवितुमर्हति ।

जैमिनीय ब्राह्मणेऽपि समाम्नायते :—

अथ यदेतन्मण्डलं ता आपः । तदन्नम् । तदमृतम् ।

जैमिनीय ब्राह्मणम् २।६२

अर्थात् यदेतत्सूर्यमण्डलमस्ति तत्सोमतत्वमयम् । अयं सोम एव तस्यभोजनम् आहारोवास्ति । अयं सोमः जलतत्त्वमेव अमृतमस्ति ।

वायुपुराणे जलतत्वात् सूर्ये शक्तिलाभस्य कथाऽतिसारत्येन वर्णितास्ति :—

सप्तरश्मिरथोभूत्वा उदतिष्ठद् विभावसुः । १३८
असह्यरश्मिर्भगवान् पिबन्नम्भो गभस्तिभिः ।
हरितारश्मयस्तस्य दीप्यमानास्तु सप्तभिः ।। १३९ ।.

भूय एव विवर्त्तन्ते व्याप्नुवन्ति वनं शनैः ।
भौमं काष्ठेन्धनं तेजो भृशमद्भिस्तुदीप्यते ।। १४० ।।

तस्मादुदकं सूर्यस्य तपतोऽतिकथ्यते ।
ना वृष्ट्या तपते सूर्यो नावृष्ट्या परिविष्यते ।। १४१ ।।

नावृष्ट्या परिचिन्वन्ति वारिणादीप्यते रविः ।
तस्माद्यः पिबन्यो वै दीप्यते रविरम्बरे ।। १४२ ।।

वायु पुराणम् अ० १००।१३८-१४२

सप्तकिरणरूपाश्वरथवान् सूर्यः तापकारणात् स्वकिरणैर्जलं पिबन्नुदेति । तस्य सूर्यस्य हरितनामानः किरणाः पूर्वोक्त सप्तकिरणैः दीप्ता सन्तः पुनः सूर्यमण्डलस्थ जलतत्वं प्रविशन्ति । यथा काष्ठादिप्रज्वलिते पार्थिवाग्नौ जलेप्रक्षिप्तेसति महती ज्वाला निर्गच्छति तथैव सूर्योपि जलतत्वेन भृशमुत्तपते । सूर्यः जलं विना न तपति । जलं विना तस्य परिवेशोपि न जायते । सूर्यः जलं विना स्वकिरणानपि न सन्नियच्छति । जलेनैव सूर्य प्रदीप्यते । अतोऽम्बरे जलं पिबन्नेव सूर्यः दीप्तो भवति ।

एतैः प्रमाणैस्सुतरां सिध्यति यत् सूर्यः जलतत्वाच्छक्ति गृह्णाति । अतएव निरन्तरं प्रतपन्नपि न ह्रासमुपैति सुसूक्ष्मं जलतत्वन्निरन्तरं तच्छक्तिं परिपुष्णाति ।

**अन्यग्रहनक्षत्रनिर्माणे सूर्यकिरणानां प्रभावः**

अन्य ग्रहनक्षत्राणां निर्माणे सूर्यकिरणानां कः प्रभावोस्तीत्यत्र विशदं व्याख्यातम् तथा च वायुपुराणे :—

इत्येतन्मण्डलं शुक्लं भास्वरं सूर्य सञ्ज्ञितम् ।
नक्षत्रग्रहसोमानां प्रतिष्ठायोनिरेव च ।।
ऋक्ष चन्द्रग्रहास्सर्वे विज्ञेयाः सूर्यसम्भवाः ।। २८ ।।

नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः ।
शेषा पञ्चग्रहाः ज्ञेयाः ईश्वराः कामरूपिणः ।। २९ ।।
पठ्यते चाग्निरादित्यः औदक श्चन्द्रमास्ततः ।
शेषाणां प्रकृतिं सम्यग्वर्ण्यमानां निबोधत ।। ३० ।।

वायुपुराणम् अ० ५३

शुक्लवर्णं सूर्यमण्डलं समस्त ग्रहनक्षत्राणां जन्मदातृ सत्ताधारकञ्चास्ति। चन्द्रमाः नक्षत्राणामधिपति सूर्यश्च ग्रहाणाम् । शेषाः पञ्चग्रहाः ईश्वराः कामरूपिणश्च सन्ति । सूर्योऽग्निमयः चन्द्रश्चोदकमयोस्ति । शेषाणां प्राकृतिरग्रे वक्ष्यते :—

रविरश्मिसहस्रं यत् प्राङ्मया समुदाहृतम् ।
तेषां श्रेष्ठा पुनः सप्त रश्मयो ग्रहयोनयः ।। ४४ ।।
सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च ।
विश्वश्रवाः पुनश्चान्यः सम्पद्वसुरतः परम् ।
अर्वावसुः पुनश्चान्यो मया चाग्रे प्रकीर्तितः ।। ४५ ।।
सुषुम्णः सूर्यरश्मिस्तु क्षीणं शशिनमेधयन् ।
तिर्यगूर्ध्वं प्रभावोसौ सुषुम्णः परिकीर्त्यते ।। ४६ ।।
हरिकेशः पुरस्त्वाद्या ऋक्षयोनिः प्रकीर्त्यते ।
दक्षिणे विश्वकर्मातु रश्मिर्वर्धयते बुधम् ।। ४७ ।।
विश्वावसुस्तु पश्चात् शुक्रयोनिस्स्मृतोबुधैः ।
सम्पद्वसुश्च यो रश्मिः सयोनिर्लोहितस्य च ।। ४८ ।।
षष्ठस्त्वर्वावसू रश्मिर्योनिस्तु स बृहस्पतेः ।
शनैश्चरं पुनश्चापि रश्मिराप्यापते स्वराट् ।। ४९ ।।
एवं सूर्यप्रभावेण ग्रहनक्षत्रतारकाः ।
वर्द्धन्ते विदिता सर्वा विश्वञ्चेदं पुनर्जगत् ।। ५० ।।

वायुपुराणम् अ ५३।४४-५०

पूर्वोक्त सहस्रसूर्यकिरणेषु सप्तकिरणाः श्रेष्ठास्सन्ति । इमे सप्त किरणाः ग्रहनक्षत्राणां जन्मदातारः पालयितारश्च सन्ति । तथा चैतेषां नामानि :—

१. सुषुम्णः, २. हरिकेशः, ३- विश्वकर्मा, ४. विश्वश्रवाः, ५. सम्पद्वसुः, ६. अर्वावसुः, ७. स्वराट् ।

सुषुम्णनामकः रश्मिः चन्द्रमसं प्रकाशयति तस्मै शक्तिञ्चददाति । अस्यकिरणस्येदं वैशिष्ट्यं यदस्य प्रभावः उभयत्रोर्ध्वाधः प्रवर्तते । हरिकेश प्रभृतयः किरणाः नक्षत्राणि जीवयन्ति प्रकाशयन्ति च । दक्षिणस्यां दिशि विश्वकर्मा नामकः बुधंवर्धयति । पश्चिमस्यां दिशि विश्वश्रवा नामकः किरणः शुक्रं प्रकाशयति च । सम्पद्वसु नामकः

किरणः मंगलग्रहं वर्धयति प्रकाशयति च । अर्वावसुनामकः किरणः बृहस्पतिं वर्धयति प्रकाशयति च । सप्तमः स्वराट् नामकः किरणः शनैश्चरग्रहं वर्धयति प्रकाशयति च ।

एवं सर्वे ग्रहाः नक्षत्राणि च सूर्यात् शक्ति लभन्ते वर्द्धन्ते च । तथैव सर्वं जगत् उत्तरोत्तरमुन्नतिपथमारोहति । सर्वमेतत् भगवतस्सूर्यस्यैव मायाप्रपञ्चः ।

**सूर्यमण्डलकेन्द्रे विक्षोभः**

सूर्यमण्डले विक्षोभो जायते, कोऽस्यार्थः किं वा प्रयोजनमितिनाद्यापि प्रकाशपथमागतम् । किन्तु सूर्यमण्डल केन्द्रक्षोभस्य परिज्ञानमाधुनिकवैज्ञानिकैरपि न तिरोहितम् । वैदिकवाङ्मयपरिशीलनाज्ज्ञायते यत् सूर्यमण्डलकेन्द्रक्षोभस्य प्रयोजनम् सूर्यशक्तिवर्द्धनमेवास्ति ।

यदा सूर्यः प्रातरुदेति तदार्द्धनिमीलित नेत्राभ्यां सूर्यदर्शने ज्ञायते यत्तत्र ऊर्मिचक्रमिव दृश्यते । सूर्यमण्डलकेन्द्रे यदूर्मिचक्रं दृश्यते तदेव वैदिकवाङ्मये सूर्यसोमसरोवरक्षोभ इत्युच्यते । अयं क्षोभः अत्यन्ततीव्रगत्या भवति । अयमेव क्षोभः विद्युद्धारोत्पादकं यन्त्रमिव सूर्यस्य प्रतिभाति । तथा च छन्दोगाः समामनन्ति—

एतदादित्यमध्ये क्षोभत इव । छान्दोग्योपनिषद् २।१-४
अर्थात् सूर्यमण्डलकेन्द्रे क्षोभोभवति ।

**सूर्यः महान् विद्युद्भाण्डागारः**

आधुनिकभौतिकविज्ञानविदामनुसन्धानेनैतत्स्पष्टं यत् सूर्यः निरन्तरं विद्युद्वर्षां कुर्वन्नास्ते ।इदञ्च वैदिक वाङ्मये पूर्वत एव प्रसिद्धम् । तथा च ऋग्वेदे समाम्नायते—

विद्युद्धस्ता अभिद्यवः । ऋग्वेदः—८।७।२५

अर्थात् किरणाः विद्युद्रूपपाणिमन्तस्सन्ति ।

तथा च तैत्तिरीयाः समामनन्ति—

विद्युत्सूर्ये समाहिता । तैत्तिरीयारण्यकम् १-८

अर्थात् सूर्यमण्डले विद्युतस्सन्निहितास्सन्ति ।

स्पष्टञ्च ऋग्वेदे समाम्नायते—

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः । ऋग्वेदः २।१।१

अर्थात् विद्युत् सूर्य किरणै रुत्पद्यते, सा च तत्कालं सर्वं ध्वंसयति ।

याते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परिसावृणक्तु नः ।
सहस्रं ते स्वपिवात भेषजा मानस्तोकेषु तनयेषु रीरिषः ।। ऋग्वेदः ७।४६।३

हे घोषवन् सूर्य, तव विद्युद्रूपं वज्रं यत्त्वया अन्तरिक्षे मेघमण्डलभेदनाय क्षिप्तं तत् पृथिवीं प्रकम्पयन् सर्पति । तद्वज्रं अस्मत्पुत्रपौत्रवधं न कुर्यात् । अपितु सहस्र-विधौषधपरिपुष्टजलरूपेण प्रस्तुतं भवेत् ।

सद्र शब्दः इन्द्रस्य पर्यायः । इन्द्रश्च शूर्यशब्दस्य पर्यायः । तस्मादिन्द्रशब्देनात्र-सूर्यो गृह्यते इन्द्रस्य वज्रेण सर्वे परिचितास्सन्ति यत् विद्युदेवेन्द्रस्य वज्रमस्ति । सूर्यएव तद्वज्रं प्रक्षिपति । अतः स्पष्टं यत् सूर्यः विद्युतांराशिरस्ति ।

वायुपुराणे पठ्यते यत् सूर्ये सर्वे देवराक्षसगन्धर्वा निवसन्ति । वस्तुतः पुराणोक्तानि सर्वाणि नामानि वैदिकपारिभाषिकाणि सन्ति । पारिभाषिकार्थज्ञानानन्तरं सर्वं सुस्पष्टं विज्ञायते ।

भुजंगश्च महापद्मः सर्पः कर्कोटकस्तथा ।
चित्रसेनश्च गन्धर्वः उर्णायुश्चैव तावुभौ ।। १७ ।।

उर्वशी विप्रचित्तिश्च तथैवाप्सरसौशुभे ।
तार्क्ष्यश्चारिष्टनेमिश्च सेनानी ग्रामणीश्च तौ ।। १८ ।।

विद्युत् स्फूर्ज्जश्च तावुभौ यातुधानावुदाहृतौ ।
सहे च सहस्ये च वसन्ते ते दिवाकरे ।। १९ ।।

वायुपुराणम् अ० ५२।१७-१९

अर्थात् सूर्यमण्डले मार्गशीर्षे पौषे च महापद्म कार्कोटक नामानौसर्पौ चित्र-सेनोर्णायुनामानौगन्धर्वौ, उर्वशी विप्रचित्तिनामिन्यौ अप्सरसौ विद्युत् स्फूर्ज्जनामानौ राक्षसौ च वसन्ति ।

अस्मिन्नाख्याने द्रष्टव्यमेतत् यत् सर्पनामानः केचन सूर्यकिरणा उच्यन्ते। एवमेव उर्वशी विप्रचित्ति नाम्न्यावप्सरसावपि विद्युद्वाचिन्यौस्तः । वस्तुतः अप्सरस शब्दस्यार्थः—अप्सु सरतीति व्युत्पत्या विद्युदेव भवति । विद्युत् जलसांस्पर्शेन तीव्रं धावति । इरम्मदश्चान्यः शब्दोपि विद्युत्पर्यायः लोके वेदे च प्रयुक्तः । इरा उदकं तया माद्यतीति इरम्मदो विद्युत् उच्यते । उर्वशी नाम्नापि विद्युदेवाख्यायते । उरूभ्यां विशालाभ्यां शक्तिभ्यांमश्नुत इत्युर्वशी विद्युत् । विद्युतः शक्तिद्वयंबृहत् रयिश्च प्राणश्च। रयिस्तु ऋणम् प्राणश्च धनम् । इमावेव रयिप्राणौ समस्तं जगद् व्याप्नुतः ।एतयोरेव न्यूनाधिकतया संसारस्य सर्वे पदार्था विनिर्मिताः । संक्षेपेणात्रैकमुदाहरणं द्रष्टव्यम् । स्त्रियां ऋण विद्युतः प्राबल्यम् पुरुषे च धनविद्युतः । संसारे यत्र यत्र रयी (ऋणम्) प्राधान्येनास्ति तत्र स्त्रीत्वम् । यत्र च प्राणः (धनम्) प्राधान्येन वरीवर्ति तत्र पुरुष-त्वम्प्राधान्यमस्तीति विज्ञेयम् । इदं तत्त्वं सर्वत्र द्रष्टुं शक्यते । सर्वेषां प्राणिनां शरीरे वामांगं रयि प्रधानं ऋणात्मकं वास्ति । दक्षिणांगञ्च प्राणप्रधानम् धनात्मकमस्ति । सृष्टेस्सर्वे पदार्थाः रयीप्राणयोः ऋणधनयोः न्यूनाधिकतया सन्निवेशेन विनिर्मितास्सन्ति । पूर्वोक्त पुराणश्लोकेषु विद्युत् स्फूर्ज्जनामख्यौ राक्षसावुक्तौ किन्तु परमार्थतस्तौ विद्युद्वाहकौ सूर्यस्य द्वौ किरणौ स्तः यौच हेमन्ते विशेषरूपेण क्रियाशीलौ भवतः ।

सूर्यस्य किरणाः विद्युन्मया इति सम्यगुक्तम्पूर्वम् । तत्र विद्युतां तरंगाः भवन्ति । विद्युत्तरंगा वैदिकभाषायां 'छन्दांसि' उच्यन्ते । यथा गानकाले लघुतरलघुतमबृहत्तर-बृहत्तमाः नानाविधा तरंगा आकाशे वायुमण्डले जायन्ते तद्वत् सूर्यकिरणेभ्यः विद्युत्सु उच्च उच्चतर नीचनीचतर उच्चतम नीचतमा नानाविधा तरंगा प्रादुर्भवन्ति । एते सर्वे तरंगाः सप्तविधा भवन्ति । एतद् विषये विष्णुपुराणे पठ्यते—

हयाश्च सप्तछन्दांसि तेषां नामानि मे शृणु ।
गायत्री च बृहत्युष्णिक् जगती त्रिष्ठुबेव च ।
अनुष्टुब्पङ्क्तिरित्युक्ताश्चछन्दांसि हरयो रवेः ।। १७ ।।

विष्णुपुराणम् अ० २।८।७

अर्थात् सूर्यस्य, सप्ताश्वा , सप्तछन्दांसि । गायत्री, बृहती, उष्णिक्, जगती, त्रिष्टुप्, अनुष्टुप पंक्तिरितीमे सप्ताश्वाः सूर्यस्य ।

अस्यायमाशयः यत् पूर्वोक्तानां सप्त किरणानामेते सप्ततरंगास्सन्ति । प्रथम-किरणस्य तरंगा गायत्री छन्दोगानाभ्युत्थिततरङ्गा इव भवन्ति एवं क्रमशो ऽन्य-त्राप्यूह्यम् ।

ताण्ड्य ब्राह्मणे समाम्नायते—
छन्दोभिर्देवा आदित्यं स्वर्गलोकमाहरन् । स नाध्रियत ।

तं वैराजस्य निधने अदृहन् । तस्मात् पराङ् च अर्वाङ् च आदित्यस्तपति । पराङ् चार्वाङ् चेकारः । ताण्ड्य ब्राह्मणम् । १२।१०।६

अर्थात् सूर्यकिरणा आदित्यनामकोर्ध्वगामिनो किरणान् छंदोद्वारा अर्थात् तरंगद्वारा स्वर्गं निन्युरर्थात् सूर्यस्यापरभागे समाहरन् । स तत्र न स्थिरतामाप । तान्किरणान् वैराजस्यनिधनेन साम्ना स्थापितवन्तः । अतएव सूर्य उभयत्र तपति ऊर्ध्व-ञ्चाधरञ्च । उभयत्र इकारोस्ति ।

अस्यायमर्थः यथा ईकारे स्वरे तरंगः गतिर्वा ऊर्ध्वमधश्चदृश्यते तथैव सूर्यस्य उपरितनाधस्तनयोः किरणेषु तरंगाः भवन्ति ।

जैमिनी ब्राह्मणे लघुमहत्तरंगयोरुल्लेखो दृश्यते :—

कनीयांसि छन्दांसि ज्यायस्सु छन्दस्सु अध्यूहन्ति ।
जित दैवतानि ता एतानि वत कनीयांमि तस्मात् ज्यायस्सु
छन्दस्सु अध्यूहन्ति ।

जैमिनी ब्राह्मणम् १।१६८

लघुतरास्तरंगा बृहत्तरतरंगादूर्ध्वं तिष्ठन्ति । इमे लघुतरंगाः जित दैवता-कास्सन्ति । अतएव ते वृहत्तरंगेभ्य ऊर्ध्वं वसन्ति ।

## सूर्यकिरणैः पृथिव्यादि ग्रहधारणम्

गतिशीलां पृथिवीं गतिमन्तं द्युलोकञ्च सूर्यः स्वकक्षायां निजकिरणैर्व्यवस्थापयति । एतद्विषये ऋग्वेदे समाम्नायते :—

यः पृथिवीं व्यथमानामदृंहत् यः पर्वतान्प्रकुपितां अरम्णात् ।
यो द्यामस्तभ्नात् स जनास इन्द्रः ।। ऋग्वेदः २।१२।२

यः कम्पमानां पृथिवीं स्थिरामकरोत्, कम्पनशीलान्पर्वतांश्च यः स्थैर्यमापादयत्। यः विस्तृतमन्तरिक्षं विममे यश्च द्युलोकं ग्रहनक्षत्रमण्डलं वा प्रत्यष्ठापयत् स एव इन्द्रः सूर्य इति वेद्यम् ।

स प्राचीनान्पर्वतानदृंहदोजसा अधराचीनमकृणोदपामपः ।
अधारयत् पृथिवीं विश्वधायसम् अस्तभ्नात् मायया द्यामवस्रसः ।।
ऋग्वेदः २।१७।५

सः सूर्यः स्वशक्त्या मेघान् अधोऽवाथातयत् । अथवा पर्वतानां हिमखण्डान् स्वोष्मणा निर्गलय्य तेषामुन्नमनमवारुणत् नीचैश्च जलधारामवातारयत् । सः सूर्यः अद्भुतया स्वमायया समस्तप्राणिपालयित्रीम् पृथ्वीं धारितवान् तथाद्युलोके ग्रहनक्षात्राणि नीचैर्पतनान्निरुध्य तत्तदक्षेषु स्थिराणि चक्रे ।

सविता यन्त्रैः पृथिवीमरम्णात् ।
अस्कम्भने सविता द्यामदृंहत् ।। ऋग्वेदः १०।१४९।१

सूर्यः पृथिवीमाधाररहितं द्युलोकञ्च स्वनियामक किरणैर्दाधार ।

व्यस्तभ्नात् रोदसी विष्णवेते
दाधर्थ पृथिवीमभितोमयूखैः ।। ऋग्वेदः ७।९९।३

सूर्यः भूमिं द्युलोकञ्च सर्वतः निजकिरणै धारितवानस्तीति विज्ञेयम् ।

एतैरुदाहरणैस्पष्टमस्ति यत् सर्वेषां ग्रहनक्षत्राणां स्वाक्षेषु नियमनं सूर्यः स्वकीयैः किरणैरेव विदधाति ।

## सूर्यस्यैकस्मिन्नाम्निसर्वं सूर्यविज्ञानम्

सूर्यस्यैकं नाम संवत्सरः अस्ति । अस्य नाम्नः शुद्धार्थपरिज्ञानेऽन्तर्दृष्टेरुद्घाटनं भवति । तदुक्तं जैमिनीयब्राह्मणे :—

अथो आहुः आदित्य एव संवत्सरः । एतं हि सर्वाश्रीः सर्वं यशः सर्वेदेवाः तस्मादादित्यएव संवत्सर इति । तस्य यद्भाति तत् संवत् यन्मध्ये कृष्णं मण्डलं तत्सरः इत्यधिदैवतम् । जैमिनीयब्राह्मणम् २।६०

उक्तं महर्षिभिर्यत् सूर्य एव संवत्सर इति । तस्मिन् लक्ष्मीः यशः सर्वेदेवाः अर्थात् प्राणाः निवसन्ति । अतः सूर्यस्य संवत्सरनामसार्थक्यं भवति । सूर्यस्य योभागः प्रकाशमानो दृश्यते सः संवत् शब्देनोच्यते, अर्थात् सः कालस्य निर्णायकोऽस्ति । सूर्यमध्ये च यः कृष्णोभागः दृश्यते स एव 'सरः' जलाशयः 'सोमसरोवर' इत्युच्यते । तत एव सोमपानं कृत्वा सूर्य निरन्तरं शक्ति लभते न कदाचिन्मनागपि ह्रासमुपैति । सोम एवामृतम् । एतदमृतं पीत्वैव निरन्तरं देवरूपाः सूर्यकिरणाः अमरत्वमश्नुवते । इदञ्चाधिदैवतं व्याख्यानं । अनेन सूर्यस्य दिव्यत्वं व्याख्यातमिति विज्ञेयम् ।

## उपसंहारः

एवमत्र सूर्यसंबन्धे स्वल्पं व्याख्यातम् । वस्तुतस्त्वनन्तं खलुसूर्यविज्ञानम् । सूर्यस्य सप्त सुप्रमुखकिरणेषु छन्दांसि (कम्पन विशेषाः तरंगविशेषावा उदात्तानुदात्त-स्वरिताः) गानस्वराश्च षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाख्याश्च सन्ति । समस्ता वेदाः समस्तं विज्ञानं सूर्यकिरणेष्वेवावस्थितम् । महाप्रलयानन्तरं ऋषयः सूर्य-किरणेभ्य एव वेदज्ञानं प्राप्नुवन्ति । पूर्वं व्याख्यातं यत् विश्वश्रवाः नाम एकः किरणोऽस्ति । अयं किरणः समस्तान् शब्दान् शृणोति । अतएवास्य विश्वश्रवा इति नाम्नः सार्थक्यमुपलभ्यते । योगिनः एतत्किरणेन सह स्वकीयं साक्षात् संबन्धं संस्थाप्य पुरातनान्-शब्दान्पुनः श्रोतुमवगन्तुञ्च शक्नुवन्ति ।

सूर्यमण्डले सर्वेषां पशुपक्षिमनुष्याणां समुच्चारिताः शब्दाः प्राकृतविकृतसंस्कृतध्वनयश्च, छन्दांसि, रागाः रागिण्यः, रूपाणि, आकृतयः, विचारा, कल्पनाश्च किरणमाध्यमेन सन्निविष्टाः । यदीयं किरणविद्या कस्यचिद्धस्तंगता भवेत् चेत् रामायणमहाभारतकालीन-शब्दरूपाकृतिविचारसंचाराणां साक्षात्कारोऽवश्यं तस्य भवितुमर्हति । एतादृशः साक्षात्कारः महर्षि व्यासेन एकदा पाण्डवानामाग्रहेणप्रदर्शितः इति महाभारतादवगम्यते । एतयाविद्यया कस्यापि प्राचीनमहर्षेः रूपविचारवाक्स्वरभंगिमादीनां ग्रहणं तथैव कर्तुं शक्यते यथाधुना रेडियोटेलीवीजनयन्त्रमाध्यमेन यथेष्टं श्रव्यदृश्यविज्ञानं भवति ।

सूर्यविज्ञानं वैदिक प्राणविद्याया अंगमेकम् । एजज्ज्ञानेन इच्छानुसारेण मृत्योरपाकरणं कर्तुं शक्यते । वृद्धस्य यौवनत्वं, रोगिणां नैरोग्यं, मृतस्य पुनर्जीवनञ्च सम्भाव्यते तत्कालं कस्यचिद्वस्तुनः रूपान्तरकारित्वं नूतनस्य पदार्थस्य निर्माणञ्च नासम्भवमित्यनुमीयते । महाभारतकालपर्यन्तमियं विद्या भारतवर्षे विस्तृताऽऽसीदिति महाभारतादवगम्यते । सूर्यः न केवलं भौतिकपदार्थनिर्माणे कारणमपि त्वाध्यात्मिक-विकासेऽपि महत्वपूर्णो हेतुः । वेदमातु गायत्र्याः ऋचः सूर्य एव देवतास्ति । ईश्वरस्योपमा वेदेषु सूर्यस्यैव प्रदत्ता आदित्यवर्णं तमसः परस्तात् । इति

अर्थात् अन्धकाररहितः तेजोमयः सूर्यइवेश्वरोऽस्ति ।

सूर्य आत्मा जगतस्तस्थुषश्च ।

सूर्यः समस्तस्थावरजंगमसृष्टेरात्मास्ति ।

प्राणः प्रजानामुदयत्येष सूर्यः ।
अयंसूर्यः प्रजानां प्राणिनां प्राणः उदितो भवति ।

इत्यादि श्रुतिभिस्सूर्यस्याध्यात्मिकत्वमपि न तिरोहितं विदुषाम् । अतएव सूर्य-मभिमुखीभूय संध्यावन्दनादिकं कर्त्तव्यमिति सर्वत्रैवाध्यात्मविदां विनिश्चयः । एवञ्चैवोपासनाकाण्डे प्रतिपदमनुशिष्यते । नमो भगवते जगदात्मने विश्ववेदसे ।

इति शम्

# संस्कृत काव्यालोचनस्य नवीना रीतिः

**गौरीकुमार ब्रह्मा**

एतस्मिन्नधिवेशने 'संस्कृत-काव्यालोचनस्य नवीनारीतिः' इति विषयमधिकृत्य किमपिवक्तुं समुद्यतोऽहं। गत द्विशताधिक वर्षाभ्यन्तरे पाश्चात्यशिक्षाप्रभावात् अस्माकं भारतीयानां सामाजिक जीवनं बहुधा परिवर्तितम्, तथैव प्राचीनानां काव्यादीनां परिशीलन क्रमोऽपि शनैः शनैः परिवर्त्तित एवेति नात्र संशयः, परन्तु, त्रिंशद्वर्षम-भिव्याप्य शिक्षकजीवनयापनावसरे एतन्मया दृढ़मनुभूतं यत् संस्कृतभाषा निबद्धानां प्राचीनानामपि काव्यानां नवीनदृष्टिसम्पना व्याख्या समधिकरूपेण प्रवर्त्तनीया। अनुभूयते बहुषु स्थलेषु संप्रति प्रवहमाना व्याख्यान रीतिः नव्य-शिक्षित-प्रवराणां चित्तानुरंजनं कर्त्तुं न शक्नोति। परन्तु नव्यदृष्टिसम्पातेन यदा काव्यांशा व्याख्याता भवन्ति, तदा नव्यपाठकसमाजस्य मनस्ते आलोड़यन्ति। विश्वविश्रुतस्य बाणभट्टस्य कादम्बरी काव्यात् विषयोद्धारपूर्वकं मदुद्देश्यं स्पष्टीकरिष्यामि। एतत् काव्यस्य मूलभागे राज्ञः शूद्रकस्य राज्यशासनं कविना वर्णितम्। तेन विपश्चिता कथितम्—

"यस्मिंश्च राजनि।·········परलोकाद् भयम्"॥

एतस्य काव्यांशस्य अर्थावगमनं मर्म-प्रतिपादनं च गतानुगतिकया रीत्या भवत्येव। संसृष्टिसंकराद्यालंकारिकया दृष्ट्या प्रायशः एतस्य वैचित्र्य प्रदर्शनं क्रियते तद्विदैः। अपरन्तु अस्मन्मते जनताजनार्द्दनसेवापरायणेन जननायककल्पेन बाणभट्टेन तस्य 'Election manifesto' निर्वाचन विज्ञापनं अत्र समावेशितम्। कविः स्वपाठकान् निवेदयति—हे भावुकाः, मत्काव्य--पाठकाः, यदि कस्मिन्नपि काले भवतां आदरदान-फलेन अहं राज्यस्यास्य मुख्यमंत्री अथवा मंत्रीमण्डलस्य संघटको वा भवामि; तर्हि, एवं करिष्यामि, येन जनानां दरिद्रता हीनता वा दूरी भविष्यति। कृषकाः करभारेण न निष्पेषिता भविष्यन्ति, लोक—चरित्रस्य मानोन्नतिः अवश्यं भविष्यति। महात्मना गान्धीमहोदयेन यत् कथितं तेन प्रकारेण जनसाधारणेन मादकद्रव्यसेवनं न भविष्यति।

सुरभारतीविचित्र-भाव वैभव—सम्पन्नेति विदितचरमेव सर्वेषाम् । यदा भारतस्य सुदिनमासीत्, तदा मनुना सगर्वमुद्घोषितम्—

एतद्देश·········सर्वमानवाः ।।

तथा, वैदिकभारतस्य गौरवौज्जलसमये धनाधिष्ठात्री देवी लक्ष्मीः भारत वर्षं प्रति अनुराग-वती संजाता । तदा शुकपिक-कण्ठेष्वपि "स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरो गिरन्ति" न्यायेन संस्कृत वाणी चिरप्रसृता आसीत् । परन्तु तत्-परवर्त्तिनि काले संस्कृत कविना खेदमण्डितेन मनसा समुद्गीतम्—

यावदेव कमला·········वर्जितः ।

एष मे दृढ़विश्वासः, यत् सुदूरे भविष्येऽपि काले सुरभारत्याः निर्मूलनं न भविष्यति । यं सर्पं, वृश्चिकं वा दर्शनमात्रेण जना मारयन्ति तेषामपि वंशोच्छेदः न संघटितः । कथं सुरभारत्याः विलोपसाधनं भविता ? यदा भवादृशाः शतशो विद्वांसः तस्या आराधनां कुर्वन्ति ।

इतिशम्

# भावयित्र्याः स्वरूपम्

श्री राममूर्ति त्रिपाठी

ध्वनिप्रस्थापकपरमाचार्यास्तावदानन्दवर्द्धनाचार्यास्तदनुयायिनोऽभिनवगुप्तपादा-दयश्च न तमालोचकमूरी कुर्वन्ति यः प्रतिमेयान्तरमाश्रित्याविष्कृतं क्रमागतं प्रतिमानं व्युत्पत्त्यभ्यासाभ्यां च बुद्धिसात् कृत्य नवे काव्यात्मके प्रतिमेये सञ्चारयति, अपि तु तं समुद्घोषयन्ति यः खलु समालोचनीयामभिनवां काव्यात्मिकां कृतिसहृदयतयाऽधीत्य तत्प्रभवप्रभावावेशेन कवेः प्रतिभां साक्षात्करोति, बीजस्थानीयां काव्यानुभूतिमधि-गच्छति, तदभिव्यञ्जनपरां सकलां सामग्रीं प्रधानाप्रधानतया विविच्य निभालयति-इत्थञ्चालोचनीयां कृतिमाश्रित्य प्रतिभासंरम्भगोचरीभूतां तत्त्वमधिगत्य तत्प्राधान्येन कृतिपटनिर्माण प्रवणतन्तुततेरनावृतिमादधाति, स एवालोचकः कृतिव्याख्याकारः। अतएव प्रथमतः ध्वनिवादिभिरेवार्थपक्षमधिकृत्य काव्यस्य त्रिधा प्रकाराः निरूपिताः, न त्वन्यात्मवादिभिः। एतेन नितरां स्पष्टं यत् निर्णयात्मकमालोचनं न तावत्प्रशस्तं यावद् व्याख्यात्मकम्। प्रतिभाप्रसूता कृतिः सर्वथाऽभिनवो, प्रतिमानञ्च तत्पूर्ववर्ति प्रतिमेयमाश्रित्याविष्कृतम्-ततस्तस्य नवायां कृतौ सञ्चारः नौचित्यमावहति। यदि प्रतिभाप्रसूतायां तत्कृतौ सौन्दर्यं चारुता वा, तत्तन्निहितव्यवस्थाया एव परिणतिः, सैव व्यवस्था तदर्थं तत्प्रसूतं प्रतिमानम् सैव व्यवस्था समालोचकेन स्वकीयभाव-यित्र्याख्यया प्रतिभया साक्षात्कर्त्तव्या, परार्थमपि प्रदर्शनीया। एवञ्च सत्समालोचकः स एव यत्र यत्र नैसर्गिकी प्रतिभा। व्युत्पत्त्यभ्यासाभ्यामार्जिताप्रतिभाऽभिनवकृतेश्चा-रुतां सम्यक् समुद्घाटयितुमक्षमैव। आचार्यनिर्दिष्टानां प्रतिमानानान्तावदिदमेव सार्थक्यं यन्नैसर्गिकीं प्रतिभामलभमानोऽपि काञ्चित्काव्यकृतिमधिकृत्य किञ्चिदधिगच्छेत्संव्या-हरेच्च।

अत्रालोचनप्रक्रियायामयमप्येकः प्रश्नः विचारणीयो यदालोचकस्यापि प्रतिभा कवेरिव नवनवोन्मेषशालिनी, उत यथातथग्राहिणी ? अत्र केचन निगदन्ति यत्कवेरिवा-लोचकस्यापि प्रतिभा नवनवोन्मेषशालिनी—अतएव तेन तया कवेरभिप्रायादाशयाद्वा-ऽधिको भिन्नञ्चाप्यर्थः कश्चिदुद्घाट्यते—इति स्पष्टमसकृदालोक्यते। आलोचकः कृतिगते बीजभूते मूलधने किञ्चिदधिकं योजयति, ततश्च मूलधनं मिश्रधनं भवति, तदेवालोचकः प्राकट्यमानयतिस्वकीयया गिरा। इत्थञ्च तत्सर्वं नवनवोन्मेषशा-

लिन्या एवं प्रतिभाया एवाहोपुरुषिका । अयमाशयः—कविकृतौ बीजभूतं यत्किमप्यासीत्, तत्रालोचकेनापिकिञ्चित् योजितम्, तस्यापि स्वीया दृष्टिस्तत्र संभिन्ना एवञ्चालोचकेन तदेव केवलं नोद्घाटितं यत्पूर्वतः तत्र कृतावासीत् परन्तु ततोऽधिकमपि किञ्चित् । किन्तु

"तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ।

इति निगदतामानन्दवर्द्धनाचार्याणां मते समालोचकस्य भावयित्री प्रतिभा कवेरिव स्वतन्त्रा, यतो नवनवोन्मेषशालिनी, प्रत्युतानुधाविका, अतएव 'तत्त्वार्थदर्शिनी' यथातथग्राहिणी । यदस्ति पूर्वतः काव्यबीजभूतमालोच्यकाव्यसर्वस्वभूतन्तदुद्घाटिका, न तु बीजादातिरिक्तस्य कस्यचित्प्रकाशने तस्या भवेत् काचिन्महत्याहोपुरुषिका । अथापिततोऽतिरिक्तं भवेन्न तेनालोच्यकाव्यस्य मर्मोद्घाटनम् । वस्तुतस्तु नैसर्गिकी प्रतिभामलभमानः कविः स्वयं सर्वमनधिगच्छन् आवेशवशात् कवयति आलोचकस्तत्त्वमधिगच्छति । अतएवानन्दवर्द्धनाचार्येण 'बुद्धौ तत्वार्थदर्शिन्याम्' इति साकूतमुक्तम्, न तु 'नवनवोन्मेषशालिन्यां बुद्धाविति । आलोचकेन न केवलेन सहृदयेन भवितव्यमपि तु ततोऽप्यधिकेन । सहृदयस्तु काव्यवासनापरिपक्वबुद्धि-तत्त्वार्थमेव गृह्णाति, आलोचकस्तु तत्त्वमधिगम्यान्यस्मिन्नपि संचारयति तत्प्रकाशनेन । इत्थञ्चायं सम्पिण्डितोऽर्थ यदानन्दवर्द्धनाचार्यमते भावायित्र्याःस्वरूपं तत्वार्थग्राहकम् न तु कवेरिव नवनवोन्मेषशालि, कृतिपारतन्त्र्यात्तत्त्वोद्घाटनपर त्वाच्च । शोधकस्त्वेवं कर्तुमर्हतीति दिक् ।

# श्लिष्ट परम्परितरूपके मतभेदेन आरोपविचारः

**एस० वेङ्कटकृष्णः**

समासगतपरम्परितरूपकस्थले तत्पुरुषावयवभूते कर्मधारये पूर्वपदार्थस्य अभेद-संसर्गेण उत्तरपदार्थविशेषणत्वेन उपमेये उपमानाभेदसमर्थकत्वं न सम्भवति । 'यत्सम्बन्धिनी यत्सम्बन्ध्यभेदः तस्मिंस्तदभेदः' इतिव्युत्पत्तेः ।

'सौजन्यचन्द्रिकाचन्द्रो राजा' इत्यत्र चन्द्रिकायां सौजन्याभेदो राज्ञि चन्द्राभद-समर्थक इत्यभिमतम् । तत्तु न सम्भवति । सौजन्यविशेष्यक-अभेद संसर्गकचन्द्रिका-प्रकारकारोपेणैव सिद्ध्यति, नतु चन्द्रिकायां सौजन्याभेदेन ।

'सौजन्यंते नराधीश चन्द्रिका त्वं सुधानिधिः' इत्यत्र राजसम्बन्धिनि सौजन्ये चन्द्रसम्बन्धिचन्द्रिकाभेदसिद्ध्या राजनि चन्द्राभेदसिद्धिर्भवति ।

नच चन्द्रिकायां सौजन्याभेदबोधे सौजन्ये तदभेदोऽपि भासते, तुल्यसामग्रीकत्वात् इति वाच्यम् । प्रत्यक्षे इन्द्रियसन्निकर्षादिरूपसामग्रीसाम्यात् एकवित्तिवेद्यत्वम् । शाब्देतु आकाङ्क्षादिभेदवशात् शाब्दबोधविशेषस्सम्भवत्येव । आकाङ्क्षादीनां तत्प्रकारकतद्विशेष्यकादितत्तद्बोधविशेषनियतत्वेन, तद्वैपरीत्येन शाब्दबोधो न जायते । एवं मुखचन्द्रः इत्यादि समासेऽपि चन्द्राभेदसिद्धिर्नभवति । शशिपुण्डरीकमित्याद्युदाहरणेष्वप्येषैव स्थितिः ।

अत्र विषये रसगङ्गाधरे समाधानमेवं वर्तते । कर्मधारये ह्यभेदो विशेषणस्य संसर्गः । मुखं चन्द्रः इति वाक्ये अभेदं प्रति विशेष्यस्यमुखस्य अनुयोगितया भानम् । मुखचन्द्रः इति समासे तु विशेष्यभूतस्य चन्द्रस्य उपमानस्य प्रतियोगितयाभानम् । एवं च यत्र अभेदस्य प्रतियोगित्वमुखत्वं तदा रूपकस्य अनुवाद्यत्वं यथा मुखचन्द्रः इति समासे । यत्र तु अनुयोगित्वमुखत्वं तत्र रूपकस्य विधेयत्वं, यथा मुखं चन्द्रः इति वाक्ये । मुखंचन्द्रः इति वाक्यात् चन्द्रप्रतियोगिकाभेदवन्मुखमिति धीर्जायते । मुखचन्द्रः इति समासाच्च मुखानुयोगिकाभेदप्रतियोगीचन्द्रः इति बोधः । वाक्ये समासेच उभयत्रापि चन्द्रप्रतियोगिकाभेद एव संसर्गः । समासे मुखचन्द्रः इत्यत्र मुखाभेदस्तु न संसर्गः । तथासति चन्द्ररूपकसिद्धिर्नैव भवेत् । एवं च सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिका

इत्येव सौजन्यचन्द्रिकाचन्द्रः इति समासावयवात् बोधो भवति इति राज्ञिचन्द्राभेदः सिद्धयति ।

अत्रेदं चिन्त्यं—नीलघटः इतिकर्मधारये नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-ज्ञानमेव भवति । तत्र विशेषणप्रतियोगिकएवाभेदः । नतु विशेष्यप्रतियोगिकः सांसर्गिक-विषयतापन्नसंसर्गसामान्ये प्रकारप्रतियोगिक एव संसर्गो नतु विशेष्यप्रतियोगिकः इति नियमः । पर्वतो वह्निमानित्यत्रापि पर्वतानुयोगिकत्वेन वह्निप्रतियोगिकत्वेन चैव संसर्गस्य भानम् । सौजन्यचन्द्रिकाचन्द्रः इत्यत्र राज्ञि चन्द्राभेदसिद्धयर्थं विशेषणस्य अनुयोगित्वेन विशेष्यस्य च प्रतियोगित्वेन भानं न स्वीकरणीयम् । सौजन्याभिन्नाचन्द्रिका इत्येव प्रथमं तावत् बोधोभवतु । तदनन्तरं च सौजन्यविशेष्यक-अभेद संसर्गकचन्द्रिकाप्रकारकमानस-बोधेन राज्ञि चन्द्राभेदप्रतीतिरपि भविष्यति । शाब्देनैव समर्थकरूपकेण समर्थ्यरूपक-सिद्धिरिति वक्तुं नशक्यते यतः शाब्दबोधे पदार्थतत्संसर्गाणामेवभानं, नत्वतिरिक्तानां अनुयोगित्वप्रतियोगित्वादीनां ।

नचसमूहालम्बनाद्विशिष्टज्ञानस्य भेदान्यथानुपपत्या विशिष्टज्ञाने विशेषण-विशेष्ययोः सम्बन्धस्य संयोगादेः संबन्धः प्रतियोगित्वानुयोगित्वरूपः दण्डपुरुषादिनिष्ठो भासते, समूहालम्बने दण्डपुरुषसंयोगाः इत्यत्र न तथा इतिवाच्यम् । एतादृश संबन्ध-संबन्ध-भानाङ्गीकर्तृमतेऽपि विशेषणस्य प्रतियोगित्वं विशेष्यस्य अनुयोगित्वं इत्येव सिद्धान्तः। तदुक्तं पक्षधरमिश्रैः समवायविचारे—विशेषणे प्रतियोगित्वस्य विशेष्ये च अनुयोगित्वस्य भानात्—इति । एवञ्च सम्बन्धसम्बन्धभाने स्वीक्रियमाणेऽपि विशेषण-स्यैवप्रतियोगित्वम् । वस्तुतस्तु तत्प्रकारत्वमेवविशिष्टज्ञानत्वं नवीनैः स्वीकृतं, तत्प्रकार-कत्वं च स्वरूपसम्बन्धविशेषः । तत्प्रकारकत्वमेव विशिष्टज्ञानस्य समूहालम्बनात् वैलक्षण्यम् । तथाच नवीनमते शाब्दबोधे प्रतियोगित्वदीनां भानं न संभवत्येव ।

तथाच सौजन्याभिन्ना चन्द्रिका इतिशाब्दबोधे जाते तदुत्तरभाविना सौजन्यानु-योगिका भेदप्रतियोगिनी चन्द्रिका इति बोधेन राज्ञि चन्द्राभेदोभवतीत्यवश्यं स्वीकर-णीयम् तदपेक्षया तदुत्तरभाविना चन्द्रिका प्रतियोगिकाभेदवत्सौजन्यं इतिबोधेनैव तन्निर्वाहोऽस्तु अपिच

विलसत्याननं तस्या नासाग्रस्थितमौक्तिकं ।
आलक्षितबुधाश्लेषं राकेन्दोरिवमण्डलम् ।

इत्यत्र बिम्बप्रतिबिम्बभावापन्नस्थले भिन्नानां धर्माणां परस्पराभेदस्य शाब्दबोध-विषयत्वाभावेऽपि मानसाभेदारोपमाश्रित्य साधारण्यसंपत्या उपमानुकूलत्वं तावत्सर्वा-लङ्कारिक सम्मतम् ।

अलौकिकैर्विभावादिभिः आलौकिको रसास्वादो भवतीति सिद्धान्तः विभावा-दीनामलौकिकत्वात्, रसभावादीनाञ्च, अलौकिकेन मानससाक्षात्कारेणैव उपपत्ति-रुच्यमाना मनोज्ञा युक्तियुक्ता भवतीति प्रतिभाति 'काव्ये रसयितासर्वः' इतिकिलाभि-युक्तोक्तिः ।

# तद्धितस्य संक्षिप्तं वैशिष्ट्यम्

लें० नन्दकिशोर शर्मा, एम० ए० (संस्कृत)

संस्कृतसाहित्यमनेकेषां विषयरत्नानां निधानमिति केषान्न विदितम्। सर्वेऽपि विषयास्तथा विस्तरशोऽपूर्वपाटवेन वैशद्येन च व्याकृताः यथा तेषां साम्यं नान्यभाषागताभिस्तद्विषयकृतिभिः सुलभम्। तेष्वपि देवगिरो व्याकरणशास्त्रमर्णवमिव तथागाधं दुरवगाहमसंख्येयपदनिर्मातृ चेति भूयो भूयो विदुषाञ्चेतश्चमत्कारैश्चमत्कृतं भवति। न तच्छब्दनिष्पादकमेव परं दर्शनशास्त्रमिव शब्दविषयविवेचकमपि। मञ्जूषा भूषणादि ग्रन्थेषु वाक्यपदीये च भर्तृहरि निर्मिते ते विषयाः विस्तरशो विवेचिताः, यानाश्रित्याद्यापि भाषा-विज्ञान-क्षेत्रे सुधियः प्रचुरां सामग्रीमाचिन्वन्ति नवं नवं चानुसन्धान विषयं प्रादुष्कृत्य महतीं पदवीं प्राप्नुवन्ति। तेषां निगूढ तत्त्वाविष्करणं वीक्ष्य परे विस्मयापन्ना इव चकितचकिता इव च सन्तः सुरगिरो व्याकरणशास्त्रस्यानुपमं महत्वमवगत्य तदध्ययनोत्सुका भवन्ति।

सुरभारत्यामभूवन्ननेके वैयाकरणाः, येषु केषाञ्चिन्नामान्येव यत्र तत्र परकृतिषूपलभ्यन्ते न कृतयः। पाणिनिनापि बहूनां व्याकरणशास्त्रप्रणेतॄणामाचार्याणां नामानि स्वाष्टाध्याय्यामुल्लिखितानि। संभवति पाणिनिकाले तत्कृतयः स्युरुपलभ्यमाना परमद्यत्वे तेषु बहूनां कृतयो न भवन्ति दृग्गोचराः। यद् भवतु परमधुना सर्वेषु व्याकरणशास्त्र प्रणेतृषु पाणिनिरेव प्राधान्यं भजते तत्कृतिरेव च परवर्त्तिभिराचार्यैष्टीकाटिप्पण्यादिभिर्विभूषितत्वात् पतञ्जलिना च तत्सूत्राणां भाष्यकरणादिदानीं सर्वासामन्यकृतीनां मूर्धानमारोहति। पाणिनेरष्टाध्याय्याः निर्माणपद्धतेस्तत् सूत्राणाञ्चापूर्वक्रमविन्यासस्य वैशिष्ट्यमनेकैः सुधीभिराविष्कृतमिदानीं चापि परैराविष्क्रियते यावच्चन्द्रदिवाकरौ च नवातिनवं तद्वैशिष्ट्यं भाविनि कालेऽपि बुधैराविष्करणीयमित्यत्र नास्ति संशयलेशोऽपि।

पाणिनेः सूत्रेषु दैर्ध्येण विविधविषयान्वितत्वेन भूरिसंख्याक शब्द निर्मातृत्वेन च तद्धितप्रत्ययाः प्राधान्यं भजन्ते। तद्धितेतीयं संज्ञापि भूरिविधवैदिकलौकिकशब्दव्युत्पादकत्वमनुमनुते तथा च लौकिकवैदिक शब्दानां व्युत्पादनाय हिताः ये प्रत्ययास्ते

तद्धित पदेनाभिधीयन्ते । तद्धितपदस्य विग्रहस्त्रिधाकर्तुं शक्यते—तस्मैहिताः, तस्य हिताः तस्मिन् हिता इति । एवं विधविग्रहेण तत्रोक्तप्रत्ययानां शब्द निर्माणे, विविध-विषयाविष्कारे लोककल्याणकर्मणि च हितकारित्वं व्यज्यते । नूनमेव तद्धितप्रत्ययाः न केवलं शब्दनिर्मातारः परं तत्तज्जनपदविभागस्य, प्राचीनकालिक विविधगोत्राणां, रीतीनां प्राचीनैतिवृत्तानां व्यवहाराणाञ्च द्योतकाः । सूत्राणामुदाहरणरूपेणोपन्यस्तानि पदानि प्राचीनैतिह्य व्यञ्जकानि तिमिरान्तः पतितानामपि वृत्तानामुद्बोधकानि । तान्युपजीव्य प्राचीनभारतस्य शोभनः इतिहासग्रन्थो निर्मातुं शक्यते । तेष्वेव तद्धित प्रत्ययेषु कियान् दृष्टि निक्षेपः क्रियते, तद्वैशिष्ट्यं च प्रकाश्यते ।

सर्वप्रथमं पाणिनिनाऽपत्यप्रत्ययाः निगदिताः । एषां प्रत्ययानामध्ययनेन प्राचीनानां बहूनां गोत्राणामृषीणां नरपतीनाञ्च वृत्तज्ञानं जायते । बाह्वादिभ्यश्चेति सूत्रे बाह्वादिगणे उदवाकुनिवाकुशिवाकुवटाकुदेवशर्माग्निशर्मभद्रशर्म-सात्यकि-प्रभृतीनां गोत्राणामुपलब्धिः, एवमेव कुञ्जादिगणे कुञ्ज-ब्रध्न-शङ्ख-स्कन्द-स्कम्भ-प्रभृतीन गोत्राणां प्राप्तिः, विदादिगणे विदोर्वकिलात-किंदर्भहर्यश्वप्रियक-ऋषिषेण-ऋतभाग कूचवार-शरद्वनप्रभृतीनामपरिचितानां गोत्राणां परिचयो जायते । एवमेव गर्गादि शिवाद्यश्वादिगणीया अपिशब्दाः बहूनांतिमिरगर्त्त पतितानां गोत्राणामुद्धारकाः । कानीनो व्यासः, वैकरणोवात्स्यः शौङ्गो भारद्वाजः, छागलः आत्रेय इति तत्तदृषीणां पितृपरिचयो-ऽपि प्राप्यते । अन्धकवृष्णिकुरुवंश्यानां नृपाणामत्रोपलब्धिः । सौवीराङ्गवङ्गसुह्ममगध कलिङ्गसूरमसाम्बष्ट सुवीर्यावन्ती कोसलाजाद कम्बोजचोलकेरलसाल्वशकयवनादि देशानामत्र वर्णनमुपलभ्यते ।

ततः परं रक्ताद्यर्थकाः प्रत्ययाः वर्णिताः ये प्रदर्शयन्ति यत् प्राचीनभारते विविधरागैः रञ्जितानि वसनानि जना अधारयन् । काषायं लाक्षिकं रौचनिकं शाकलिकं नीलंपीतकं हारिद्रं माहारजनञ्चवस्त्रंतदानीं धार्यमाणमभूत् । स्त्रीणां यानाय रथः वस्त्रादिच्छन्नोऽभूदिति "परिवृतोरथ" इति सूत्रेण ज्ञायते । तत्रावरणरूपेण वस्त्रकम्बल चर्मादीनि प्रायुज्यन्त । साऽस्यदेवतेति सूत्रस्योदाहरणानि क्रतुविषयकं ज्ञानमाविष्कुर्वन्ति । केभ्यो देवेभ्यो हविरर्प्यतेस्म—तदनेन प्रकाश्यते । "तदधीते तद्वेद" इति सूत्रे विविध विद्यानां प्रकाशनं कृतं यासां ज्ञानं प्राचीनभारतीयानामासीत् । तद्यथा वायसविद्या, [illegible] विद्याङ्गविद्या क्षत्रविद्या ।

शैषिक प्रकरणेऽपि सन्त्यपूर्वाः विषयाः वर्णिताः । कापिश्यां जातं मधु कापिशायनं द्राक्षा च कापिशायनी, वर्णुनामनदस्तस्य समीपदेशोवर्णुः, रङ्कुर्नाम देशः तत्र भवो राङ्कवो गौः धूमादिगणवर्णिता षडण्डशशादनमञ्जालि प्रभृतयोऽश्रुतपूर्वाः देशाः । अधिकृत्य 'कृते ग्रन्थे' इति सूत्रोदाहरणेन ज्ञायते यत्तदानीमेते ग्रन्था आसन् शिशुक्रन्दीय यमसभीयः इन्द्रजननीयः प्रद्युम्नागमनीयः, सीतान्वेषणीयः, विरुद्धभोजनीयश्चेति । सोऽस्य निवासः अभिजनश्चेति सूत्रयो ऋक्षोद हृद्गोल पर्वतयोः शण्डिकतूदीशलातुर-वर्मती कूचवारप्रभृतीनामश्रुतचराणां देशानां वर्णनोपलब्धिः । पाराशर्यकर्मन्दाभ्यां

किञ्चिद् भिक्षुसूत्रं शिलालिकृशाश्वाभ्याञ्च नटसूत्रं प्रणीतं बभूव यदध्ययनं तदानीं प्रचलितमासीदिति तेन प्रयुक्तमित्यर्थे प्रयुक्तानां प्रत्ययानामवलोकनेन ज्ञायते ।

एवं प्रतिप्रकरणं तद्धिते नवंनवमपूर्वं वैशिष्ट्यं प्राप्यते, विविधविषयाणां व्यञ्जनञ्च दृश्यते । तेषां सर्वेषामिह प्रकाशने निबन्धकलेवरो वृद्धिमुपेयादिति दिङ्मात्रं प्रदर्श्य विरमामि । अस्य विस्तरशो वर्णनं मन्निबन्धेऽचिरादेव प्रकाशयिष्यमाणे सुधियो द्रक्ष्यन्ति ।

।। इति ।।

# रसगङ्गाधरे द्वितीयकाव्यलक्षणम्

श्री वटुकनाथ शास्त्री खिस्ते

पण्डितेन्द्रपरिभाषितेषु यत्
काव्यमुत्तमतया निगद्यते ।
साहितीविमलचेतसां दृशा,
तत्परीक्षणमिदं वितन्यते ।।

जगन्नाथपण्डितराजः प्राचां मम्मटानां सिद्धान्तमनुसरन्नपि प्रौढिवादमात्रग्रहिलचेताः स्वप्रबन्धे काव्यभेदचतुष्टयं व्यवस्थापयितुं महान्तमायासमङ्गीचकार, ध्वनि-गुणीभूतव्यङ्ग्य—चित्राख्यानि त्रीण्येव काव्यानि प्रायः सर्वैरङ्गीक्रियन्ते कोटित्रयपरिच्छेदेनैव ध्वनिसिद्धान्तः सामञ्जस्यमधिरोहतीति प्रेक्षावतामपरोक्षम् ।

कविसंरम्भगोचरतया प्राधान्यमनुभवति व्यङ्ग्ये ध्वनिः, व्यङ्ग्ये वाच्येन समतां न्यूनतां वाऽधिशयाने गुणीभूतव्यङ्ग्यं, व्यङ्ग्यसंस्पर्शरहित शब्दार्थमात्रचमत्कृतौ च चित्रमिति क्रमेण काव्यभेदव्यपदेशाः प्रवर्तन्ते ।

अस्ति खलु 'प्रधानेन व्यपदेशा भवन्तीति न्यायः' कस्याऽपि प्राधान्ये हेतुस्तदीयो गुणोत्कर्ष एव भवति, काव्यस्य गुणोत्कर्षे च व्यङ्ग्यचारुतैव जीवातुरिति न विवादः, यदुक्तं ध्वनिकारेण—"व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचना मात्रेण" "चारुत्वोत्कर्ष निबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्य विवक्षा" इति ।

एवं स्थिते "यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद् द्वितीयम्" इति द्वितीयं मुत्तमं नाम काव्यप्रभेदं लक्षयति पण्डितराजः ।

अत्र लक्षणे "अयं स रशनोत्कर्षी' त्यादौ प्राकरणिकतया प्रधाने करुणध्वनौ स्मर्यमाणतया तदङ्गभूतो गुणीभावमापन्नः शृङ्गारो वाच्यार्थापेक्षया प्रधान एवाऽस्तीति तद्वारणाय अवधारणार्थक "एव" कारः । सर्वथा अप्रधानस्यैव व्यङ्ग्यस्य संग्राह्यत्वात्

ननु अप्रधानं चमत्कारि न भवेदित्याशङ्कामपनेतुं "चमत्कारण" मिति विशेषण-मुपात्तम् ।

गुणीभूतव्यङ्ग्ये च चमत्कारित्वं नाऽस्तीति ततोऽपि व्यावृत्तिः । तदेतल्लक्षणं परस्परविरुद्धं, चमत्कारजनकताया एव प्राधान्यऽप्राधान्यव्यवस्थापकत्वात् अप्रधानं च तत् चमत्कारजनकमित्युभयदशाया युगपदसंभवात्, एकतरस्वीकारे परस्य परित्यागात् दरिद्रदम्पत्योर्निशावगुंठनमिवोभयत आकृष्यमाणं नेदं क्वापि सङ्गच्छते ।

काव्यप्रकाशे "अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्यं तु मध्यमम्" इत्यत्र "अतादृशि" इति पदस्य वाच्याऽपेक्षयाऽतिशयचमत्काराऽनाधायक इत्यर्थकरणाद् वाच्यान्न्यूनं समं वा सर्वविधं व्यङ्ग्यमुपसङ्गृह्यते येन सर्वेषां गुणीभूतानामनुगतलक्षणमपि कर्तुं शक्यम् ।

यदपि मध्यमकाव्यनिरूपणप्रसगे तत्रोक्तम्—"अनयोरेव द्वितीयतृतीयभेदयोर्जागरूकाऽजागरूकगुणीभूतव्यङ्ग्ययोः— प्रविष्टं निखिलमलङ्कारप्रधानं काव्य" मिति । तत्र किन्नाम जागरूकत्वं व्यङ्ग्यस्योत्कटचमत्कारकत्वं अजागरूकत्वमनुत्कटचमत्कारकत्वमित्येव यद्यभिप्रायस्तर्हि द्वयोरपि भेदयोर्गुणीभावस्तु न निवर्तत इति न कोऽपि विशेषः ।

यदि समासोक्त्यादौ व्यङ्ग्यव्यवहारस्य प्रस्तुते वस्तुनि स्फूर्तिः समाधिकचमत्कारिणी दीपकादौ व्यङ्ग्यमुपमानोपमेयभावादि न्यूनचमत्कारकमित्युच्यते तदा बहूनामलङ्काराणां यत्किञ्चिद्व्यङ्ग्यसंस्पर्शस्य न्यूनाधिकभावेन सम्भवात्तारतम्यस्य पृथङ्-निर्णेतुमशक्यादनवस्थापातः काव्यभेदानां परिगणनासम्भवापत्तिश्च अतएव प्राचीनैर्गुणीभूतत्वमेव सर्वानुगतं धर्ममादाय मध्यमश्रेण्यां काव्यमिदं निवेशितम् ।

न च गुणीभूतत्वेन काव्यसौन्दर्यहानिः तद्वारणाय कश्चिद्भेदविशेषो मध्यमोत्तमयोर्मध्ये बलान्निवेशयितुमिष्यते । यथोक्तं ध्वनिकृता—"व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्युक्तम् । तस्यैव तु गुणीभावेन वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्योनाम काव्यप्रभेदः प्रकल्प्यते ।" इति

वाच्यालङ्कारवर्गस्य सर्वमपि चारुत्वमेतन्मूलकमेव
वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ।।

इत्युक्तत्वात् । अलङ्कारधारिणीनामपि नायिकानां लज्जैव मुख्यं यथा भूषणं तथैवेषाप्रतीयमानार्थच्छाया वाच्यसौन्दर्यसंवर्धनस्याऽभ्युपायभूतेत्युक्तं तेनैव—

मुख्यामहाकविगिरामलङ्कारभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जैव योषिताम् ।।

सत्येवं प्रतीयमानार्थसंस्पर्शसामान्ये गुणीभूतव्यङ्ग्यविषयिणि किमिति पृथग्-भेदगणनमिति न ज्ञायते ।

अथ क्रमप्राप्तमुत्तमकाव्यस्योदाहरणमपि किंचिद्विवेचनमपेक्षते—

राघवविरहज्वालासन्तापितसह्यशैलशिखरेषु ।
शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय ।।

अत्र "जानकीकुशलावेदनेन साधवः शिशिरीकृता इति व्यङ्ग्यमाकस्मिक कपिकर्तृक हनूमद्विषयककोपोपपादकतया दुर्दैववशतो दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहति इति व्याचचक्षे पण्डितराजः ।

"कपयः कुप्यन्ति पवनतनयाय" इति वाच्योऽर्थ उपपाद्यः, स च जानकीकुशलश्रवणजनितराघवशिशिरीभावसम्भूतसह्याचलोष्मापगमरूपेण व्यङ्ग्येनोपपाद्यते एवमत्र व्यङ्ग्यं वाच्याङ्गमपराङ्गनामकगुणीभूतभेदान्तर्गतं प्रतीयते ।

वाच्यस्य प्रकरणादिज्ञानात्कथञ्चिदुपपत्तौ अपराङ्गं, वाच्यस्य सर्वथाऽनुपपत्त्या तु वाच्यसिध्यंगं वा गुणीभूतव्यङ्ग्यमत्र मन्तव्यम् । कपिकर्तृकहनूमद्विषयक कोपवार्ता न सातिशयचमत्कारिणी प्रकृते पद्ये 'राघवविरह ज्वाले''ति पूर्वार्धेनैव व्यङ्ग्यस्य किञ्चिदुन्मीलनात् । किंचाऽत्र तादृशसन्तापतादृशशिशिरीकरणयोरसम्बन्धेऽपि सम्बन्धकल्पनारूपाऽतिशयोक्तिः स्वशब्दैरनुपस्थानाद् व्यज्यमाना किमिति प्राधान्यं नाऽवलम्बेत ? एवं व्यङ्ग्यप्राधान्ये निर्णीते पद्यस्याऽस्य वस्तु-प्रतिपाद्यालङ्कारध्वनिरूपेणाऽपि परिगणनं सम्भवत्येव । न च व्यज्यमानाऽप्यतिशयोक्तिर्वाच्यस्योपपादिकेति वक्तव्यम्, व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ध्रुवं ध्वन्यङ्गता तासांकाव्यवृत्तेस्तदाश्रयात् इत्युक्त्या नियमेन ध्वनित्वोपगमात् ।

अन्यच्च प्रकरणस्य स्फुटतरतया व्यङ्ग्यपर्यन्तमनुधावनमकृत्वैव वाच्यार्थोपपत्तिः सुसंपाद्या भवितुमर्हति, तथाहि कविप्रतिभोन्नीतेन विरहोत्तप्तशैलशयनरूपेण हेतुना कोपस्योपपत्तिरिति काव्यलिङ्गालङ्कारस्याऽप्यत्राऽवसरः । शीतकाले शयनं विहाय गमनं क्लेशावहं भवतीत्यत्र न कापि विप्रतिपत्तिः । पवनतनयस्य सीतान्वेषण हेतोर्गमनाऽऽह्वानिरपि कपीनां कोपहेतुः सम्भवत्येव । तदेवमन्यैर्बहुभिरपि प्रकारैः पद्यार्थस्योपपत्तौ सम्भवन्त्यां प्रधानेतरव्यङ्ग्य कृतश्चमत्कार इत्याग्रहो न समीचीनः प्रतिभाति काव्यार्थभाविनात्मनां सहृदयानामित्यलंबहुना ।

# अद्वैते श्रुतेरानुगुण्यम्

**कृष्ण शास्त्री**

प्रमाणपरीक्षायां प्रत्यक्षानुमानशब्दाः लौकिकानां परीक्षकाणां च प्रायेण सम्मतानि त्रीणि प्रमाणानि । तत्रापि अलौकिकेऽर्थे श्रुतिरेव प्रमाणमिति सर्वेषामास्तिकानामविप्रतिपन्नोऽयमर्थः । तथाह्यभियुक्ता वदन्ति—"प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते । एनं विदन्ति वेदज्ञास्तस्माद्वेदस्य वेदता" इति । सा च श्रुतिः पूर्वोत्तरभावेन द्विधा विभक्ता । तत्र पूर्वं कर्मकाण्डं, उत्तरं ज्ञानकाण्डमिति चोच्यते । यद्यपि अलौकिकेऽर्थे धर्मे पूर्वकाण्डमपि प्रमाणमेव । नच चोदनालक्षणोऽर्थो धर्मः इति सूत्रेण वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म इत्यर्थकेन लक्षितो यागादिः कथमलौकिक यत्रानधिगतेऽर्थे श्रुतेः प्रामाण्यमभिप्रेयते इति तु न शङ्कनीयम् । यागादेरुद्देशत्यागाद्यात्मकस्य मानसादिरूपस्य प्रत्यक्षत्वेऽपि अलौकिकस्वर्गादि श्रेयस्साधनतया यागादेर्धर्मपदवाच्यतया तेन रूपेण तस्यालौकिकत्वाच्च तत्रानधिगतेऽर्थे श्रुतेः प्रामाण्यसंभवात् । तथापि न स तत्वभूतोऽर्थः । तत्वं तु ज्ञानकाण्डेनैव वेद्यमिति ज्ञानकाण्डसमाख्ययैवावगन्तुं शक्यते । अवश्यविज्ञेयं वस्तु येन ज्ञाप्यते तद्धि ज्ञानकाण्डव्यपदेशमर्हति । अत एवोपनिषत्संज्ञापि अन्वर्था ज्ञानकाण्डस्य । उपनिषच्छब्दोऽयं विशरणगत्यवसादनार्थस्य सदेर्धातोः क्विबन्तनिष्पन्नः संसारहेतोरविद्याद्यनर्थस्य तिरस्करणात् अत्यन्तोच्छेदकरणात् परब्रह्मप्रापणाद्वा अर्थयोगेनात्मविद्यामाहेति श्रीशङ्करभगवत्पादैः तत्र तत्र व्याख्यातः । अनेन च व्याख्यानेनात्मैव किंचिद्वेद्यं तत्वमित्यवगम्यते । आत्मशब्दार्थश्च "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्तितः" इत्युक्तव्युत्पत्या सर्वात्मा एकोऽद्वितीयः, रूढ्या च सर्वप्रत्यग्भूतः इति चावगतः । न हि सर्वव्याप्तिः सर्वतादात्म्येन विना अन्यथा स्वरसा भवितुमर्हति । यद्यपि सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वमाकाशादिवदात्मनामपि प्रत्येकं मन्यन्ते नैयायिकाः तथापि मन्यामहे स्वरसा न सेति । नहि मूर्तेन केनचित्संयुज्यमानस्यापरस्य सर्वात्मना अन्तर्बहिर्भावेन तदाप्तिर्युज्यते । अथामूर्तत्वादपरस्य तत्संभवोऽभिप्रेयते तदा सर्वात्मनापरमाप्नुवतस्तस्य तत्तादात्म्यमेवानिच्छयाप्यापतितमिति नह्यत्र कमपि विशेषं पश्यामः । अत एव सर्वं समाप्नोषि ततोऽसि सर्व इत्युक्तिरपि सङ्गच्छते । अत एव सर्वात्मा एको भवितुमर्हति न

बहव:: यतो न सर्वे सर्वात्मका इति घटतेऽयमर्थः । अतो नैयायिकाद्यभिमतमात्मनो बहुत्वं विभुत्वं चोभयं नोपपादयितुं शक्यमित्युत्तरमीमांसायामंशो नाना व्यपदेशादित्यधिकरणे अदृष्टानियमात् इत्यादिभिः सूत्रैः बादरायणाचार्यः प्रत्यपादयत्, भाष्यकारेण च विवृतोऽयमर्थः । तदेवमुपनिषच्छब्दार्थसुपर्यालोचनेनैवाद्वैतबोधिका श्रुतिरित्यवगन्तुं शक्यत इति न आशयः ।

नन्वास्तामुपनिषच्छब्दार्थपर्यालोचने अनर्थनिबर्हणोपायः कश्चनोपनिषत्प्रतिपाद्यः यथा अभ्युदयप्राप्तिहेतुः कश्चिद्धर्माख्यः कर्मकाण्डप्रमेयः, कथमात्मैव वेद्यं तत्वमिति उपनिषच्छब्दादेव लभ्यत इति चेदत्र किंचिदिदमुच्यते—सुखप्राप्तिरनर्थनिवृत्तिर्वा पुरुषार्थ इति समेषामविप्रतिपन्नोऽर्थः । तत्रात्मनोऽन्यस्य सुखस्य चेत्प्राप्तिरभिलषिता तदा पूर्वमप्राप्तस्यासिद्धस्य च प्राप्तौ प्राप्यस्यार्थस्य निवृत्या वियोगेन वा भाव्यमित्यतो न नित्यतेति आत्मन एव नित्यसुखात्मकत्वप्रतिपादकश्रुतिरेव सत्यं ज्ञानमनन्तं विज्ञानमानन्दं ब्रह्म इत्याद्या अत्रार्थे शरणीकरणीया । तथा अनर्थनिवृत्तिपक्षेऽपि आत्मनोऽन्यस्य अनात्मनः अनर्थशब्दोदितदुःखाश्रयत्वानुपपत्या, अन्याश्रयत्वे आत्मना निवर्तनानुपयोगेन च आत्मन एवानर्थः आत्मनैव च निवर्तनीय इति चाकामेनापि अभ्युपगन्तव्यं भवति । तत्र खलु तात्कालिकोऽनर्थः तदा तदा कदाचिदस्माभिरेव विवेकपूर्वकंप्रवर्तमानैर्निवर्त्येतापि तथापि आत्यन्तिकी निवृत्तिः समूलनिवृत्तिरिति यावदशक्यैवास्माभिरिति तादृशनिवृत्त्युपायप्रतिबोधनायापि श्रुतिरेव नः शरणम् । तत्र च नित्यसुखात्मके आत्मनि दुःखात्मकोऽनर्थः प्रचण्डमार्तण्डमण्डले पेचकानुभवसिद्धान्धकारवदज्ञानारोपित इत्येव युज्यत इत्यतः आत्मन एव सुज्ञानायोपनिषदां प्रवृत्तिरिति नः प्रतिभाति । अत्राप्यर्थे आत्मा वा अरे द्रष्टव्यः इति श्रुतिरेव नः प्रमाणम् । एवं च यद्यात्मैव वेद्यं तत्वं, श्रुतिश्च तत्प्रतिपादिका तदा सिद्धमद्वैतं तत्वं, तत्र च श्रुतिः प्रमाणमिति ।

अथेममभिप्रायं श्रुतिमेवोदाहृत्य किंचिदिव निरूपयामः । यद्यप्युक्तरीत्या आत्मा अद्वैत एव भवितुमर्हति तथापि सा हि वस्तुगतिः, न कस्यापि तथा विज्ञातः, अपि तु बहुभवजनितवासनावशात् नाहमीश्वर इति भेदप्रत्यक्षानुगृहीतात् जीवेश्वरभेदेन द्विधा प्रतीयमानयोरैक्यप्रबोधनाय प्रवृत्ता श्रुतिः । तत्र च यथाप्रतीति विशिष्टरूपयोरुभयोर्न प्रागेवैक्यं बोधयितुं शक्यमित्यतोऽवान्तरवाक्यैः सत्यं ज्ञानमित्यादिभिः अध्यारोपापवादन्यायेन ईश्वरस्य, पंचकोशविवेकन्यायेन अवस्थात्रयविवेचनेन च जीवस्य स्वरूपसंशोधनपूर्वकं तत्वमस्यादिमहावाक्यैरैक्यं प्रतिपाद्यते । अत्र च चतुर्वेदभिन्नेषु प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि, तत्त्वमसि, अयमात्मा ब्रह्मेति च महावाक्येषु चतुर्षु सत्स्वपि तत्त्वमसीत्येतन्मकुटोदाहरणं भवति । अत्र हि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति प्रलयावस्थायां अद्वितीयत्वं प्रतिज्ञाय तदुपपादनार्थं ततो जगतः सृष्टिं व्याख्याय सृष्टस्य कार्यस्य पूर्वोदितमृदादिदृष्टान्तानुसारेण मिथ्यात्वप्रतिबोधनेन सत्तां निषिध्य उपाधितः प्रविभक्तस्य जीवस्य सुषुप्तौ उपाधिप्रशमे स्वरूपापत्तिं स्वप्नान्तं मे सोम्यविजानीहीत्यारभ्य सुषुप्त्युदाहरणेनोपपाद्य संप्रतिपन्नमैक्यं तत्त्वमसीति महावाक्येन प्रतिपादयति श्रुतिः । अत्र च तत्त्वंपदयोः विशिष्टार्थवाचकत्वात् विशिष्टयोश्चैक्यं न संभवतीत्यतः अन्वयानु-

पपत्या, उपक्रमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानोपपादनप्रवृत्ततात्पर्यानुपपत्या च जहदजहल्लक्षणया तत्त्वंपदयोः स्वरूपपरत्वमालम्ब्य ऐक्यप्रतिपादनमिति सांप्रदायिकानां मतम्। लक्षणां विनैव शक्त्युपस्थितयोः विशेष्ययोरेव केवलं योग्यतया ऐक्येनान्वयः यथा घटः अनित्य इत्यत्र घटमात्र एवानित्यत्वान्वयः। विशिष्टवाचकपदस्य विशेष्यमात्रपरत्वे यदि लक्षणा आवश्यकी तदा घटोऽनित्यः घटे रूपं, गेहे घटः इत्यादिस्थलेपि घटपदस्य लक्षणा स्यादिति केचन नवीना अभिप्रयन्ति। सर्वथापि तत्त्वंपदयोः सामानाधिकरण्येनैक्यपरेयं श्रुतिः स्वरसतः प्रतीयत इति सर्वसाक्षिकोऽयमर्थः। तत्र सामानाधिकरण्यस्य विशेषणविशेष्यभावाध्यासापवादैकत्वप्रकारचतुष्टयेनाप्युपपादनसंभवेऽपि निरुपचरितेनैक्येनोपपादनमेव स्वरसं नान्यथा। यत्र तु तन्न संभवति तत्र खलु प्रकारान्तराश्रयणं युज्यते। न चात्रापि तदसंभवः। जीवस्य नित्यपरिपूर्णसुखात्मकब्रह्मरूपता न केवलं श्रुतिसिद्धैव अपि तु सुषुप्तौ स्वयमनुभूयमानैव सुखात्मता। नहि तत्र वैषयिकस्य कस्यचित् सुखस्य संभवः, यत् सुखमहमस्वाप्समिति परामृश्येत। अत एव सुषुप्तिमादाय ब्रह्मात्मतां प्रतिपादयति तत्रैव। अतश्चानेन जीवेनात्मना इत्यत्र जीवे आत्मत्वव्यपदेशोऽपि सङ्गतः। अनेन सुषुप्त्युदाहरणेनैव नित्यसुखात्मना अवस्थितिरेव मोक्षः पुरुषार्थः, न तु स्वरूपान्यस्य सुखस्य प्राप्तिः, तस्य नित्यत्वासंभवस्योक्तत्वात्। सौषुप्तिकानुभवस्य अहमुल्लेखाभावेपि पुरुषार्थत्वं चाविप्रतिपन्नम्। परन्तु तस्यापि कर्मायत्तत्वेनानित्यतया अज्ञानबद्धतया च तद्विच्छेदेन नित्यतासंपत्तये मोक्षार्थो यत्नोऽपि सफलः। तद्विच्छेदश्चात्मनः सुज्ञानेनैव स्यादिति जीवात्मनो ब्रह्मात्मतां श्रुतिः प्रतिपादयति। जीवस्य च सोपाधिकस्य उपाधिमिथ्यात्वे हि स्वरूपैक्यं सुस्थं भवति। ततश्चैकविज्ञानेन सर्वविज्ञानं तत्ववेदनाभिप्रायं स्वरसम्। तदेवं मृदादिदृष्टान्तोपादानेन कार्यकारणानन्यत्वन्यायेन कार्यमिथ्यात्वद्योतनपूर्वकं कारणमात्रसत्यतां प्रतिपाद्य सर्वकारणब्रह्मात्मतां जीवात्मनः प्रतिबोध्य निरुपचरितैक्ये श्रुतिः पर्यवस्यतीति॥

# पाणिनीयव्याकरणस्यवैशिष्ट्यम्

डा० राधेश्याम मिश्रः,

महामुनिपाणिनिप्रणीतामष्टाध्यायीं को न जानाति मनीषी जगतीतले। व्याक्रियन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते येन तद् व्याकरणमिति व्युत्पत्त्या असाधुशब्दावधिक साधुशब्दकर्मकपृथक् कृति करणीभूतो नियमविशेषः व्याकरणशब्देनोच्यते। अथ शब्दानुशासनमिति भाष्यात् इदमेव लक्षणं प्रतीयते।

'अथ व्याकरणस्य कः पदार्थः" इति जिज्ञासायाम् "लक्ष्यलक्षणे" व्याकरणमिति समाधानवाक्येनापि भाष्यकृता इदमेव लक्षणं प्रमाणितम् तदिदं लक्षणं पाणिनीयव्याकरणे सुष्ठुतरां सङ्घटते।

किञ्च व्याकरणं भाषायाः समीचीनं बन्धनं भवति यथा—किञ्चित्पात्रं दुग्धपूर्णं कृत्वा तन्मुखं वस्त्रेणाच्छाद्य रज्वादिना वेष्टयित्वा अगाधेऽपिजले निक्षिप्यते कञ्चित्कालञ्चातीत्य पुनर्निष्काश्यते चेत् समस्तं दुग्धं तद्रूपेणैव लभ्येत।

यदि तु मुखबन्धनमविधायैव प्रक्षिप्तं स्यात् तर्हि तद् दुग्धं नूनं जलमिश्रितं स्यात्। केनचित् नीरक्षीरविवेचकेन हंसेनैव पृथक् कर्तुं शक्येत। तद्वदेव भाषायाः व्याकरणबन्धनमन्तरा जगत्यामस्तित्वमेव न स्यात्। एवञ्च तत्तद्भाषाणां कृते तानि तानि व्याकरणानि व्यभिचारदोषान् निवारयन्ति इति महत्स्थानं संस्कृतभाषायाः कृतेऽस्य पाणिनीयव्याकरणस्य।

यतोह्यस्मिन् संसारे मानवः स्वकीयं मनोभावं प्रकारद्वयेन प्रकटयति कथनेन लेखनेन च। तत्र कथनरूपेण जनाः स्वीयं भावं प्रकटयन्ति। अथ च लेखादिना स्वकीयं कौशलपाटवं तावल्लिखित रूपेणप्रकाशयन्ति। उक्त प्रकारद्वयेऽपि व्याकरणशास्त्रस्य महती आवश्यकता भवति।

आवश्यकता आविष्कारस्य जननी इत्याभाणकानुसारेणैव सर्वैः प्रयतितव्यम् । एवञ्च तादृशः प्रयासः कर्त्तव्यः येन च लेखने पाटवमथ च भाषणशुद्धता परिलसितं मार्दवमागच्छेत् । व्याकरण शास्त्रस्य महीयान् महिमा वरीवर्ति । प्रतिपादितञ्चैतदेव वाक्यपदीये ब्रह्मकाण्डे—

( १ )

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ।।

( २ )

प्राप्तरूप विभागायाः यो वाचः परमो रसः ।
यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ।।

( ३ )

अर्थ प्रवृत्ति तत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।।

( ४ )

तद्द्वारमपवर्गस्य वाङ्मलानांचिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।।

( ५ )

यथार्थ जातयः सर्वाः शब्दाकृति निबन्धनाः ।
तथैव लोके विद्यानामेषा विद्या परायणम् ।।

( ६ )

इदमाद्यं पदस्थानं सिद्धि सोपान पर्वणाम् ।
इयं सा मोक्षमाणानामजिह्माराजपद्धतिः: ।।

( ७ )

अत्रातीत विपर्यासः केवलामनुपश्यति ।
छन्दस्य छन्दसां योनिमात्मा छन्दोमयीं तनुम् ।।

( ८ )

प्रत्यस्तमित भेदाया यद्वाचो रूपमुत्तमम् ।
यदस्मिन्नेवतमसि ज्योतिः शुद्ध विवर्तते ।।

ज्योतिश्शास्त्र विशारदेन श्रीभास्कराचार्येणापि व्याकरणशास्त्रविषये कथितमस्ति यत्—

यो वेद वेदवदनं सदने हि सम्यक् ।
ब्राह्मयः स वेदमपि वेद किमन्य शास्त्रम् ।
यस्मादतः प्रथममेतदधीत्य विद्वान् ।
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ।।

भगवता भाष्यकारेणापि स्वकीये महाभाष्ये प्रथमाह्निके पस्पशाह्निके व्याकरणविषये लिखितमस्ति यत् —

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च । प्रधानं षडङ्गेषु व्याकरणं, प्रधाने च कृतो यत्नः फलवान् भवति" इति ।

संस्कृतभाषायाः यावन्ति प्राचीनार्ष व्याकरणानि निर्मितानि सन्ति तेषु सम्प्रत्येकमात्रं पाणिनीयव्याकरणमेव साङ्गोपाङ्गरूपेणोपलब्धं भवति । इदं प्राचीनार्ष वाङ्मयस्यैकोऽनुपमनिधिरस्ति । अनेन देववाणी गौरवान्विता विराजते । अस्य रचनेयती सुन्दरतमा सुसम्बद्धा च विद्यते, यत् एतद् अवलोकयितारो विद्वांसो मुक्तकण्ठेन प्रशंसन्ति । सम्पूर्ण संसारे कस्याश्चिदपि भाषायाः व्याकरणमद्यपर्यन्तमीदृशं परिष्कृतं नैव निर्मितम् ।

प्रसिद्धो ह्यूनसाङ्गनामा चीनी यात्री स्वयात्रा वृत्तान्ते लिखति—यत् पाणिनीयव्याकरणे सम्पूर्णंप्राचीननवीनज्ञानं सन्निविष्टं वर्तते इति ।

अन्येषां पाश्चात्यविदुषां मतानि पाणिनीयव्याकरणविषयेऽमुना प्रकारेण सन्ति ।

१—प्रो० विलियम्महोदयो लिखति यत्—"संस्कृतव्याकरणं मानव मस्तिष्कस्य प्रतिभाया आश्चर्यतमं प्रतीकमस्ति ।

२—प्रो० मैक्समूलरमहोदयो लिखति यत् भारतीयव्याकरणान्वयस्य योग्यता विश्वस्य कस्माच्चिदपि साहित्यादत्युच्चैर्विराजते ।

३—सर् डब्ल्यू हन्टर महोदयेन लिखितम्—

"संसारस्यव्याकरणेषु पाणिनीयव्याकरणमत्युन्नतं वर्तते ।

४—लेलिनग्रादवासी प्रो० टी० वी शेरवात्सकी कथयति—

"इदं पाणिनीयव्याकरणं मानवीयमस्तिष्कस्य सर्वासु श्रेष्ठरचनास्वेकोत्तमा रचना विद्यते ॥"

एवं प्रकारेण सुनिश्चितमिदं जगति प्रतीतं भवति यद् व्याकरणमेव सर्व-विद्यानां निदानमस्ति ।

अस्यैव व्याकरणस्य प्रभाव इयन्तं कालं जीवति । इयं संस्कृतभाषा एवं रूपेण अग्रेऽपि जीविष्यति ।

अहो ! प्रियतरास्ते नराः कथं न धिक्कृतिभाजो भवेयुः ये खलु "अमरभाषामेनां मृतभाषां निगदन्ति । ते नूनमस्या अमरभाषाया. स्वादनानभिज्ञाः । अहो ! यथा माता दुहितृभ्यो दुग्धं पाययित्वा जीवयति । तद्वत् या भाषा भाषान्तरेभ्यः प्रतिशतं प्रायोऽशीति संख्याकान् सप्तति संख्याकान् षष्ठिसंख्याकान् वा शब्दान् दत्वा अद्यापि उज्जीवयति । सा कथं मृता इति मृतमुखास्त एव विदाङ्कुर्वन्तु ।

अष्टसु अध्यायेषु प्रथमद्वितीययोः अध्याययोः संज्ञा-परिभाषा-समासविधायकानि सूत्राणि । तृतीय-चतुर्थ पञ्चमाध्यायेषु प्रत्यय प्रकरणं तत्र च प्रथमतः तृतीयाध्याये कृत् प्रत्ययप्रकरणम् । चतुर्थाध्याये प्रथमतः स्त्रीप्रत्ययप्रकरणम् । तदनु तद्धित प्रकरणं विलसति । षष्ठाध्याये सप्तमाध्याये च धातु द्वित्वसन्धिकार्याणि अन्यानि विविधानि च कार्याणि प्रदर्शितानि अष्टमाध्याये वर्णद्वित्व-पदद्वित्व षत्व-णत्व-जश्त्व-कुत्व-चर्त्वश्चुत्वादीनि नाना प्रक्रियाकार्याणि दर्शितानि ।

अनुवृत्तिविषये वैज्ञानिकी महती महनीयता दर्शिता महामुनिना आचार्येण पाणिनिना ॥ इतिशम् ॥

"भवो भवतु भव्याय"

# श्रीवेदान्तदेशिकस्य विश्वविद्वज्जनौपयिकः संदेशः

डा० सत्यव्रत सिंहः

विदितमेवैतदद्यतनीनां संस्कृतविदुषां भारतीयविद्याविचक्षणानां च यत् श्रीरामानुजयतिराजैः विशिष्टाद्वैतदर्शनपरिष्कारिणः श्रीवैष्णवधर्मस्य यच्चक्रप्रवर्तनं कृतम् तस्य-अप्रतिहतरयप्रकर्षो यदुपक्रमः सोऽयं श्रीवेदान्तदेशिक इति विश्रुतविरुदः श्रीवेङ्कटनाथ इति नाम दधानः वेदान्तविद्यागुरुः। त्रयोदशचतुर्दशविक्रमाब्दमध्यवर्ती (१२६८-१३६९ A. D.) श्रीवेदान्तदेशिकोऽयमद्यापि तत्र तत्र वर्तिभिः श्रीवैष्णव धर्मचारिभिर्लोकैः देववदभिगम्यते. तदुपदिष्टाः तत् संदिष्टा वा विशिष्टाद्वैततत्त्वपरमार्थाः अद्यापि श्रीरामानुजमतानुयायिभिः वेदवदधीयन्ते। एवंप्रसिद्धावदानैः श्रीवेदान्तदेशिकैः यदुपदिष्टम् यद्वा संदिष्टम् तस्य सर्वस्य तादात्विकमैतिहासिकं महत्वं विदन्त्येव भारतीयदर्शनैतिह्यविदः। किन्तु तस्य सर्वस्य यत् सार्वदिकं वास्तविकं वा महत्त्वं तत्ततोऽप्यधिकमिति विज्ञेयं विजिज्ञासितव्यं च। श्री विष्णोः घण्टावतारा: खलु इमे श्रीवेदान्तदेशिकाः इति या श्रीवैष्णवजनश्रुतिः ततोऽपीदमेव सिद्ध्यति यत् श्रीदेशिकोपदेशाः श्रीदेशिकसन्देशा वा घण्टानुरणनवत् कामप्यधिकामेव विचारचारुतां बिभ्रति। तत्र सर्वप्रथमतया विराजमानो यो वेदान्तदेशिकसन्देशः स पुरेवाऽद्यापि तत्तत्तत्त्वचिन्तनपरायणानां विदुषां कृते नितरां श्रद्धेय इति सुतरामुपादेयः।

ननु कोऽयं सन्देशः? यः खलु शताधिक संख्याकासु श्रीदेशिकस्य शास्त्रकृतिषु निभृतमन्तर्विपरिवर्तमानः बहिरुल्लसति? सन्देशोऽयं विद्यावत्सु विनयस्य प्रतिष्ठापनंकामयते। सन्देशोऽयं परस्पर विरुद्धेषुशास्त्रवाक्येषु शास्त्रकारवाक्येषु च तात्पर्यविशेषपरिकल्पनया विरोधोपशमनरूपः।

'तर्कोऽप्रतिष्ठ. श्रुतयो विभिन्नाः।
नैको मुनिर्यस्य वचः प्रमाणम्।।

इतिरूपमाभाणकमपि वस्तुतः अमुमेव विरोधव्यामोहं लक्षयति। तथा हि—कश्चिदाचार्यः वस्तुस्वरूपं प्रतिहतविषयं निर्दिशति, अपरश्च वस्तुस्वरूपं यथावस्थितविषयमुपदिशति। न खलु द्वितयमपि सन्मतमेव सत्यं भवितुमर्हति। इत्थं सत्येकमत-

भक्तानामितरमतपरिहारे काचिदपि व्यवस्था न सिद्ध्यति । अव्यवस्थायां च सत्यां लोकयात्रैव संकटमापद्यते । अतो 'यदर्थ्यं तत्प्रत्येतव्यम्' इति महान् कश्चन भारो विवेकिनां विदुषां स्कन्धयोर्निक्षिप्तस्तिष्ठति । अस्य महाभारस्य लघूकरणाय श्रीदेशिकैः परस्परं विरुद्धेषु समयग्रामेषु परस्परविरोधपरिहाररूपं पण्डितकृत्यं संदिश्यते । वस्तुतः प्रतिसंहितपरमार्थैः श्रीदेशिकैः स्वयं स्वशास्त्र चर्चार्थं तत्तच्छास्त्रचर्चासु यदाचरितम् तदस्यैव विरोधपरिहाराख्यस्य पाण्डित्यस्य परमं निदर्शनमिव किमपि परिकर्मेववावि-भाव्यते । तत्तद्वैदिकधर्माणां परब्रह्मणि शाश्वतिके औपनिषद धर्मे यन्निगमनम्, तत्तज्ज्ञानवैराग्यादि ब्रह्मविद्यानां शाश्वतिके शरणवरणरूपे ब्रह्मविद्याविशेषे यदुप-संहरणम्, अन्यद्वा तत्र तत्र सर्वत्र सामञ्जस्यस्थापनं तत्सर्वं वस्तुतः अस्यैव विरोधप्रशमन योगस्य श्री देशिककृतस्य निदर्शनमिति ।

श्रीदेशिककृतिषु बुद्धिवैमल्यनिदानस्य विरोहपरिहाराख्यस्य पण्डितकर्मणः निदर्शनस्थलान्यनेकानि सन्ति यद्रहस्यं हृदयङ्गमीकृत्याऽधुनातनैरपि तत्तद्विद्याविचक्षणैः विद्वद्भिः तत्त्वाध्यवसाये संशयप्रशान्तिः कर्तुं शक्यते । एका श्रुतिरपरां श्रुतिं बाध्यते, एका स्मृतिरन्यां स्मृतिं विरुणद्धि, एके दर्शनकाराः धर्मब्रह्मणोर्विरोधमामनन्ति, अपरे च दर्शनकाराः धर्मविचार—ब्रह्मविचारयोर्वैमनस्यमातिष्ठन्ते—इति वस्तुतः सर्वमेव जगज्जीवनमिदं विरोधाक्रान्तमेव प्रतिभाति । अतः खलु चिन्तेयं प्रभवति यद् विरोधः सर्वविधोऽपि जगतो जगदीश्वरस्य वा परस्य ब्रह्मणो स्वैरलीला काचित्, तथा च विरोधस्यास्य सर्वत्र विपरिवर्तमानस्य प्रशमनमपि तस्य परब्रह्मणः पुरुषोत्तम-स्य परमेश्वरस्य स्वैरदयैव करिष्यतीति । केवलमीश्वरकृपैव शरणं विदुषामिति महाविश्वासः सर्वैर्विद्वद्भिः स्वहृदि धारयितव्य इति । तथा च संदिष्टं कारुणिकेन कविना श्री देशिकेन—

"स्वयमुपशमयन्ती स्वामिनः स्वैरलीलां
स्वमतमिह दुहाना स्वादु पथ्यं प्रजानाम् ।
नियतमिदमिदानीमन्यदा वा भवित्री
निरवधिसुखसिद्ध्यै निष्प्रकम्पाऽनुकम्पा ॥

(संकल्पसूर्योदये प्रथमाङ्के)

यथा जगति विश्वास एव तत्तदाधिभौतिकाधिदैविकादि ज्ञानविज्ञानानां प्रभव-प्रसरयोः निदानम्, तथैव जगदीश्वरे परब्रह्मणि विश्वास एव तत्तदाध्यात्मिक विद्यो पविद्यानां समुद्भवसमुल्लासयोः कारणम् । 'ईशावास्यमिदं सर्वम् यत् किञ्च जगत्यां जगत्' इत्युपनिषदुपदिष्टो महा विश्वासो यदि मानव हृदये नोदियात् सर्वं खलु वैरविरोध-वैमनस्य संनिपातप्रभवेण महाज्वरेण जीर्णं प्रणाशमेव प्राप्नुयात् । सामान्यजनेष्विव तत्तद् विद्याविशारदेषु विद्वज्जनेष्वपि परस्परवैरजननी काचनाऽभ्यसूया प्रज्वलति यत्प्रशमनमन्तरा परस्परं कलहायमानान्येव भवन्ति सर्वाणि शास्त्राणि;

परस्परं विवदमाना एव च वर्तन्ते शास्त्रकाराः। दावाग्निकल्पेयमभ्यसूया केवलं भगवत्कृपयैव शाम्यति, न क्षुद्रमानवस्य प्रवृद्धमपि बुद्धिबलं तत्प्रशमनायालम्। ईदृशीं लोकव्यवस्थाकारिणीं शास्त्रव्यवस्थाविधायिनीं च भगवत्-कृपामेवाधिहृदयं निध्याय सूक्तं श्री देशिकैः—

"निष्कामक्रोधलोभं निपतितकुहनाडम्भ दर्पाभिमानं
निर्धूतेर्ष्याभ्यसूयामदविहृति जहन्मत्सरस्तम्भ जाड्यम्।
अद्य श्वोवा विदध्यादपि चरमयुगे विश्वमक्षुद्रसत्त्वं
वेलातीतप्रसर्पन्मधुमथन दयादत्तसेको विवेकः॥

(सङ्कल्पसूर्योदयाष्टमाङ्कगतः १५ तमः श्लोकः)

अद्य, श्वो वा परश्वः समुदेष्यत्येव विवेकसूर्योदय इति महाविश्वासः संदिश्यते श्रीदेशिकैः। आशेयं महती काचन भगवत्कृपैवेति विभाव्य विरम्यते विस्तरत इति शुभं भूयादित्यलम्।

# ज्योतिषे राजनीतिः

**ले० श्रीविश्वनाथ झा**

दैवपुरुषाकाराध्याय श्लो० ३

तत्र प्रथमं दैवंविशदीकृत्य दृष्टान्तेन पुरुषदैवस्य प्राधान्यंप्रदर्शयति—

गा— कर्मान्यिजन्मजनितं सदसच्च दैवं
तत्केवलंभवति जन्मनि सत्कुलाद्ये ।
बाल्यात्परं विनय सौष्ठव पात्रता च
पुंदैवजा कृषिवदित्युपपाद्यमेतत् ।

ाशयः—

पूर्वजन्म जनितं पूर्वजन्मकृतं सत् असत् कर्म तदेव दैवमिहकथ्यते, तस्यशुभा-ुभकर्मविपाकस्य फलं केवलं सत्कुलाद्ये जन्मनि भवति अर्थात् सत्कर्मकृतंसत्कुलेजन्म ावति, असत्कर्मणाऽसत्कुले जन्म, मिश्रकर्मणा मध्यकुले जन्मभवति । बाल्यात्परं विनय ौष्ठव पात्रता पुंदैवजा पुंसोदैवं तस्माज्जाता पुंदैवजा भवति इति हेतोः कृषिवत् क्षेत्र ान्यवत् एतदुपपाद्यम् यथा सुजन सुबीज क्षेत्र संस्कारतः सुधान्योत्पत्तिः भवति तथैवोप-ादनीयमिति ।

एवं पूर्वजन्मकृतसुकर्मणा तथा पुरुषार्थेन च नरः नरेशोभवति, नरेशस्य राज्ञः सर्वदा राष्ट्र समुन्नत्यै धनवाजि-वाहनादेः अपेक्षा कर्त्तव्या ।

यतः येषां राज्ञां धनवाहन जनानामपेक्षा न भवेत्तेषामेते स्वादरं न कुर्य अत्राह—

दैवपुरुषाकाराध्याय श्लो० ७

बुधार्थशास्त्राण्यपि मन्त्रिणोऽपि,
कुर्युः प्रणामं न नरेश्वराणाम् ।

यद्याभिजात्यद्विप वाजिपत्ति—
कोशाद्यपेक्षा न भवेत् प्रधाना ।।

बुधोज्ञानी, अर्थः प्रयोजनवान्, शास्त्रं शास्त्री, मन्त्रिणः सचिवा अपि प्रणामं प्रकर्षेण नमनम्, तथा नरेश्वराणां राज्ञां नकुर्युः, यदि परिजन वाहनादि दूत वसु चयादीनां प्रधाना मुख्या अपेक्षा न चेत् ।

अथ वाहनादि धनादिके सत्यपि यः राष्ट्र समुच्छ्रित्यै पुरुषार्थं न करोति स विनश्यति—यथा

दैव पुरुषाकाराध्याय—श्लो० ८

स्वदेशे सन्तुष्टः करि तुरग कोशे सति नयो—
भवेद्यायी सैन्यैः कृतपरिभवो याति विलयम् ।
स्वचक्रेणैवासौ क्षपित धनराष्ट्रो भवति वा—
गतो यो नादत्ते सुनय चरितो नीति विधुरान् ।।

यः वाहन धन समूहे सति विद्यमानेऽपि स्वदेशे—आत्म देशे सन्तुष्टः सम्यक् तुष्टो भवेन् स सैन्यैः परसैन्यैः कृत परिभवः विलयं विशेषेणलयं नाशं याति, वा स्व चक्रेण स्वराष्ट्रेनैव क्षपित धन राष्ट्रो भवति । अर्थात् स्वदेशीयजनैरेव तिरस्कृतो भवति । वा य सुनय चरितः शोभननीतिचारी गतः परदेशं जयार्थं गत्वाऽपि नीति विधुरान् नीतौ रणनये ये विधुरा कष्टाः तान्न आदत्ते न गृह्णाति अर्थात् नीति पूर्वक रण क्लेशान् न स्वीकरोति सोऽपि विलयं नाशं गच्छति ।

यो राजा कालंबुध्वा सुसमयं ज्ञात्वा परराष्ट्रं जयार्थं गच्छति सजयी भवति—अन्यथा कुकाले जयार्थं यः गच्छति स शत्रुवशगो भवति तदेव कथयति—

दैवपुरुषाकाराध्याय—श्लो० ९

उलूकस्यध्वांक्षो निशिबलिभुजां सोऽन्हि वशगः—
स्थले नक्रं सिंहो मृगपमुदके हन्ति जलजः ।
अबुद्ध्वा यः कालं व्रजति नृपतिर्देशमथवा—
हते दर्पे वाक्यं स्मरति विदुषां सोऽरिवशगः ।।

निशि रात्रौ ध्वांक्षः काको उलूकस्य वशगो भवति—अह्निदिने सोऽप्युलूको बलिभुजां काकानां वशगो भवति । स्थले भूमौ सिंहो नक्रं हन्ति, उदके जले ग्राहः मृगपं हन्ति ।

यो नृपती राजा कालं समयमज्ञात्वा व्रजति गच्छति अथवा देशं स्थलं अज्ञात्वा व्रजति, दर्पे सामर्थ्येहृते नष्टे सत्यरिवशगः शत्रुतिरस्कृतः हि पश्चात्तापेन विदुषां आप्तजनानां वाक्यं कथनं स्मरतीति ।

वशीकृतशत्रुवर्गेणापि पौरुषं न त्याज्यं त्यागे हानिः प्रदशर्येति—

दैवपुरुषाकाराध्याय श्लो० १०

रिपो. कृत्वाऽवज्ञांजितिमिति विदित्वा मदवलात्—
न यत्नो ह्यातव्यः शिखिविषसमो-पोपि हि रिपुः ।
प्रमत्तोऽद्रेः कुञ्जात् अयुतबलभागैरपि नरै—
र्हृतो बद्धस्तम्भे करवति मदलेषां द्विप पतिः ।।

रिपोः शत्रोरवज्ञामनादरं कृत्वा मदबलात् अहंकारात् जितमिति विदित्वा ज्ञात्वा यत्नः उद्योगो नहातव्यः न त्याज्यः । अल्पोऽपि स्वस्मान्न्यूनोपि रिपु हि यतः शिखिविषसमोभवति बाण विष तुल्यो भवति । यथा लघूरपि बाणः बहिः संस्पृश्यान्तर्न्नाशयति ।

प्रमत्तः मदान्धोऽपि द्विपपतिः हस्तीन्द्रः पर्वतस्य कुञ्जात् वन विशेषात् अनेक-वीर्य्यविभागैर्नरैर्मनुजैर्हृतः स्तम्भे दृढ़काष्ठे बद्धः मदलेखां कपोल पालीं करवति घर्षते अर्थात् बन्धन मोचनाय चेष्टा विशेषं करोति ।

पूर्वं स्वराष्ट्रे दुर्गं निर्माणं विधाय तद्रक्षार्थं विश्वसनीयं पुरुषं तत्र प्रतिष्ठाप्य शुद्धपार्ष्णी राजा परराष्ट्रंगच्छेत् । तत्राह —

दै० पु० अ० श्लो० ११

वप्रप्राकार यन्त्र प्रहरण परिखा तोय मेयेन्धनाढ्यं—
दुर्गं कृत्वात्मगुप्तं द्विपतुरग भिषक् शिल्पि विप्राभ्युपेतम् ।
लुब्धस्तत्राभिमानी प्रकुपितकृभृतां ज्ञातशीलैर्विहीनं—
कृत्वाशूराप्तसंस्थं परविषयमियात् शुद्ध पार्ष्णिर्नरेन्द्रः ।।

वप्रः परिखोद्धृतमृत्कूटः । प्राकारो यष्टिकराटकादि रचितवेष्टनम । यन्त्रं यत्यतेऽनेनेति यन्त्रम् । प्रहरणं शस्त्रम् ।

परिखा खेयम्, तोयं जलम्, परिखया तोयमिति, तथामेयं मातुं योग्यमिन्धनं काष्ठं जलोत्तारक काष्ठं सेतुर्वाजलोद्धारक काष्ठसेतुरेतैराढ्यं युक्तं दुर्गं दुर्गम स्थानं (लोक किलां) रचयित्वा पुनः किं विशिष्टम्, आत्मगुप्तम् आत्मीयजनैर्गुप्तं रक्षितं । पुनः किं विशिष्टम्—द्विपतुरगभिषक् शिल्पिविप्राभ्युपेतम् अर्थात् गजाश्ववैद्य कारुब्राह्मणयुक्तम् । पुनर्लुब्धस्तत्राभिमानि प्रकुपितं कुभृताम् अर्थात्

लोलुप कातर्य्यहङ्कार्य्यतिक्रोधित दुष्ट राज्ञां ज्ञातशीलैः परिचित चरितैर्विहीनं विशेषेण हीनं वर्जितम् । लुब्धादीनां ये परिचितास्तैरपिहीनम् । शूराप्त संस्थं कृत्वा शूराभटा आप्ताः विश्वास योग्यास्तैः संस्थं सुरक्षितं दुर्गकृत्वा नरेन्द्रः परविषयं परस्यशत्रोर्विषयं-देशं ईयात् गच्छेत् । कीदृशोनरेन्द्रः शुद्ध पार्ष्णिः शुद्धा अकुटिलाः पार्ष्णयः पार्श्ववर्तिनो यस्य —

पर राष्ट्रं गत्वा किं कर्त्तव्यं तत्राह—दै० पुरुषाकाराध्या० श्लो० १२

बुद्ध्वा शक्ति स्व परबलयोः सामभेद प्रदानैः
कृत्वोपायैर्व्यसन समरोपाय संरक्षणैश्च ।
भक्त्या साधून् धनविरहितानर्थ लुब्धांश्च दानै
र्नयाद्भेदैस्त्रिभिरपि न ये साधयेत्तांश्च दण्डैः ॥

स्व परबलयोः स्वशत्रुसैन्ययोः शक्तिं बलं बुद्ध्वा कैः सामभेदप्रदानैः सामः शान्तिः भेद उपजापः । प्रदानम्मतिदानम् । एतैः कृत्वा पुनः व्यसन समरोपाय संरक्षणै रुपायैः । व्यसनं दुरभ्यासः, समरोपायः संग्रामविधि सरक्षणंसम्यक् रक्षणमेतैः उपायैश्च भक्त्या सेवया साधून्साधुजनान् नेयात् वशंकुर्यात्, धनविरहितान् दरिद्रान् च पुनः अर्थ लुब्धान् धनलोलुपान् दानैर्नेयात् एवं सामभिर्दानैर्भेदैश्च वशंनेयात् । एतैस्त्रिभिरपि ये वशं न ईयुस्तान् दण्डैर्वशं साधयेत् कुर्यात् ।

शत्रुणा सन्धि विग्रहादिषड् गुणघटित कृत्यमाह—

दै० पुरुषाकाराध्याय, श्लो० १४

षाड्गुण्ये सन्धिरादौ परिपण रचितो विग्रहोऽस्यापकरी—
नैतौ चेदासनं तत्पर पुर गमनं सर्वसैन्येन यानम् ।
सैन्यार्द्धेनाभियुंक्ते परपुरमपियत्तद्विधा मान मुक्तम्—
संश्लेषोऽन्यत्रयः स्यात् स खलु निगदितः संश्रयोऽन्योगुणानाम् ॥

षाड् गुण्ये षड्गुणस्य सन्धिविग्रहादिकस्य कर्म्म व्यापारः षाड् गुण्यं तस्मिन् । आदौ प्रथमतः सन्धिर्मेलकः कार्यः यतः परिपण रचितो दुराग्रहेण कृतो विग्रहो विवादो [illegible] विकारी भवति । एतौ सन्धि विग्रहौ चेद्यदि न भवतः तदा आसनं गमनाय मन्त्रिसभा विधेया ।

तत्परपुर गमनं तत्पश्चादासनादनन्तरं शत्रु नगर गमनं शत्रुस्थान यात्रा सर्व-सैन्येन यानं सकल सैन्य सहितं यात्रा स्यात् सैन्यार्द्धेन सेनादलेनापि परपुरं शत्रुपुरम-भियुंक्ते, एतत् यत् तत् द्विधा द्विप्रकारकं यानमुक्तं कथितम्, अन्यत्र गुणानां संश्लेषः यः स्यात् स खलु गदितः गुणानां सन्धिविग्रहयानादीनां मध्ये संश्रयः समाश्रयः । बलिना शत्रुणा पीडितः सन् बलवदाश्रयणं निगदितः । सन्धिः सन्धानं स्वर्णादिना शत्रूणां प्रीत्युत्-पादनम् । परमण्डले दाहलुण्ठनादिग्रहणं विग्रहः । शत्रुंप्रति विजिगीषोर्गमनं यानं शक्ति

प्रतिबंधेसति कालं प्रतीक्ष्यादिति । दुर्गादिकं निर्माय तत्रावस्थानमासनम् । बलिना सहसन्धिः । अबलेन सह विग्रहः । अरिणा पीड्यमानस्य बलवद् भूपालाद्याश्रयणं आश्रयः ।

राष्ट्रधनरक्षणमावश्यकम् तद्यथा—

दै० पुरुषाकाराध्याय श्लो० १७

कोशो हि राज्यतरु मूल मतोऽस्य शाखाः
पक्षी विपक्ष इव किं निर्धनः करोति ।
अन्नादिवेन्द्रिय गणं वसुतस्तथान्नम्
तत्प्राप्तिरक्षण विवृद्धिषु यत्नवान् स्यात् ।।

हि यतः कोशोधनागारो राज्यतरु मूलं—

राज्यरूपवृक्षस्यमूलं भवति । अतोऽस्य तरोः शाखाः समुचिताः । निर्धनोधन-रहितो राजा विपक्षः पक्षाभ्यां रहितः पक्षीव किं करोति । नासौ पर राष्ट्रादिगन्तुं-क्षमो भवति । अन्नादिन्द्रियगण इव । यथा अन्नादेव इन्द्रियगणो भवति । वसुतो धनतोऽन्नं भवति अतः तत्प्राप्तिरक्षणविवृद्धिषु धनचयाप्तिस्थिति विवर्द्धनेषु यत्नवान् तत्परः स्यात् राजा ।

अथ यैरुपायैर्धनस्थितिर्भवतितानाह ।

दै० पुरु० अ० श्लो० १८

नीचाचिराढ्य नृपवल्लभ तस्करेभ्यो—
राष्ट्रं नृपेण परिरक्ष्य मतोऽस्य कोशः ।
कालेकर प्रणयनं च यथो चितानां—
तन्नार्थयेत् भवति येन जनापवादः ।।

नीचो दुराचारी, अचिराढ्यो नूतनधनी । नृपवल्लभाः पर राजप्रियाः तस्कर-श्चौरः । एतेभ्यो राष्ट्रं कोशो रक्ष्यं रक्षणीयम् अतः कारणात् अस्य कोशोधनागारो भवति । काले समये प्राप्ते यथोचितानांदुष्ट शिष्ट मिश्र जनानामनुचित कर्मकारिणां कर प्रणयनं बलि ग्रहणंदण्डञ्च कार्यं तन्नार्थयेत् न याचेत येन जनापवादो लोकेभुवने-चापवादोऽपकीर्त्तिर्भवेदिति ।

अथ सुसमयेनैव कार्यसिद्धिर्भवति—

दैव पुरुषकाराध्याय, श्लो० २१

कालोऽभ्युपैति सकृदेव नरं कथं चित्—
प्राप्नोति तन्न समयं खलु कालकांक्षी ।

कालेन गोचर गतान् अनपेक्ष्य भक्ष्यान्—
मन्द क्रमोऽप्यजगरः समुपैति सिद्धिम् ।।

कालः सुसमयः नरं मनुष्यं प्रति कथंचित् केनापि प्रकारेण सकृदेवैकवारमेवाभ्युपैत्यभ्युपागच्छति । तत्समयं सुसमयं कालकांक्षी पुमान् न प्राप्नोति । येन समयेन तत्क्षणमेव सिद्धिर्भवेदिति । समयस्यैव सिद्धिकरत्वं कुत इत्यत आहगोचर गतान् दृक् पथ गतान् भक्ष्यान् खाद्यान् अनपेक्ष्य उपेक्ष्य मन्दक्रमोऽपि स्वल्पगाम्यप्यजगरः सर्प विशेषः कालेन समयेन सिद्धिं भोजन प्राप्ति रूपां समुपैति सम्यक् प्राप्नोति ।

पुनः समयं प्रशंसयति ।

दै० पु० अ० श्लो० २२

दुर्ग स्थितं फलमपक्वमनल्पयत्नात् ।
संसिद्धमप्युप करोति गुणं न पुंसाम्
साधारणं स्वपतितं च भवेद्यतोऽतः
कालेऽभियुक्त पतितं रसवत्सुखाय ।।

दुर्ग स्थितं दुःखेन गन्तुं शक्यं दुर्गमशक्य स्थानं तत्र स्थितंफलमपक्वं पाकरहिंतमनल्पयत्नात् बहुयत्नात् संसिद्धमपि सम्यक् पक्वमपि पुंसांनृणां गुणं प्रति नोपकरोति नहि उपकार भावं प्राप्नोति । साधारणमयत्नलभ्यं स्वपतितं स्वेनैव पतितं फलं यतो भवेत् ततः तस्मात् कारणात् काले सुसमयेऽभियुक्त पतितं रसवद्रसयुक्तं सुखाय भवतीति ।

कुचेष्टित राजस्य परिणाममाह—

आचाराध्याय० श्लो० ९

दैवज्ञ मन्त्रि सुहृदाप्तवचांसि राजा
योनाद्रियेन्निज विचेष्टित दुष्ट बुद्धिः ।
सोऽग्रेसरेण रहितोऽन्ध इवाचिरेण
हास्यत्वमेति पतितो विषये रिपूणाम् ।।

यो राजा दैवज्ञमन्त्रिसुहृदाप्तवचांसि, दैवज्ञो ज्योतिर्वित्, मन्त्री सचिवः । सुहृन्मित्रम् । आप्तो विश्वासुकः एतेषां वचांसि उपदेशवचनानि नाद्रियते नादरं कुर्यात्, सरिपूणां विषये देशे पतितः सन्नचिरेण शीघ्रमेव हास्यत्वमुपहासतामेति प्राप्नोति, कइवअग्रेसरेण नेत्रा रहितोऽन्धइव । कीदृशो राजानिजविचेष्टितदुष्टबुद्धिः, निजेन विचेष्टितेन कर्मणादुष्टाबुद्धिर्यस्य ।

त्यागी दानी, विनयी, सुदर्शनः, विगत मोहः प्रतिपत्तियुक्तः तत्तत्कार्यव्युत्पत्तिशाली। देशस्य भागविज्ञः अस्मिन् देशे इदं कर्म क्रियते अन्यस्मिन् देशे नेति। कालस्य च भागविज्ञः अस्मिन् ऋतौ मासे दिने चेति कर्त्तुमुचितमनुचितं वेति भागविज्ञः।

स्वयमात्मनैव यो राजा व्यवहारदर्शी व्यवहारद्रष्टा स्यात्—

आचाराध्याय, श्लो० १७

अथ श्वः कर्त्तव्याकर्त्तव्य विवेक समय माह—

विचिन्त्य कार्याणि निशावसाने
द्विषत् सुहृत् मण्डल संश्रितानाम्।
बलार्थदेशेषु नियोजितानाम्
समाश्रितानां च कृता कृतानि॥

निशावशेषे रात्र्यन्ते द्विषत् सुहृत् मण्डल संश्रितानांशत्रुमित्रचक्र सङ्गतानां कार्याणि विचिन्त्य विचार्य्य च बलार्थ देशेषु सैन्य प्रयोजन राष्ट्रेषु नियोजितानां नियुक्तानां समाश्रितानां कृताकृतानि कार्याकार्याणि विचिन्त्य यथोचितं श्वः कारयेत्।

अथ के पूज्याः—

आचाराध्याय० श्लो० १८

अनाश्रितः ख्यात गुणः परोऽपि
शूरोऽथवा साधुजनः प्रशस्तः।
सम्पूजनीयो जन सङ्ग्रहार्थम्
ममेति देशोपगतो विचिन्त्य॥

अनाश्रितोऽनधीनो दैवादागतः। ख्यात गुणः प्रथित गुणः। परोऽपिशत्रुरपि। शूरोवीरोऽथवा साधुजनः प्रशस्तः अगुणरहितः जनसङ्ग्रहार्थं लोकरक्षणाय सम्पूजनीयः सम्यक् वन्दनीय अयं मम देशोपगत इति विचिन्त्य विचार्येति।

अथ धर्म सभायामुपवेशानन्तरं समारिमित्रादीनांचरितं विलोक्य किंकर्त्तव्यमित्याह—

आचाराध्याय, श्लो० २८

क्षमान्वितोऽस्मीति विचिन्त्य मेतत्
दण्ड्येषु दण्ड क्षमणं न धर्मः।
दण्ड प्रभावो हि स दुर्जनस्य
हस्तेन यो जीवति साधुवर्गः॥

अहं क्षमान्वितोऽस्मि सन् भवद्भिः निःसंशयं स्वचरितानि वक्तव्यानि इति कथयित्वा तेषामेतत् सुचरितं कुचरितं च विचिन्त्यं नीतिशास्त्रपथा चिन्त्यम् विभाव्यम्। ततो भावनानन्तरं दण्ड्येषु दण्डनीयेषु एतत् दण्डक्षमणं दण्डाकरणं न धर्मो राज्ञामिति। हि यतः स दण्ड प्रभावः दुर्जनस्य मध्ये समुचितः। यश्च साधुवर्गः सज्जन-गणः सच राज्ञो हस्तेन जीवत्येव। अर्थात् राज्ञोहस्तेन साधूनां पालनमुचितमेव, वा हि यतः यः साधुवर्गः सत्समुदायः दुर्जनस्य खलस्य हस्तेन जीवति स दण्ड प्रभाव एव। अर्थात् राजदण्ड प्रभावादेव दुर्जनहस्तेन साधु वर्गोऽपि जीवति अन्यथा साधु समूह जीवनं कथं स्यात्।

दण्डाकरणेऽनिष्टमाह—

आचाराध्याय० श्लो० ३१

द्विरद इव मदेन विप्रयुक्तो
विषरहितो भुजगो व्यसिश्च कोशः।
परिभव मुपयाति नापराधे
यदि मनुजाधिपतिः करोति दण्डम् ॥

यदि मनुजाधिपती राजाऽपराधेऽनुचित कर्मणि दण्डं न करोति तदा परिभव-मनादरं उपैति प्राप्नोति।

क इव मदेन दानेन विप्रयुक्तो रहितो द्विरदो गज इव। वा विष रहितो भुजगः सर्प इव। वा व्यसिः खड्ग रहितः कोश इव परिभवमुपयाति। अर्थात् यथा मदरहितस्यगजस्य विषरहितस्य सर्पस्य खड्ग रहितस्य धानागारस्य च न किमपि लोके भयं तथैव अपराधे सत्यपि समुचित दण्डं यो राजा न करोति तस्य लोके न भयं भवति, येन राज्येऽशान्तिः प्रसरति तस्मान्नकोपि बिभेति दन्डाकरणत्वात्।

दण्डनीयेषु क्षमाक्षमयोर्दोषगुणौ स्याताम्—

आ० अ० श्लो० २९

सुतरामभिवर्द्धतेऽभिमानोनीचानांक्षमयान्वितेषु यस्मात्।
अतउग्रतरेण ते निवर्त्त्या येनान्येऽपि खलास्तथा न भूयुः ॥

यस्मात् कारणात् क्षमयान्वितेषु क्षान्त्यायुक्तेषु राजसु नीचानां दुराचारिणां सुतरामतिशयेनाभिमानोऽभिवर्द्धतेऽत उग्रतरेणातिघोरेण स्वभावेन ते नीचा निवर्त्त्याः कारागृहादि वासेन दण्ड्या येन कारणेनान्येपि खलाः नीचास्तथान भूत्युस्तथा दुष्ट-कर्माणि न कुर्युरिति।

अपराधतुल्यदण्डमेवोचितम्—

आ० अ० श्लो० ३२

एकस्यतुल्योदरपाणिपादा दण्डात्प्रभीताः प्रणमन्ति मर्त्याः ।
अत्युग्रदण्डादपि चोद्विजन्ते, दण्डोऽपराधः प्रतिमः शिवाय ।

एकस्यदुराचारिणः पुंसोदण्डात् नीतिपूर्वक दण्ड पातनात् तुल्योदर पाणिपादास्तत् सदृश कुक्षिहस्त पादाः मर्त्याः प्रभीता प्रकर्षेण भीतास्त्रस्ताः प्रणमन्ति राजानम्। अत्युग्रदण्डादपि सुभयङ्करताडनादपि मर्त्याश्चोद्विजन्ते उद्वेगं प्राप्नुवन्नि । तस्मात् अपराध सदृशोदण्डः शिवाय मङ्गलाय भवति राज्ञामिति ।

राज्ञः पञ्च महायज्ञान् —

आ॰ अध्याय० श्लो० ३३

दुष्टस्य दण्डः सुजनस्य पूजा ।
न्यायेन कोशस्य च सं प्रवृद्धिः
अपक्षपातोऽर्थिषु राष्ट्र रक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ।।

दुष्टस्य कुटिलस्य दण्डः । सुजनस्य साधोः पूजाऽर्चा, न्यायेननीत्या कोशस्य धनागारस्य च संप्रवृद्धिः सम्यग्वर्द्धनम् । अर्थिषु याचकेषु अपक्षपातः पक्षपात राहित्यम् । राष्ट्ररक्षा देशरक्षणं पञ्चैव इत्येव नृपाणां राज्ञां यज्ञाः कथिता नच दर्शपौर्ण मासादिः ।

प्रोत्साहनाध्याय, श्लो० ६

अथ रणे प्रत्यासन्ने सति मंत्रि सभा जनितं कुर्यात् —

रणे प्रत्यासन्ने सदसिनृपतिर्मन्त्रि विदितम्
बलोत्साहं कुर्यादहतिबलविद्रावण करम् ।
जयं नो दैवज्ञः कथयति जनः सत्यवचनो
निमित्तानीष्टानि द्विप तुरग योधादिषु च मे ।।

रणे संग्रामे प्रत्यासन्ने समीपे सति सदसि सभायां मन्त्रि विदितं सचिवजन संमतमङ्गीकृतं बलोत्साहं त्रिविधशक्त्युत्साहं शत्रुशक्तिविदारणकं कुर्यात् । सत्यवचनो दैवज्ञ गणको नोऽस्माकं जयंविजयं कथयति मे च मम च गजाश्वभटादिषु निमित्तानि शकुनानि इष्टानि शुभसूचकानि भवन्ति ।

सार्थक लक्षणम्—

प्रोत्सहनाध्याय, श्लो० १

शूरकृतास्त्र महाकुल जाताः स्वामिहिता बलिनः कृत योग्याः ।
दृष्टगुणाबहुबान्धवमित्रा-नागकरोरुभुजाः कठिनाङ्गाः ।।

वीरशिक्षितास्त्रविद्यसुकुलप्रसूताः । स्वामिहिता प्रभ्वनुकूलकराः बलिनो बलशालिनः ।कृतयोग्याः बहुयोग्याः, दृष्टगुणाः दर्शितसुगुणाः । बहुबान्धवमित्राः अधिक स्वजन सुहृदः, नागकरोरु भुजाः गजहस्तवद्दक्षाः स्थूलबाहवः, कठिनाङ्गाः कठोरशरीराः एवंभूताः सहायाः सार्थकाः पुण्यकृतां पुण्यवतां समरेषु संग्रामेषु भवन्ति ।

अग्रिम पंक्तिस्थित भटवर्णनम्—

प्रो० अ० श्लो० ३

देश गुणैः प्रथिताश्च पुरोगा
स्ते बहवो गुण लक्षण लक्ष्याः ।
कालभृतोभृकुटीकृतवक्रा
वर्मभृतो विवुधायुध हस्ताः ।।

देशगुणैः राष्ट्रगुणैः प्रथिताश्च विदिताश्च ते बहवोऽनेकेभवेयुः । गुणलक्षणलक्ष्याः गुणाः षड्गुणा सन्ध्यादयः तेषांलक्षणंचिन्हं तल्लक्षितुं योग्याः । कालभृतः समयधारिणो विभज्यगृहीत समयाः । भृकुटीकृतवक्राः । भ्रूभङ्गेनैव कृतो वक्रो विघ्नो यैस्ते तथा अपिच वर्मभृतः कवच धारिणः विविधायुधहस्ता नानास्त्रशस्त्रकराः, एवं भूताः पुरोगा अग्रेसरा भवेयुः ।

अथ भट पराक्रमंवर्णयन् संग्रामाभिमुखं तं करोति—

प्रो० अ० श्लो० ७

अभिजन युता यूयं शौर्यं जनाः कथयन्ति वो
धनुषिकणये चक्रे शक्त्यामसौ च कृत श्रमाः
मयि च भवतामस्ति स्नेहः कथं न जयो मम
द्विरद तुरगं स्यादाक्रान्तं भवद्भिरिदं यदा ।।

यूयं भटा अभिजनयुता निजजन परिजन संवलिताः स्युः । वो युष्माकं शौर्यं पराक्रमं जना लोकाः कथयन्ति । धनुषि धनुर्विद्यायां कणये शस्त्र विषये चक्रे अरौ शक्त्यां छूरिकायामसौ खड्गे च शस्त्रे नान्येषु व्यायामादिषु कृतश्रमाः सुशिक्षिता यूयम् । मयि च मदीयेषु च भवतामस्त्र शस्त्राद्यनेक विद्या निष्णातानां स्नेहोऽनुरागोऽस्ति । यदा

भवद्भिः कार्यसम्पादनकुशलैरिदमुपस्थितं द्विरदतुरगं गजाश्वमाक्रान्तमाक्रण विषयीभूतं स्यात्तदा ममजयो विजय श्रीलाभः कथं नस्यात् ।

अथ युद्धे धर्म्ममभिवर्णयन् सुलभ मुक्तिकीर्ति दशर्यति—

प्रोत्साहानाध्याय, श्लो० ९

द्वैपायनेन मुनिना मनुनाच धर्मा युद्धेषु ये निगदिताविदितास्तु ते वः ।
स्वाम्यर्थं गोपुरहितेत्यजतां शरीरं लोकाभवन्ति सुलभा विपुलं यशश्च ॥

द्वैपायनेन वेद व्यासेन, मनुना स्मृतिकर्त्त्रा वैवस्वतेन युद्धेषु ये धर्मा निगदिताः कथिता स्ते विविध धर्मा वो युष्माकं विदितास्तु प्रथितास्तु । स्वाम्यर्थगोपुरहितो प्रभ्वर्थ गवि पुर (देश) रक्षणे शरीरं देहं त्यजतां जनानां लोकाः परलोकाः सुलभा सुखेनलभ्या भवन्ति । च शब्देन इहलोके विपुलं सुमहत् यशश्च सुकीर्त्तिश्च भवतीति ।

प्रोत्साहनाध्याय, श्लो० १०

पुनश्च युद्धधर्मं प्रतिपादयति—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिज्यया च या ।
व्रजन्ति तामाशु गतिं मनस्विनो
रणाश्व मेधे पशुतामुपागताः ॥

तपस्विभिः तापसैः प्रयत्नतो वर्षातपशीतकृच्छ्रादितोयागतिर्मुक्तिः सुचिरेण बहुकालेन लभ्यते प्राप्यते या च गतिः सत्रिभिर्मनोवाक् कायैः सह इज्यया यागेन-अश्वमेधादिना लभ्यते । तां गतिं मुक्तिं रणाश्वमेधे रण एवाश्वमेघः तथा तस्मिन् समराश्वमेधे पशुतां पशुधर्मतामुपागताः प्राप्ता मनस्विनः वीराः व्रजन्ति गच्छन्ति ।

प्रो० अ० श्लो० १२

संरक्ष्यमाणमपि नाशमुपैत्यवश्य
मेतच्छरीरमपहाय सुहृत्सुतार्थान् ।
तत्किंवरं प्रलयतां सुहृदां समक्षम्
किं निघ्नतः परबलं भृकुटी मुखस्य ॥

संरक्ष्यमाणमप्येतच्छरीरं अवश्यं निश्चयेन सुहृत्सुतार्थान् मित्रपुत्रधनान्यपहाय त्यक्त्वा नाशमुपैति लयं प्रयाति । प्रलयतांमुहृदां मित्राणां समक्षं प्रत्यक्षं तन्नाशं किं वरं श्रेष्ठम् । किं परबलं शत्रुसैन्यं निघ्नतो घातयतो भृकुटी मुखस्य भ्रुवोः कुटी कौटिल्यं तेनयुक्तं मुखं यस्य तथा तस्य नाशंवरम् । अनयोः शत्रु सैन्यं नाशयतो नाशमेव वरम् ।

प्रा० अ० श्लो० १३

हातात मातेति च वेदनार्त: क्वणञ्छकृन्मूत्र कफानुलिप्त: ।
वरं मृत: किं भवने किमाजौसन्दष्टदन्तच्छदभीमवक्त्र: ।।

हा तात हा मात इतीत्थं वेदनार्त्त: अनुभव पीडित: क्वणन् अव्यक्तं वदन् सन् शकृन्मूत्रकफानुलिप्तो मलप्रश्रावश्लेष्मानुषितो भवने गृहे मृत: किंवरम् । किमाजौ किं संग्रामे सन्दष्ट दन्तच्छद भीमवक्त्रो दन्तेन सम्पीड्य औष्ठ भयानक मुखो वरम् । अनयोर्मरणयोर्मध्ये रणमेव वरम् ।

युद्ध पराङ्मुखानामयश माह—

प्रो० अ० श्लो० १४

लोक: शुभस्तिष्ठतु तावदन्य: पराङ्मुखानां समरेषु पुंसाम् ।
पत्न्योऽपितेषां नह्रिया मुखानि पुर: सखीनामवलोकयन्ति ।।

समरेषु संग्रामेषु पराङ् मुखानां पृष्ठापवर्त्तिनां पुंसां पुरुषाणाम् तावत् आदौ लोको निजजन परिजनात्मक: शुभ: कुशलं तिष्ठतु । अन्योवातिष्ठतु । तेषां रणापवर्त्तिनां पत्न्योपि स्त्रियोऽपि ह्रियालज्जया सखीनां सहचरीणां पुरोऽग्रतो मुखानि वदनानि नावलोकयन्ति न पश्यन्तीति मानहानिमयेति ।

अथ युद्ध भीरोरेतन्न भवतीत्याह—

प्रो० अ० श्लो० १७

मणिकनक विभूषिता युवत्यो द्विपतुरगं वसु चामरानिलश्च ।
अविरल शशिकान्ति चातपत्रं भवति न मातृ मुखस्य युद्ध भीरो: ।।

मातृ मुखस्य मातर्यभिमुखस्य युद्धभीरो: रङ्गकातरस्य पुंसोमणिकनक विभूषिता रत्नसुवर्ण स्वलंकृता युवत्य: स्त्रियो न भवन्ति द्विपतुरगं गजाश्वं न भवति । वसुधनं न भवति । चामरानिलश्च वालव्यजन वीजनञ्च न भवति । अविरलशशिकान्ति चातपत्रं धन विद्युद्द्युति छत्रं न भवतीति ।

अथ रणरतस्य विशेष सुखमाह—

प्रो० अ० श्लो० १८

रुचिमत्कुच बाहु पञ्जरे हरिणाक्ष्य: प्रवरोरु पीडनम् ।
रमयन्ति विमान संस्थिता: सुरवध्वोऽतिमुदा रणार्जिता: ।।

अतिमुदा अतिशय हर्षेण विमान संस्थिता व्योमयान सङ्गता: सुरवध्वो देवाङ्गना हरिणाक्ष्यो मृगशावक नयना रणार्जिता रणेन युद्धेन उपार्जिता रुचिमत्कुच-

बाहुपञ्जरे शोभाशालिकुच युगभुज पञ्जरमध्ये प्रवरोरुपीडनं कुचयुग मर्दनं यथा स्यात्तथा रमयन्ति क्रीड़यन्ति जयिनं जनमिति ।

अथ शूरस्य पुंसः विशेषालङ्करण माह—

प्रो० अ० अ० २२

न केवलं गात्रविभूषणानि क्षतानि शूरस्य रणेकृतानि ।
यशस्तरोर्मूलकृषिक्षतानि तान्येववंशस्य विभूषणानि ।।

केवलं गात्र विभूषणानि स्रक् चन्दन मणिमुक्ताभरणानि न विभूषणानि भवन्ति । किञ्च शूरस्य वीरस्य रणे संग्रामे कृतानि क्षतानि व्रणचिन्हानि विभूषणानि भवन्ति यशस्तरोः कीर्ति वृक्षस्य मूलकृषिक्षतानि बुध्नक्षेत्र छिन्नानि तान्येव न तु अन्यानिवंशस्य गोत्रस्य विभूषणानि भवन्ति ।

रणहतस्य परमार्थिक सुखमाह—

प्रो० अ० अ० २३

भग्नेषु योधेष्ववपूर्य शस्त्राण्याजौ प्रवृत्ता व्यसवः कृता ये ।
ऊर्ध्वानना वाजिमखाप्तलोका स्तेषां विमानान्यवलोकयन्ति ।।

योधेषु भटेषु भग्नेषु प्रनष्टेषु शस्त्राण्यवपूर्य आयुधानिपूरयित्वा । आजौ संग्रामे प्रवृत्ता व्यसवः प्राणरहिताः कृता ये भवन्ति तेषां रणहतानां विमानानि व्योमयानानि अवलोकयन्ति सम्पश्यन्ति के वाजिमखाप्तलोका वाजिमखेन अश्वमेधयागेनाप्ताः प्राप्ताः लोकाः स्वर्गलोकायैस्ते तथा किं विशिष्टाऊर्ध्वानना उत्तान मुखा इति तदुपरि गमनत्वात् ।

अथ रणमृतस्य पदे पदेऽश्वमेधफलं भवति --

प्रोत्सा० अ० अ० २४

यैरश्व मेधेऽभिहितं फलं वा देवैर्द्विजैर्वाश्रुतिशास्त्रकारैः ।
तैरेव भङ्गे प्रतिलोमगस्य पदे पदे वाजिमखः प्रदिष्टः ।।

यैर्देवैर्द्विजैर्वा यैः श्रुतिशास्त्रकारैरश्वमेधेऽश्वमेधयागे फलमभिहितं कथितं तैरेव देवादिभिराचार्यैर्नान्यैः प्रतिलोमगस्य शत्रु सम्मुखस्य भङ्गे नाशे पदे पदे चरणे चरणे वाजिमुखाऽश्व मेधयागः प्रदिष्टः कथितः ।

अर्थात् रणहतस्य पदे पदे अश्वमेधयाग फलं भवति ।

अनेकेषु विधेषु स्वर्ग मार्गेषु सरलमार्गमाह—

प्रो० अ० अ० २५

स्वर्गस्य मार्गा बहवः प्रदिष्टास्तेकृच्छ्रसाध्याः कुटिलाः सविघ्नाः ।
निमेष मात्रेण महाफलोऽय मृजुश्च पन्था समरे व्यसुत्वम् ।।

स्वर्गस्य स्वर्ग गमनस्य बहवोऽनेके मार्गाः पन्थानः प्रदिष्टाः कथिता आचार्यैः । ते मार्गाः कृच्छ्रसाध्याः क्लेश साध्याः सन्ति कुटिला वक्राः सन्ति । सविघ्नाः विघ्न सहिता सन्ति । निमेष मात्रेण पक्ष्मपात समयेन महाफलोयमृजुश्च सरलश्च पन्था मार्गोऽस्ति किं तदाह समरे रणे व्यसुत्वं प्राणरहितत्वम् । अर्थात् समरे क्षणमात्रेण स्वर्गगमन फलभागिनोभवन्ति मृतसैनिकाः ।

समरहतानां ऐश्वर्यं दृष्ट्वा स्वर्गस्थायिनो रणलाभाय पुनः जन्मेच्छन्तीत्याह —

प्रो० अ० अ० २६

दृष्ट्वैश्वर्यं देश गोब्राह्मणार्थे त्यक्तासूनां सङ्गरे सङ्गतानाम् ।
कृच्छ्रोपायै रर्जित स्वर्गलोकाः जन्मेच्छन्ति क्षिप्रमेवाजिलोभात् ।।

देश गोब्राह्मणार्थे राष्ट्र गोविप्रहेतौ सङ्गरे सङ्गतानां सम्प्राप्तानां त्यक्तासूनां रहित प्राणानामैश्वर्यं विभूतिं दृष्ट्वा कृच्छ्रोपायैः कष्टोपायैरर्जित स्वर्गलोका उपार्जित नाकाः आजिलोभात् सङ्ग्रामलोभात् शीघ्रं जन्मेच्छन्ति । अर्थात् पुनर्भूमौ जन्मलब्धे रणमरणमेव वरयन्तीति ।

रण विचेष्टितस्य पारमार्थिकं सुखं प्रतिपादयति —

प्रो० अ० श्लो० २७

संमूर्छितं संयुग संप्रहारैः पश्यन्तिसुप्त प्रति बुद्ध तुल्यम् ।
आत्मान मङ्केषु सुराङ्गनानां मन्दाकिनी मारुत वीजिताङ्गाः ।।

संयुग सम्प्रहारैः रणसम्प्रहारैः संमूच्छितं सम्यक् विचेष्टितं सुप्तप्रतिबुद्धतुल्यं शयन प्रतिबोधितसमंसुराङ्गनानामङ्केषु क्रोडेषु आत्मानं निजात्मानं मन्दाकिनी मारुत वीजिताङ्गा वियत् गंङ्गा पवन पवित्रिताङ्गाः पश्यन्ति विलोकयन्ति । अर्थात् देवाङ्गना रणमृतं क्रोडेकृत्वा दिवं नयति ।

अथ गृहभीरुमरणात् रणमरणमेव वरम्—

प्रो० अ० श्लो० २८

जीवितोऽपि निहतस्य वा रणे धर्मं एव हि नरस्य युध्यतः ।
निश्चयान्न मरणं हि सङ्गरे नैवमीरुरजरामरः क्वचित् ।।

जीवतोऽपि जीवनादपि रणे समरे युद्ध्यतो नरस्य निहतस्यैवहि निश्चयेन घर्मः । निश्चयात् हि यतो रणे समरे मरणं न भवति । भीरुः कातरोऽजरा मरः क्वचित् कुत्रापि नैव भवति । अर्थात् भीरुरपि समसे म्रियते गृहेऽपीति ।

मानमेवावलम्ब्य कीटादयोऽपि युध्यते किं पुनर्नर इत्याह—

प्रो० अ० अ० २९

मानमात्रमवलम्ब्य युध्यते कीटकोऽपि विहगोऽथवा पशुः ।
कोहिनाम पुरुषस्त्यजेद्रणं स्वर्गमान सुखकीर्त्ति वित्तदम् ।।

कीटकोऽपि पिपीलिका समुदायोऽपि विहगोऽपि पक्ष्यपि । अथवा पशुश्चतुष्पदोऽपि मान मात्रं चित्तसमुन्नतिमात्रमेवालम्ब्य आश्रित्य युद्ध्यते । कोहीति निश्चयेन नाम प्रसिद्धः पुरुषो वीरो रणं समरं त्यजेत् नकोऽपीति किं विशिष्टं मरणम् स्वर्गमान सुख कीर्ति वित्तदं स्वर्गवास चित्त समुन्नति पुण्य यशोधनद मिति । अर्थात् स्व सम्मान रक्षणायावश्यं संग्रामं करणीयम् ।

अथ भाव्य भावि वशेन विशेषमाह—

प्रो० अ० श्लो० ३०

यदभावि न मेऽस्ति तत् क्वचित् सद सद् भावि न मे क्व यास्यति ।
इति सम्परिचिन्त्य पण्डिताः परसैन्यानि विशन्त्यविक्लवाः ।।

मे मम यदभावि यच्छुभाशुभमभाव्यं तत् क्वचित् कुत्रापि नास्ति न भविष्यति । मे मम सदसद्भावि शुभा शुभ भावि यत् तत्क्वचित् कुत्रापि भवन वन नगादिषु न यास्यति न गमिष्यति सर्वत्रापि तद्भविष्यत्येव । इति एवं पण्डिताः शिक्षित-बुद्धयः सम्परिचिन्त्य सम्यग्विचार्य अविक्लवा अभयाः सन्तः पर सैन्यानि शत्रुबलानि विशन्ति प्रविशन्ति । अतः प्रसन्न मनसा देश रक्षणाय योद्धव्यम् ।

अथ रण हतस्य परमोत्कृष्टं सुखं भवति तत्राह—

प्रोत्सहनाध्याय, श्लो० ३१

उरः कृत्वा वेद्यां मणि फलक गाढ़ स्थित कुचम्
भुजावालम्ब्यैहीत्यमर वनिता व्योम गृहगाः ।
अपद्वारेणैवं त्वरित पदमित्याहुरपरा
हतं हस्तालम्बैर्हरति सुरलोको रण मुखात् ।।

उरो वक्षस्थलं वेद्यां अङ्गणादिषु कृतोपवेशन स्थाने कृत्वासंस्थाप्य किंविशिष्टमुरः मणिफलकगाढ़स्थित कुचं यत्रेति तथा । भुजौहस्तौ आलम्ब्य आश्रित्य एत्य आयाहि

इत्येवं प्रकारेण व्योम गृहगा गगनभवनगता अमर वनिता देवाङ्गना हतं रणहतं पुमांस-माहुः कथयन्तीति । अपरा गन्धर्व ललना अपद्वारेण अपगतद्वारेण त्वरितपदं सुवेगित चरणं यथास्यात्तथैहि रणहतम् । सुरलोको देवगणो रणमुखात् समर स्थानात् हतं हस्तालम्बैः सोपानभूतहस्तै र्हरत्यानयति । अर्थात् रणहतं हस्तरूपैः सोपानैः दिवंनयति गन्धर्वललना ।

अथ रणहताः कीदृशं विमानम्प्रविशन्ति तदाह—

प्रो० अ० श्लो० ३२

हंसाढ्यं मणिवेदिका कुहरक व्यालं विहाराम्बरम्
निर्व्यूह स्थित रत्न चित्रं कनकं स्तम्भाश्रित व्यालकम् ।
घण्टा किङ्किणि चारु चामर युतं स्त्रीगीत नृत्यान्वितम्
बालार्कोपममाविशन्त्यभिमुखा युद्धे विमानं हताः ॥

युद्धे रणे येऽभिमुखा हता मृतास्तेवीरा विमानं व्योमयानमाविशन्त्याप्रविशन्ति किं विशिष्टं विमानमिति हंसाख्यम् हंसाख्यपक्षिणा सहितं पुनः किं विशिष्टं मणिवेदिका कुहरकव्यालं रत्नासन सुषिर सर्पचित्रम्, पुनः किं विशिष्टं विहाराम्बरं क्रीड़ावस्त्र सहितम् । निर्व्यूहस्थित रत्न चित्र कनकम् । अविरल निष्ठमणिखचित विविधाकार सुवर्णम् पुनः स्तम्भाश्रितव्यालकम् । स्तम्भखचित सर्पचित्रम् । घण्टाकिङ्किणिचारु चामरयुतं घण्टाख्यवाद्यक्षुद्र घण्डिकारुचिर वालव्यजनान्वितं स्त्रीगीतनृत्यान्वितं बालार्कोपममुदयकालिक सूर्यसदृशमिति ।

अर्थात् रणहताः सूर्याभाः परमोत्कृष्टे विमाने संस्थिताः सन्तः स्वर्गलोकं गच्छन्ति ।

—अथ जयि पराजयिजनयोर्विशेषफलं तदाह—प्रो० अ० श्लो १९

एकतोऽस्य सुरसुन्दरीजनः श्रीप्रतीच्छति युयुत्सुतोऽन्यतः ।
पद्मयासह पलायते यशश्चैकतः कुलकलङ्ककारकम् ॥

एकतोऽस्य जयिनः पुंसः सुरसुन्दरीजनो देवाङ्गना गणः प्रतीच्छति । आलिङ्गितुमिच्छति । अपि च युयुत्सुतः पुंसः श्रीर्लक्ष्मीः प्रतीच्छति प्रकर्षेणेच्छति । अन्यतः पराङ्मुखस्य युद्धपराजितस्य पद्मया लक्ष्म्यासह सहितं यशः कीर्त्तिः पलायते एकतश्च कुलकलङ्ककारकं पलायन कलङ्कश्चभवति । अनेनेदं कथयति यत् युद्धाङ्गणात् न पलायनं समुचितं पलायन परिस्थितौ युद्धे मरणमेव वरम् । इति शिवम् ।

# कालिदासस्य रामगिरिः

**श्रीअनन्तत्रिपाठिशर्मा**

संस्कृतसाहित्ये कविकुलतिलकेन कालिदासेन विरचितं मेघदूतं किमपि विशिष्टं स्थानमधिकरोति। इदं ह्येकं क्षुद्राकारं खण्डकाव्यम्। अत्र केवलं किंचिदधिकानि शतसंख्यकानि मन्दाक्रान्तापद्यानि सन्ति। परन्तु एतत् केवलं कालिदासस्य सर्वस्वम्। अत्र प्रत्येकं पद्येषु कालिदासस्य प्रतिभा निपुणमालिखिता सहृदयमनांस्यावर्जयति। रसस्तु विप्रलम्भशृङ्गारः, तदनुगुणा कोमलकान्तपदावलीसमुद्भासिता वैदर्भी रीतिः। कवेः कल्पनाप्रसूनमुक्तादामनिवृत्तं सरसं चेतोहारि च संदृश्यते। कविरत्र धूमज्योतिःसलिलमरुतां सन्निपातं मेघं पटुकरणैः प्राणिभिः प्रापणीयस्य सन्देशस्य वहने असमर्थं जानन्नपि दूतत्वेन कल्पयन् आत्मनो लेखनीं व्यापारयति, चेतनाचेतनेषु प्रकृतिकृपणस्यापि यक्षस्य कामार्तस्य मुखेन रामगिरितः अलकापर्यन्तं तत्प्रयाणानुगुण मार्गं, श्रोत्रपेयं प्रियां प्रति संदेशं च सहृदयानां पुरतः सरसमनोज्ञरूपेण उपस्थापयति। अत्र प्रियासन्देशः आधिकारिकं वृत्तम्, तस्य वाहकत्वेन मेघस्य सम्भाव्यमानं अत्र तत्रावस्थानं चेष्टितं च प्रासंगिकम्। प्रासंगिकस्य चरितस्य चाधिकारिकोपवृंहकत्वं सम्भवति। अत्र सर्वेऽपि विषया यक्षस्य कल्पनाप्रसूता, तथापि कवेः प्रतिभया औचित्यमाश्रित्य तथा चित्रिताः, तेन ते साक्षात्संघट्यमानाः संघटिता इव वा प्रतीयन्ते। इयमेव हि कविवरस्यानितरसाधारणी सृष्टिः। अतएव च मेघदूतीयं प्रत्येकं पद्यं पदं वा सहृदयहृदयान्यावर्जयति। सुतरां स्वल्पाकारस्यापि खण्डकाव्यस्यास्य काऽपि सुमहती प्रशस्तिर्न केवलं भारते, समग्रेऽपि भूमण्डले चकास्ति।

अत्रत्यो हि नायकः कश्चिद् यक्षः स्वाधिकारात्प्रमत्तः कान्ताविरहगुरुणा वर्षभोग्येण भर्तुः कुबेरस्य शापेनास्तंगमितमहिमा जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषु रामगिर्याश्रमेषु अष्टौ मासान् नीत्वा आश्लिष्टसानुं वप्रक्रीडापरिणतगजप्रेक्षणीयं मेघमाषाढस्य प्रथमदिवसे दृष्ट्वा, प्रथममेघदर्शनोद्विग्नमानसः चेतनाचेतनेषु कृपणचित्तः वर्षर्तौ प्रेयस्या आपतन्तीमनर्थपरम्परां सम्भावयन् स्वकुशलसम्वादप्रेषणेन तस्या जीवितालम्बनार्थं मेघं दूतत्वेन प्रेषयति। इतएव हि रामगिरेर्यक्षमुखेन कवेरसाधारणाः

सरसाः सदुक्तयः प्रसृता इति सहृदया रामगिरौ कामपि गौरवांचितां दृष्टिं निक्षिपन्ति ।

सत्सु उच्चावचेषु प्रदेशेषु यक्षः किमिति रामगिरिमाशिश्रायेति ज्ञातुं किमपि कुतूहलं सहृदयानां हृदयेषु पदमादधाति । परन्तु मेघदूते स्पष्टतया न किमपि तादृशं रामगिरेर्महिमानमुल्लिखितमास्ते । राम्गिरेराश्रमाणां विशेषणतया "स्निग्धच्छायातरुषु" "जनकतनयास्नानपुण्योदकेषु" इति विशेषणद्वयं, "वन्द्यैः पुंसां रघुपतिपदैरंकितं मेखलासु" "स्थानादस्मात्सरसनिचुलात्" "तुंगम्" इति च रामगिरेर्विशेषणानि परिदृश्यन्ते । किमेतानि विशेषणानि रामगिरेर्माहात्म्यं प्रतिपादयितुं समर्थानि भवेयुरिति प्रश्ने समर्थानीति दृढं ब्रवीमि। कालिदासो हि व्यंग्यप्रियः कवि । अपेक्षितमर्थं व्यंग्यविधया सर्वत्र प्रकाशयतीति अभियुक्तानामाम्नायः । तयैव विधया कान्ताविरहितस्य वर्षं यावत् भर्तुः शापमनुबुभूषतो यक्षस्य अवस्थानाय यद्यदपेक्षितं, तत्सर्वमपि रामगिरावस्तीति एभिर्विशेषणैः सूक्ष्मं सूचयति कविः । अस्य गिरेर्मेखलाः पुंसां वन्द्यैः रघुपतिपदैरंकिताः, अत्रत्यानि उदकानि जनकतनयास्नानैः पवित्रीकृतानि, अत्र हि असख्याः स्निग्धाः छायातरवो वर्त्तन्ते । विशेषतोऽस्मिन् गिरौ बह्वः आश्रमा वर्तन्ते । स्वाधिकारात्प्रमत्तः कान्ताविरहगुरुं वर्षभोग्यं दारुणं शापं बुभुक्षुरसौ यक्षः अनुतप्तः पुण्यतीर्थे तमिमं कालं नेतुमियेषेति रामगिरिमाशिश्राय । अपि चात्रेदमपि व्यंग्यविधया ऊहितुं शक्यते—यत्स आत्मानं प्रथमविरहोदग्रशोकेन श्रीरामचन्द्रेण, आत्मनश्च प्रणयिनीं प्रियतमविरहविधुरया जनकतनयया तुल्यं मन्यमान इव लक्ष्यते । अतएव "इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा" इति निर्दिशति । अतएव विरहविधुरितो रामचन्द्रो यत्रावस्थाय विरहं विनोदयामास, तमेव रामगिरिमाशिश्रायेति दृढं प्रतिपादयामः । बहवोऽपि व्याख्यातार एवमेवाभिप्रयन्ति ।

सोऽयं रामगिरिः क इति एतावत्पर्यन्तं नैव निर्णीतमास्ते । तत्रभवान् मेघदूतस्य व्याख्याता मल्लिनाथः चित्रकूटं रामगिरिं मन्यते । प्रथमः मेघदूतस्यांगलभाषायामनुवादकः पाश्चात्यमनीषी विलसनमहाभागः(H. H. Wilson) नागपुरस्यानतिदूरे वर्तमानं बहुभिः श्रीरामचन्द्रमन्दिरैः रामचन्द्रविषयकैरुच्चावचैरनुष्ठानैश्चोपस्कृतं तीर्थस्थानत्वेन लब्धप्रतिष्ठं रामपादयुगलेनांकितमध्यस्थलं 'रामटेक' पर्वतं च रामगिरिमभिप्रैति । बहवश्च गवेषकाः मध्यप्रदेशस्थसरगूजाविषया तर्गतो रामगड एव हि रामगिरिर्भवतीति प्रतिपादयन्ति । विवादविषयीभूताः सर्वेप्येते नैव रामगिरित्वेन स्वीकर्तुं शक्यन्ते । मेघदूते रामगिरिं परिचेतुं यानि निदर्शनानि उपलभ्यन्ते, तानि सर्वाण्येषु प्रत्येकं नोपलभ्यन्ते ।

तत्र प्रथमं मल्लिनाथस्य मतं विषयीकरोमि । एष हि चित्रकूटं रामगिरिं मन्यते । चित्रकूटपर्वतश्च बुन्दलखण्डे विन्ध्यप्रदेशस्योपरितन उत्तरमार्गे वर्तते । मेघदूते हि मेघो रामगिरेः प्रस्थाय मालं क्षेत्रमारुह्य, तत्परं तीर्णः, आम्रकूटे पर्वते अध्वश्रमं विनीय विन्ध्यपादे विशीर्णाया रेवाया जलमादाय दशार्णस्य विदिशां राजधानीं

चानीत्य नीचैर्गिरिं यास्यतीति निर्दिष्टम् । एतान्यतीत्य उपरिभागे वर्तमानः चित्रकूटः कथं नाम रामगिरिर्भवतु न चात्र मालाख्यं क्षेत्रं वर्तते, नापि ततः परं वर्तमान आम्रकूटः । रामचन्द्रो हि चित्रकूटमध्युवास, भरतेन साकं मेलनं च तत्र समभूदिति नास्ति सन्देहः । तेन रामस्य गिरिः रामगिरिरिति रामाध्युषितो गिरिः रामगिरिरिति वाव्युत्पत्त्या रामगिरिशब्दो यौगिकमर्थमादाय चित्रकूटं बोधयतु नाम परन्तु नायं कालिदासस्य रामगिरिर्भवति । कालिदासो हि विचक्षणो भौगोलिकः । स न कदाचिदपि भूगोलशास्त्रविरुद्धं किमपि लिखितुमर्हति । इदानीं चित्रकूटो रामगिरिरिति निरालम्बनः पक्षः विपश्चिद्भिः सर्वथा परित्यक्त एव ।

इदानीं रामटेको रामगिरिरिति विलसनसाहेबस्य मतं परीक्षे । विद्वत्प्रवरा महामहोपाध्याय श्रीवासुदेवविष्णुमिराशीमहाभागा अस्य मतस्य दृढं समर्थयितारः । "तदिदं स्थानं सुबहोः प्राचीनकालात्प्रसिद्धम् । अत्र वाकाटकराजवंशीयस्य द्वितीय-प्रवरसेनस्य समये लिखितमेकं ताम्रशासनमुपलब्धम् अपि चैतद्राज्यान्तर्गतविदर्भदेशीये 'ऋद्धपुर' पुरे उपलब्धे ताम्रशासने "रामगिरिस्वामिनः पादमूलात्" इति उल्लिखित-मास्ते । एतेनैतत् सिद्ध्यति—सोऽयं वर्तमानः रामटेक एव हि मेघदूतस्य रामगिरिर्भवितु-मर्हति । अस्य पर्वतस्य सन्निहिता काचन विशाला उच्चा स्थली संशोधकानां गवेषण-नन्दीनामा वरीवर्ति । अत्रोपलभ्यमानानीष्टकानि आकृत्या गुप्तकालिकानि भवितु-मर्हन्ति, गुप्तसमये च तदिदं स्थानं प्रसिद्धमभविष्यदिति विज्ञानां प्रत्नतत्त्वविदां सिद्धान्तः, एतस्य स्थानस्य निकट एव वाकाटकानां नन्दिवर्द्धनराजधानी अवर्तत । इत उत्तरे वर्तमाने 'सतपुडा, पर्वते मालक्षेत्रं स्थातुमर्हति । कल्याणचालुक्यानामेकस्मिन् शिला-लेखेलिखितं यत् द्वितीयेन राज्ञा मालदेशं विजित्य जब्बलपुरसन्निहितायां त्रिपुर्यां हैहयनृपतयः विजिता" इति[1] ।

उद्धृताभ्य उक्तिभ्यो रामटेकपर्वतस्य प्राचीनत्वं पावनत्वमितिहासप्रसिद्धत्वं च सिद्ध्यति । न तत्र वयं विवदामहे । रामचन्द्रेणात्र कश्चन कालोऽतिवाहित इत्यपि स्वीकुर्मः । इतः एतत्सन्निहितेभ्यः स्थलेभ्यः प्राचीनानि ताम्रशासनानि शिलालेखाश्-चोपलब्धानीत्यस्य इतिहासप्रसिद्धत्वमपि अंगीकुर्मः । परन्तु वयं रामटेकपर्वतो रामगिरि-रिति स्वीकर्तुं न प्रभवामः । अतो हि मेघो मालं क्षेत्रमारुह्य आम्रकूटं यास्यतीति यक्षेण निर्दिष्टम् । अस्य पर्वतस्य सन्निहिता स्थली न रामगिर्याम्रकूटयोर्मध्ये वर्तते । चालुक्यानां शिलालेखे समुल्लिखितो मालाख्यदेशोऽपि रामगिर्यमरकण्टकयोरन्तरा न वर्तते । सातपुडापर्वतान्तर्गतमपि मालं न मेघदूतवर्णितं भवति । नापि अमरकण्टकः आम्रकूटो भवति । अमरकण्टको हि रेवाया उत्पत्तिक्षेत्रम् । रेवा तु विन्ध्यपादे विशीर्णा कविना वर्णिता । मेघदूते मालाख्यं दीर्घमध्वानमतीत्य श्रमक्लान्तो मेघः श्रमापनोदनाय आम्रकूटमाश्रयतेति यक्षेणोपदिष्टः । रामटेकामरकण्टकयोः मध्ये न तादृशं व्यवधानं

---

१. इमा उक्तयः महामाहोपाध्याय वासुदेवविष्णुमिराशीमहाभागैः लिखितात् कालिदासाख्याद् ग्रन्थात् उद्धृताः ।

वर्तते। नापि अमरकण्टकाशब्द आम्रकूटस्य परिणतिरिति स्वीकर्तुं शक्यते, आम्रशब्दस्य अमरात्मना परिणामः सम्भवतु नाम, कूटस्य कण्टकात्मना परिणामस्तु भाषातत्त्व-दृष्ट्या नैव क्षोदक्षमो भवति। अमरकण्टकतश्च रेवाया उत्पत्तेस्तत्रैव रेवाया दर्शनं सम्भवति, तदतीत्य गतवतो मेघस्य विन्ध्यपादे विशीर्णाया रेवाया दर्शनं कविनोपवर्णितं नोपपद्येत। अमरकण्टको यद्याम्रकूटोऽभविष्यत्तदा मेघस्य तत्र आरभ्य विन्ध्यपर्वत-पर्यन्तं प्रयाणं रेवाया अनुतटं संपद्येत। कविना तथैव वर्णितमभविष्यत्, न च तथा वर्णितम्। अतः अमरकण्टको नैव आम्रकूटो भवितुमर्हति। अपि च अमरकण्टकस्याम्र-कूटत्वे ततो विन्ध्यपादे विशीर्णाया रेवायाः पर्यन्तं मेघस्य गमनं कथं सम्भवतु? तस्मान्ना मरकण्टक आम्रकूटो भवति। सुतरां मेघदूते स्पष्टतयोल्लिखितस्य मालाख्यक्षेत्रस्य आम्रकूटस्य च रामगिरेरुत्तरवर्त्मनि अनवस्थानान् न रामटेकपर्वतो रामगिरिर्भवति। अपिच महामहोपाध्यायैः गुप्तवंशीयो द्वितीयचन्द्रगुप्तो विक्रमादित्यत्वेन परिगृहीतः। तस्य च सभायां कालिदासोऽवर्ततेति प्रतिपादितम्। तदनुगुणतया द्वितीयप्रवरसेनस्य माता चन्द्रगुप्तस्य पुत्रिका प्रभावती गुप्ता रामचन्द्रस्य पादुके पूजयितुं रामटेकं याति स्मेति रामटेको रामगिरिरित्यपि स्वीकर्तुं नैव शक्यते। प्रथमतश्चन्द्रगुप्त एव कालिदासेनाश्रितो विक्रमादित्यो न भवतीति निराधारं तेषां वचनम्। ऋद्धिपुरं तु विदर्भदेशान्तर्गतं रामटेकपर्वतात् विप्रकृष्टम्। तत्रोपलब्धे ताम्रशासने "रामगिरि-स्वामिनः पादमूलात् इत्युल्लिखितमिति रामटेको न रामगिरिभवितुमर्हति। मेघदूते वर्णितानां निदर्शनानामभावात् ताम्रशासनशिलालेखादीनां रामटेकपर्वतस्योपादेयताप्रति-पादने परमुपयोगेऽपि मेघदूतीयरामगिरित्वनिर्णय साधनत्वानुपपत्तेः न रामटेको रामगिरिः।

इदानीं सुरगुजान्तः पाती मध्यदेशीयो रामगडो, रामगिरिर्भवेदिति मतं परि-शीलनीयं भवति। अत्र हि पर्वते श्रीरामचन्द्रनामांकितं पादयुगलमद्यावधि संपूजितं भवति। अत्र च 'सीतवेंगा 'योगिमारा' इति गुहाद्वयं वर्तते। तत्र च ख्रीस्तीयतृतीय-शताब्धीतः पूर्वं विलिखित कश्चन शिलालेखो वर्तते। तेनास्यातिप्राचीनत्वमितिहास-प्रसिद्धत्वं चायाति। रामगडोऽपि पवित्रतीर्थत्वेन स्वीकृतः। इदानीमपि दुर्गस्य भग्नाव-शेषास्तस्य पर्वतस्य प्राचीनगौरवं प्रकटितं कुर्वन्ति। अस्य रामगडस्य उपरि अतीवोच्चा काचन पर्वतश्रेणीवर्तते। बहुशः सैव मालत्वेन कविवरेण वर्णिता। इतः परं च विन्ध्य-पादे विशीर्णा रेवा वर्तते। ततः परं च नीचैराख्यो गिरिः। उज्जयिनी च इतः पश्चिमभागे वर्तत इति उत्तराभिमुखं प्रस्थातुकामस्य मेघस्य वक्रेमार्गे तिष्ठति। तस्माद् रामगड एव रामगिरिरिति बहवो गवेषकाः स्थिरीकुर्वन्ति। परं तु इदमपि मतं नैव युक्तिसहं भवति। अमरकण्टकं नैव आम्रकूटं भवतीति प्रागेवोदितम्। अमर-कण्टकस्यआम्रकूटत्वेन स्वीकारेऽपि रामगाडः अमरकण्टकपर्वतस्य ऐशान्यकोणे तिष्टति अथ वा अमरकण्टको रामगडस्य दक्षिणे भागे वर्तते। मेघो हि रामगिरेः प्रस्थाय उत्तरा-भिमुखं आम्रकूटं यास्यतीति रामगडो न रामगिरिर्भवति। अपिचामरकण्टको रामगिरेः संन्निहितः। एतावन्तरा च मालाख्यं क्षेत्रमपेक्ष्यते। मेघो हि तुंगमालमारुह्य अध्वक्लान्तः

आम्रकूटमाश्रयेन । न मात्रं वर्तते, नापि रामगिर्यमरकण्टकयोर्मध्ये सुमहानध्वोपलभ्यते। अपि चापरमपि सुमहत् प्रतिबन्धकं वर्तते । अमरकण्टको हि रेवाया उत्पत्तिक्षेत्रम्। तत एव रेवा प्रवर्तते । आम्रकूटादनन्तरं विन्ध्यपादे विशीर्णाया रेवाया वर्णनं दृश्यते।[1] अतो रामगडो न कदाचिदपि रामगिरिर्भवितुमर्हति । अवसरे चास्मिन् इदमपि सहृदयानां पुरत उपस्थापयामि । चित्रकूटे रामटेके रामगडे च रामचन्द्रस्यावस्थानविषये नाहं विसंवदामि, नापि तेषां गौरवविषये सन्दिहानो भवामि, न च तानि तीर्थस्थलानि न भवन्तीति वक्तुं प्रभवामि, परन्तु तेष्वेकमपि रामगिरित्वेन स्वीकर्तुं न प्रभवामि। प्रत्येकमेतेषु मेघदूते वर्णितानि निदर्शनानि नोपलभ्यन्ते । रामचन्द्रेण सीताविरहितेन यः पर्वतो विरहविनोदनाय यक्षेण स्वीकृतः एतेषु कोऽपि न तादृश इति दृढं प्रतिपादयामि । चित्रकूटे रामकूटे रामगडे च सह सीतालक्ष्मणाभ्यां रामचन्द्रेणवासः कृतइति नैतानि यक्षस्याश्रय रामगिरित्वेन स्वीकर्तुं शक्यन्ते ।

तर्हिकोऽसौ रामगिरि र्यः किल विरहविधुरस्य मेघदूतयक्षस्य आवासोवर्ततेति प्रकृतरामगिरिर न्वेषणीयो भवति । सएष रामगिरिरिदानीमपि रामगिरिनाम्ना प्रसिद्ध एवास्ते, पर तु न सहृदयानां दृष्टिपथमारूढ इति निवेदयामि ।

उत्कलप्रदेशस्य करापुटमण्डलान्तःपातिनी जयपुरनगरस्य अनतिदूरे बैपारिगुडा पोलिसष्टेसनस्य सविधे रामगिरिनामकः कश्चन ग्रामो वर्तते । ग्रामस्यास्यानतिदूरे गगनचुम्बिनी गंजाममण्डलान्तर्गतमुदयगिरिं यावत् विस्तृता पर्वतश्रेणी वर्तते । एषा च पर्वतश्रेणी रामगिरिनाम्ना प्रसिद्धा । स एष रामगिरिरेव कालिदासेन रचिते मेघदूते प्रियाविरहितस्य यक्षस्य वसती रामगिरिः पूर्वं रामस्य गिरिरिति रामाध्युषितो गिरिरिति वा यौगिकमर्थमादाय समर्थनीयो वर्तते । अत्र रामगिरौ तु सुबहुकालं यावत् रामेण सीतालक्ष्मणाभ्यां सहोषितमिति बहूनि निदर्शनानि सन्ति । अस्य शृंगाणि सुमहन्ति, समुद्रपत्तनादारभ्य च द्विसहस्रहस्तोन्नतानि (3000 feet from Sea level) इदानीमपि जलदा वर्षर्तौ एषां शृंगाणां मेखलासु संचरन्तः सन्दृश्यन्ते। अस्मिन् पर्वते बहवः गुम्फानामिका गुहा वर्तन्ते । सर्वा अप्येता रामचन्द्रेण स्वावस्थानेन पवित्रीकृता इति काचन प्रसिद्धिर्वर्तते । तेनायं गिरिः रामाध्युषितत्वात् रामगिरिरिति नाम सार्थकं करोति, स्वयं च रामगिरित्वेन प्रसिद्धः । अतो रामगिरिशब्दो गिरिमेनं बोधयन्योगरूढो भवति । "योगाद्रूढिर्बलीयसी" "रूढिर्योगापहारिणी" इति च शब्दविदामाम्नायः । तेन रामगिरिशब्दो योगरूढस्तमिमं रामगिरिं बोधयतीति प्रतिपादितं भवति ।

---

१. स्थित्वा तस्मिन् वनचरवधूभुक्तकुंजे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमंगे गजस्य ।। —इति द्रष्टव्यम ।।

अस्मिन् गिरौ बह्व आश्रमा आसन्निति प्रमाणयितुं बहूनि निदर्शनानि सन्ति । गिरेरस्य बह्वो भूभागाः सीतारामलक्ष्मणैरध्युषिता इति भक्तिपुरःसरं संदृश्यते । अस्मिन् गिरौ वर्तमानाश्च बह्वो गुहाः प्रत्येकमेक एक आश्रमोऽवर्ततेति सन्देहो नास्ति । अतएव कवि 'र्यक्षोरामगिरौ वसतिं चक्रे इत्यनुकत्वा रामगिर्याश्रमेषु वसतिं चक्र इति निरदिशत् । अस्यैव गिरे रेकस्मिन् भागे "सीताकुण्ड" मिति किमपि कुण्डं वर्तते । अत्रावस्थानसमये सीता अस्मिन् कुण्डे स्नाति स्मेति काचन प्रसिद्धिर्वर्तते, तेन चेदं कुण्डमतीवपवित्रमाख्यायते । अत्र प्रतिवर्षं मकरसंक्रान्तौ काचन मेला (सम्मेलनं) प्रवर्तते । लक्षाधिका जना अत्र तस्मिन् सम्मेलने समवेता भवन्ति । वन्ध्या स्त्रियोऽत्र स्नानेन पुत्रान् लभन्ते, स्त्रीरोगग्रस्ताश्च महिला अत्र स्नानेन स्त्रीरोगमुक्ता भवन्ति । इयं च मेला सम्भवतः कालिदासस्य समयेऽपि प्रावर्तत । अतएवासौ रामगिरेराश्रमाणां विशेषणत्वेन, "जनकतनयास्नानपुण्योदकेषु" इति प्रयुङ्क्ते । अस्यैव गिरेराश्रमाः स्निग्धच्छायातरव इत्यपि प्रतिपादयामि । मल्लिनाथस्तावत् छायाद्रुमपदेन नमेरुवृक्षानभिप्रैति, छायाद्रुमो नमेरुः स्यादिति शब्दार्णवमुद्धरति, हिमवत्प्रदेशेषूपलभ्यमानानां नमेरुणां रामगिरौ कथं सम्भवः स्यादिति मनागपि नालोचयति । कविरयं रघुवंशे "छाया द्रुममिवाध्वमा" इति छायाप्रधानवृक्षरूपार्थे प्रायुंक्त । अत्रापि तस्मिन्नर्थे स शब्दः प्रयुक्तः । छायाप्रधानाश्च वृक्षा अत्र सन्ति । तेन रामगिरिः प्रागिव इदानीमपि स्निग्धच्छायातरुर्भवति ।

अयं च गिरिः पुंसां वन्द्यैः रघुपतिपदै मेखलासु अंकितो भवति अस्मिन् गिरौ बह्वो गुम्फापरपर्यायाः गुहाः सन्ति । तास्वेकतमा गुप्तेश्वरगुम्फा अत्यन्तं प्रसिद्धा । अस्या गुहाया अन्तः गुप्तेश्वरनामकं किमपि लिंगं वर्तते । तदिदं लिंगं स्वयं रामचन्द्रेण संस्थापितमिति काऽपि प्रशस्तिरस्य लिंगस्य । प्रतिवर्षं शिवरात्रिदिवसे सहस्रशो जना तदिदं लिंगं द्रष्टुं समवेता भवन्ति । गुहाया अन्तः प्राचीने शिलातले अंकितं श्रीरामचन्द्रस्य पादपद्मयुगलं प्रत्यहं भक्तैरभ्यर्च्यते । तदिदं कालिदासस्य समयेऽप्यवर्तत, इदमेव चाभिलक्ष्य कालिदासेन "वन्द्यैः पुंसां रघुपतिपदैरंकितं मेखलासु" इति लिखितमिति वक्तुं शक्यते ।

मेघदूते च "स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खमिति रामगिरेर्विशेषणत्वेन स्सरसनिचुलात्" इत्येकं विशेषणं दत्तम् । मल्लिनाथ व्याख्याता निचुलपदेन स्थलवेतसमभिप्रैतिनिचुलः स्थलवेतस इति च कोषमुद्धरति । परन्तु निपुणमालोचने निचुलपदस्य स्थलवेतसरूपार्थः कवेर्नाभिप्रेत । एष हि कविः स्वीये विक्रमोर्वशीये निचुलतरुणां मन्जरीरवर्णयत् । न च स्थलवेतसानां मञ्जर्यः सम्भवन्ति । अतो निचुलपदेन "निचुलोऽम्बुज इज्जलः "इत्यमरोक्तदिशा इज्जलापरपर्याय उत्कलभाषायां हिजल इति प्रसिद्धः वृक्षविशेषः अभिप्रेतः । एतस्य काष्ठं सदा आर्द्रं तिष्ठति न कदापि शुष्यति । अतएव कविना निचुलस्य विशेषणतया सरसमिति दत्तम् । ते च निचुलवृक्षा इदानीमपि असंख्या अस्मिन् रामगिरौ सन्ति । अयं च नीरन्ध्रसान्द्रवृक्षावलिभ्राजितो गजानामावासभमिर्भवति । अकुतोभयं संचरन्तो स्थूलस्थूला गजा एव दिङ्नागत्वेन

कविना परिगृहीतः। अतएव भणितं दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् इति ।

इदानीमपि अस्यगिरेर्मध्यभागे मेखलासु असंख्यानि वल्मीकानि परिदृश्यन्ते। वर्षर्तौ प्रायशः प्रतिदिनं सूर्योदयसूर्यास्तगमनयोः इन्द्रधनूंषि प्रादुर्भवन्ति । कालिदासस्य समयेऽपि तथैव प्रादुर्भवन्तिस्म । अतएव कविः "रत्नच्छायाव्यतिकरइव प्रेक्ष्यमेतत् पुरस्ताद् वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्येति इन्द्रधनूंषि प्रत्यक्षतो दृश्यमानानीव वर्णयामास ।

अस्मात् रामगिरेरारभ्य अमरकेट (Amarakota) पर्यन्तं कश्चन सार्द्ध-सहस्रहस्तोन्नतः (2000 feet from Sea level) भूभागो वर्तते। जयपुरमाल इति प्रसिद्धाः अस्मिन् इदानीमपि बहुश आदिवासिनो वसन्ति । एते हि ग्रीष्मर्तौ वनं दहन्ति, मेघागमे च क्षेत्रं कृष्ट्वा धान्यं वपन्ति । एतेषामियं कृषिः "पोड़चाष" इति व्यपदिश्यते । अत्र जलसेचनप्रणाली न काऽपि वर्तते । एतेषां कृषिफलं सर्वथा वर्षायत्तम् । "त्वय्यायत्तं कृषिफलमित्यादि कविना यत् वर्णितं, तत्सर्वं-मपि एतम् मालं एतदधिवसन अदिवासिनः तेषां पोडुचाषापरपर्यायां च कृषिं विषयीकरोति । अतो जयपुरमाल एव कवेरभिमतो मालइति दृढं वक्तुं शक्यते । अमर-[illegible] वर्तमानः अमरकोटनाम्ना प्रसिद्धः समुद्रपत्तनात् द्विसहस्रहस्तोन्नतः (2000 feet from Sealevel) पर्वत एव कवेरभिप्रेत आम्रकूटः सानुमान्। अत्रैको वर्तुलाकारः पवर्तः इदानीमपि भुवः स्तन इव भाति ।

इदानीमपि एतस्योपान्तेषु आम्रवृक्षा असंख्या आषाढ़ मासि परिणतानि फलानि धारयन्तो गिरेरस्य आम्रकूटेति नाम सार्थयन्ति। भाषातत्वदृष्ट्या आम्रकूटशब्दस्य अमरकोटात्मना विपरिणामो भाषातत्वविदामनुकूलः। पर्वतस्यास्य संदर्शनेन "मध्येश्यामः स्तन इव भुव शेषविस्तारपाण्डु." इति भुव एकस्तनत्वेनोपमानं कियतस्स्वरसमिति ज्ञातुं शक्यते। इतः परं च विन्ध्यापादे विशीर्णा रेवा, तस्याः परं च दशार्णनिं राजधानी विदिशेति मेघस्य क्रमिको मार्ग उपपद्यते, उज्जयिनी च वायव्यकोणे वर्तमाना वक्रं पन्थानमासाद्य नासादयितुं शक्यत इति "वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशाम्" इति कवेरुक्तिरपि संगच्छते ।

रामगिरिमारभ्य आम्रकूटपर्यन्तेऽरण्यमार्गे तत्र तत्र शिलोच्छ्रयाणि स्फुटन्ति। कन्द-ल्यः बहुधा उपलभ्यन्ते। कुटजवृक्षा असंख्याः सन्ति । तत्र एव "स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै 'कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्याम्" इत्यदीनि कवेः वर्णनानि संगच्छन्ते ।

एतस्य रामगिरेरेकतो मालकान्गिरिर्वर्तते यो हि माल्यवान् गिरिरिति रामायणे वर्णितः अपरतश्च ऋषिमालपर्वतो वर्तते यः किल ऋष्यमूकपर्वतादनन्यः। अस्य च पर्वतस्य एकभागे किमपि देदीप्यमानं शिलातलं चकास्ति, यत्राग्निं संदीप्य सुग्रीव रामचन्द्राभ्यां सख्यं संस्थापितम्। ऋष्यमूकपर्वतात् निस्तरन्त्या ऋषिकल्यायाः दक्षिणे तीरे

श्रीरामचन्द्रेण संस्थापितानि बहूनि लिंगानि, अध्युषितानि च बहूनि उटजानि अद्यापि पथिकै रभ्यर्च्यन्ते अस्यैव च रामगिरेः सन्निहिता पंचवटी यत्र किल रामचन्द्रेण द्वादश वत्सरान् यावदावासः सीतालक्ष्मणाभ्यां सह संसाधितः ।

रामगिरिं परिचेतुं मेघदूते यानि निदर्शनानि सन्ति, सर्वाणि अत्र रामगिरौ उपलभ्यन्ते इति सोऽयं रामगिरिरेव मेघदूतीययक्षस्यावासभूतो रामगिरि रित्यत्र सन्देहो नास्ति ।

एवं रामगिरिनाम्ना प्रसिद्धे रामगिरौ विद्यमानेऽपि मल्लिनाथप्रभृतयः किमिति चित्रकूटादिपर्यन्तमन्वधावन्निति प्रश्नस्योत्तरं दातव्यमापद्यते । रामगिर्युदयगिरिमाल्य-गिरिऋषिमालप्रभृतयः पार्वत्या भूभागाः ख्रिस्तीयसप्तदशशताब्द्या अन्तिमभागपर्यन्तं निबिडारण्यानी परिवृता लोकलोचनानामगोचरा अवर्तन्तेति विदुषामत्र दृष्टिपातो नाभवदिति ब्रवीमि ।

प्रत्यक्षसिद्धे चार्थे न कश्चिद् विसंवादः । एवं च रामगिरेः प्रत्यक्षस्यो-पलम्भाद् विसंवादस्यानुपपत्तेः इतः परं रामगिरिचर्चाया न काऽपि आवश्यकता अस्ति इति निवेदयामि ।

# चित्रकाव्यं काव्यचित्रं वा

डॉ० रेवाप्रसादद्विवेदी

ध्वन्यालोक-कारः—

१. यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ।।[१] इति,

२. प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ।।[२] इति च

काव्यद्वयं प्रतिष्ठाप्य,

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे, ततोऽन्यद् यत्तच्चित्रमभिधीयते ।।

चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमथापरम् ।।[३] इति

चित्रनाम्नापि यत् किञ्चिदुपस्थापयति तत् परवर्त्तिभिरालङ्कारिकैः काव्यतया स्वीकृतम् । यथैतत् तत् काव्यप्रकाशादिभि. स्पष्टमेव । अत्र ध्वन्यालोकस्यैव—

'व्यङ्ग्यार्थविशेष-प्रकाशन-शक्तिशून्यं काव्यं केवल-वाच्य-वाचक वैचित्र्यमात्राश्रयेण उपनिबद्धम् आलेख्यप्रख्यम् आभासते तत् चित्रम् । न तन्मुख्यं काव्यम् । काव्यानुकारो ह्यसौ ।।[४]'

---

१. ध्वन्यालोकस्य १।१३ कारिका

२. ,, ,, ३।३४ कारिका

३. ,, ,, ३।४१-४२ कारिके

४. ध्वन्यालोक ३।४१-वृत्तिः ।

इत्येतेन वृत्तिवचनेनेदमपि स्पष्टं प्रतीयते 'ध्वन्यालोककारश्चित्रशब्देन केवलालङ्कारचारुत्ववतां सन्दर्भाणां प्राचीनाचार्यस्वीकृतं काव्यत्वं निराकरोतीति। तदत्र किमस्माभि प्रत्येतव्यम्। 'ध्वन्यालोककारश्चित्रकाव्यतया प्रसिद्धे काव्यभेदे काव्यत्वं मनुते इति वा प्रत्येतव्यम्, न मनुत इति वा'। प्रथमे '**काव्यानुकारो ह्यसौ**' इति '**न तन्मुख्यं काव्यमि**'-ति च वृत्तिवचने विरुध्येते, द्वितीये च पूर्वोक्ते चित्रप्रतिपादिके कारिके। कारिकयोस्तयोः **अभिधीयते**' इति '**द्विविधं च व्यवस्थित**' मिति, **शब्दचित्रमि-ति**, '**वाच्यचित्रमि**'-ति च यानि पदानि, तेभ्यः 'चित्र'-शब्दस्य ध्वनिशब्दस्येव संज्ञाशब्दत्वम्, भेदगतं द्वित्वं, भेदद्वयस्य च नामनी स्पष्टानि। सत्स्वेतेषु भावेषु कथं वात्र चित्रस्याकाव्यत्वं ध्वन्यालोकसंमततया नीयेत।

अत्रास्माकमाभाति—ध्वनिकारो ध्वन्यालोके एकस्य ध्वनेरेव काव्यत्वं मनुते, नान्यस्य तद्भिन्नस्य कस्यचिदपि वचोविन्यासस्य। अत एवासौ 'ध्वनि'-रिति संज्ञा स्वीकृत्य द्वितीयस्य कृते 'गुणीभूतव्यङ्ग्यमि'-ति शब्दमादत्ते। 'गुणीभूतव्यङ्ग्यमि'-ति संज्ञापदमभूत्वा विवरणपदं भवति। अन्यथा प्रथमस्यापि 'प्रधानीभूतव्यङ्ग्यमि'-ति प्रधानव्यङ्ग्यमि'-ति, 'व्यङ्ग्यप्रधानमि'-ति वा संज्ञा त्रियेत। न च तथा दृश्यते। यद्युच्यते व्यञ्जनायाः शब्दवृत्तितास्वीकाराय, वैयाकरणस्य स्फोटवादस्य स्मरणाय च 'ध्वनिरि'-ति पदं स्वीकृतम्, भवति च संज्ञाविधाने वक्तुः स्वातन्त्र्यमिति नास्त्युपरोधावसर इति, तद् उच्यतां गुणीभूतव्यङ्ग्यशब्दे किं नु सार्थकत्वं च्विप्रत्ययस्य। ध्वनेः सर्वथैव प्रधानत्वादेव, अप्रधानस्य च गुणभूतत्वादेव कदाप्यननुभूताप्रधानभावस्य ध्वनेरपकर्ष कल्पमादायाभूततद्भावस्योत्प्रेक्षितुमशक्यत्वात्। इदमप्युच्यतां 'कथं नु ध्वनिकृदेव गुणीभूतव्यङ्ग्यं ध्वनिनिष्यन्दं ब्रूते—'अयं ध्वनिनिष्यन्दरूपो महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः[1]' इति। कथमसौ गुणीभूतेऽपि व्यङ्ग्ये रसादितात्पर्यपर्यालोचनया ध्वनिरूपतां दिदृक्षति—

'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्य पर्यालोचनया पुनः॥[2] इति।

इदमत्रान्यदप्येकं कष्टं यदसौ सर्वानप्यलङ्कारान् गुणीभूतव्यङ्ग्यरूपानेव पश्यति। उच्यते तेन—

१. सर्वेषामेवालङ्काराणां सामान्यं गुणीभूतव्यङ्ग्यत्वम्।
तल्लक्षणे सर्व एवैते सुलक्षिता भवन्ती'-[3]ति॥

---

१. ध्वन्यालोकस्य १९९७ वि० सं० प्रकाशिते चौखम्बासंस्करणे ४७४ पृष्ठे।

२. ध्व० ३।४० कारिका

३. ध्वन्यालोकस्योपर्युक्त एव संस्करणे ४७२ पृष्ठे

२. मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ।।[१] इति च ।

यदा सर्वेऽप्यलङ्कारा गुणीभूतव्यङ्ग्येऽन्तर्भाव्यन्ते तदा किमवशिष्यते यदर्थमसौ चित्रभेदः प्रयुज्येत । इदमन्यदत्रालोचनीयं यदानन्दवर्धनः काव्यभेदेषु प्रसिद्धा उत्तम-मध्यमाधमत्वकोटीर्न स्मरति । गुणीभूतव्यङ्ग्यस्य चित्रस्य च काव्यतया स्वीकारे कोटीनामासां भवेदेवोदयः । सोऽयमुपस्थित उपप्लवः ।

एतेन स्थितमेतद् यत् काव्यस्यैकविध्यमेव ध्वनिकृतोऽभिमतम् । ततश्च यत्र व्यङ्ग्योऽर्थः प्रधानभूतस्तदेव वाक्यं काव्यम्, यत्र क्वचन व्यङ्ग्यस्यास्य गुणभावोऽपि दृश्यते तत्राकाव्यत्वं वक्तुं न शक्यते, ततस्तस्यापि वाक्यजालस्य भवत्येव काव्यतया संग्राह्यत्वम् । अलङ्कारमात्रमादाय सिषाधयिषितं काव्यत्वं तु परिहार्यम् । प्राचीनाना-मलङ्कारमात्रैकपरायणानामुद्भटादीनां च काव्यतयाभिमतानि वाक्यानि गुणीभूतव्यङ्-ग्यतयैव गणनार्थानीति तदर्थं चिन्ता न करणीया । एवं गतेऽकाव्यतया, काव्यानुकारतया, काव्यालेख्यतया चित्रतया वा यदभिमतं वाक्यजातं तत् किमिति प्रश्ने ।

रसभावादितात्पर्यविवक्षाविरहे सति ।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः ।।[२]

इत्युत्तरं प्रतिपद्यस्वे'-ति ध्वन्यालोककृदाशयः ।

यच्चात्र पूर्वोक्तं चित्रसम्बन्धि कारिकाद्वयं, यानि च तत्र 'अभिधीयते-' प्रभृतीनि पूर्वोद्धृतानि पदानि तानि पूर्वाचार्यव्यवस्थास्मरणमात्रपरतया मन्तव्यानीति नास्ति विवादः ।

रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्व साधनम् ।।[३]

इति रसभावाकाशतारामण्डलायिता अलङ्काराः तादृशाद् आकाशाद् विच्याव्य मा स्म विच्याव्या अलङ्कारत्वादेव ।

एवं गतेऽलङ्कारस्य स्वतन्त्रविषयत्वाभावात् तन्मात्रधनेषु वाक्येषु काव्यत्वगवेषण-माश्रयासिद्ध्युपहतम् । ततश्च ध्वनिकारदिशा रसभावादिविवक्षारहितमलङ्कारमात्र मण्डितं च वाक्यं काव्यचित्रपदेनैव वक्तुं शक्यम् । न तु चित्रकाव्यपदेन चित्रत्वमुद्दिश्य काव्यत्वविधानपरेण ।

---

१. ध्व० ३।३७ कारिका

२. ध्वन्यालोकस्य तत्रैव संस्करणे ४९७ पृष्ठे ।

३. ,, ,, ,, २९७ पृष्ठे

# पुरातनेऽनेहसि भारते अर्थशास्त्र-परम्परा

डा० रमेशचन्द्र शुक्लः

यस्य साहित्यस्य प्रादुर्भूतस्य बहुसहस्राणि वर्षाण्यतीतानि मानवस्य तत्रैषणात्रयस्योल्लेखः प्राप्यते। तास्वैका सास्ति - या वित्तविषयिणी। संस्कृतिश्च भारतीया हिरण्यगर्भवादिनी। हिरण्यशब्दस्यास्त्यर्थः सुवर्णम्। तत्सञ्चयनसाधनानि कृषिः, वणिक्पथो व्यवहार श्चेत्येतानि मतान्यभूवन्। वणिजां श्रेण्या महत्तायाः संवृद्धिः अत एव पर्यलक्ष्यत पुरातनेऽप्यनेहसि। सार्थवाहसाहित्यमिह दीप्यमानं प्रमाणम्। यदाहि प्राचीनसमयोपरि दृष्टि : क्षिप्यते द्वीपान्तराणि प्रति धनोपार्जनप्रयोजनेन सार्थवाहानां यात्रायाश्चित्रं चेतःपटलेवतरति। देशान्तर-प्रेषित पण्येषु मुद्रासुचप्रतिकृतयो मोहन-जोदडो-लोथल-अस्सीरियाभ्यः सम्प्राप्ता देशस्यास्य वाणिज्यस्य परां कोटिमाटीकमानमुत्थानं बोधयन्ति। आर्थिक विकासेन सार्धं संस्कृतेर्विकासः समजायत। अर्थस्योपादेयत्वं तदीयं गौरवं तदीयञ्च महनीयत्वं वस्तुतोऽन्यदीयेभ्यः सर्वेभ्यः प्रकर्षेभ्यः प्रकृष्टतरम्।

अर्थशास्त्रस्य परिभाषाम् आचार्यः कौटिल्यः स्वकीये अर्थशास्त्रे निदधातीत्थम्—

मनुष्याणां वृत्तिरर्थः, मनुष्यवती भूमिरित्यर्थः, तस्याः पृथिव्या लाभपालनोपायः शास्त्रमर्थशास्त्रमिति[1] वार्तांच स एवं परिबभाषे—

"कृषिपाशुपाल्ये वाणिज्या च वार्ता"[2] धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी। दण्ड नीतेश्चार्थशास्त्रस्यप्रमुखाङ्गत्वं पुरा मतमभूत्। तस्मादर्थशास्त्रे कौटिल्यस्तां विविनक्ति—

"आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः। अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु च प्रतिपादनी च[3]।

---

१. वाचस्पति गैरोला सम्पादितम् अर्थशास्त्रं कौटिल्यस्य पृ० ६३७।

२. तदेव पृ० १५।

३. तदेव पृ० १५।

धर्मशास्त्रं पुरुषार्थेषु चतुर्षु धर्ममधिकृत्य विचारान् प्रस्तौति । अतः धर्मशास्त्र-राजशास्त्र-नीतिशास्त्र-दण्डनीत्यर्थशास्त्रसम्बन्धिसाहित्यमन्योन्याश्रितम् ।

अर्थशास्त्रपरकं साहित्यमपि यद्यप्याक्रामकाणां बर्बरतया व्यनश्यत् परं श्रुतिषु तन्मूलमधिगम्यते । ततस्तस्य महत्वं सिद्ध्यति ।

अथर्ववेद आह—'आयु. प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसम्'[१] तत्र चैषा प्रार्थनास्ति कृता—

निधिं बिभ्रतो बहुधा गुहा वसु मणिं हिरण्यं पृथिवीं ददातु मे ।
वसूनि नो वसुदा राधमाना देवी दधातु सुमनस्यमानाम् ।।[२]

विष्णु पुराण—वायु-पुराण-ब्रह्माण्ड पुराणानि अर्थशास्त्रम् अथर्ववेदस्योपवेद इति प्राहुः । प्रो० सन्तोष कुमार दासः स्वकीये इकोनामिक हिस्ट्री आफ एन्शेण्ट इण्डियाभिधानग्रन्थेऽथर्ववेद-ऋग्वेद-ब्राह्मणेभ्योऽर्थशास्त्रविषयिणी सामग्री निदधात् । पण्डित धनराजशास्त्री चास्यैक विषयस्य चतुर्णां ग्रन्थानां नामान्युल्लिखति । नीतिप्रभां दण्डनीतिं च कृतिं निर्दिशतामुना तत्रत्या ये विषया वर्णितास्तेऽपि एतस्यैवार्थशास्त्रस्य विद्यन्ते । धर्मसूत्रैर्मुख्यत्वेन प्रतिपादिते सत्यपि धर्मे तैः प्रकारान्तरेण अर्थशास्त्रस्यैव सिद्धान्ता निर्दिश्यन्ते । शिक्षा-भूमि-स्वर्ण-पश्वन्नोपस्कर-मित्राणां प्राप्तिः सवर्धनञ्च येन भवतः स अर्थ इत्युच्यते इति प्रब्रवीति काम सूत्रकारो वात्स्यायनः ।

श्रीमद् वाल्मीकि रामायणस्य श्लोकादस्मात् सुधन्वनोऽर्थशास्त्रे निष्णातत्वं ज्ञातं भवति—

इष्वस्त्रवरसम्पन्नमर्थ शास्त्रविशारदम् ।
सुधन्वानमुपाध्यायं कच्चित् त्वं तात मन्यसे[३]

महाभारते शान्ति पर्वणि—

विक्रयं क्रयमध्वानं भक्तं च सपरिच्छदम् ।
योगक्षेमम् च सम्प्रेक्ष्य वणिजां कारयेत्करान्[४]

इत्येतदादिकाः प्राप्यमाणाः श्लोकाः अर्थशास्त्रस्य विषयं समुपस्थापयन्तः प्रेक्ष्यन्ते ।

---

१. अथर्ववेदः १९।७१।१ ।

२. स एव १२।१।४४ ।

३. वाल्मीकी रामायणम् २।१००।१४ ।

४. महाभा०, शान्तिपर्व, अ० ८७, श्लो० १३ ।

धनेन जयते लोकावुभौ परमिमं तथा ।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा[1]

इत्यादावर्थस्य का हि महत्तेति स्पष्टमेवाचष्टे महाभारतकारो व्यासः ।

नीति प्रकाशिका-शुक्रनीतिसारश्च पर्याप्तमेव प्रकाशमिह क्षिपतः । प्रो० के० वी० रङ्ग स्वामी आयङ्गार. नैजे औंस्पेक्ट्स आफ ऐंशेण्ठ इण्डियन इकोनोमिक थाट गन्थे तेषां पुराणस्थ स्थलानां सूचीं प्रस्तौति यानि राष्ट्रियार्थव्यवस्थामुल्लिखन्ति ।

तदेवमर्थशास्त्र सम्बन्धि-विवेचनमस्मदीये वाङ्मये परिवीक्षितं जायते । श्रीमन्तः र० श्याम शास्त्रिणः कौटिल्यस्य अर्थशास्त्रं विद्वद् वराणां पुरः प्रतिष्ठाप्य विश्वसाहित्ये तत्रापि भारतीये साहित्ये नवीनमेवालोकं सर्वतो व्यकिरन् । एष कोटिल्यप्रणीतोऽर्थशास्त्रपरक ग्रन्थः पञ्चशताधिक सहस्रद्वय वर्षेभ्यः प्राग्वर्तिनीमर्थशास्त्रविषयिणीं सामग्रीं निदधाति ।

भारतीयेऽर्थशास्त्रे राजमानेभ्य-उल्लेखेभ्यो विदितं भवति यदेष भारतदेशोऽस्मिन् विषये चिरात् स्वकीयां प्रगाढामभिरुचिं निदधौ । अत्रत्यमर्थशास्त्रं पञ्च सम्प्रदायान् वर्णयति । सन्ति च ते मानव बार्हस्पत्यौशनसपाराशराम्भीयाख्याः । तत्र सप्त आचार्याश्च समस्मियन्त ।

बौद्धजातकेषु प्राप्यन्तेऽर्थपरक विचाराः । तेऽपिग्रन्थाः सर्वेऽर्थशास्त्रमप्रत्यक्षभावेन निदधति ।

सम्राजोऽशोकस्य शिलालेखेषु प्राचीनमुद्रासु प्रशस्तिषु यावन—(ग्रीक) चीन (दरद) यात्रिणाञ्च वृत्तान्तेषु परम्परेयमेव निर्व्यूढतां नीतास्ति। सार्धसहस्रद्वयवर्षस्य विशालस्यानेहसोऽनन्तरमपि 'आइन ए अकबरी' इत्येतस्मिन्नपि पुस्तके मूलभूत सिद्धान्तास्तएव शोभन्ते ये हि चन्द्रगुप्तमौर्यस्य भारतेन पल्लविताः। अस्त्येषा परम्परा जगतः प्राचीनतमा शास्त्रीयपरम्परेत्यत्र को हि नाम ईदृक् मनीषी योन स्वीकुरुते ।

लोकश्रेयः प्रेमानिहितस्वान्तस्य चाणक्यस्य सर्वदैव सर्वे विशेषेण दूतराजनीतिप्रभृतिभिः स्मरणीयानि वाक्यानि—

सुखस्य मूलं धर्मः । धर्मस्य मूलमर्थः । अर्थस्य मूलं
राज्यम् । राज्यमूलमिन्द्रियजयः ।
धर्ममर्थञ्च कामञ्च प्रवर्तयति पाति च ।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च ।।

---

१. तत्रैव, अ० १३०, श्लो० ४३ ।

# आधुनिक जगति तन्त्रम्

**श्रीचक्रेश्वर भट्टाचार्यः**

जगत् — सकर्तृकं-कार्य्यत्वात्घटवदित्याकाङ्क्षायामुच्यते । सदसत् स्वरूपं त्रिगुणमयं स्थावरजंगमं जगदिदं महामायायास्त्रिगुणात्मिकायाश्चित्‌शक्तेरद्वैतब्रह्ममय तुरीय महालक्ष्मीदेव्या लीलाविलास क्षेत्रम् । लीलार्थं कल्पितं द्वैतमद्वैतादपि सुंदरम् । देवी-माहात्म्यस्य प्राधानिक रहस्ये —

सर्व्वस्याद्या महालक्ष्मीः त्रिगुणापरमेश्वरी ।

लक्ष्यालक्ष्या स्वरूपा सा व्याप्य कृत्स्नं वावस्थिता ।।

त्रिगुणमयी परमेश्वरी महालक्ष्मीः सर्वेषामादिकारणम् मूलप्रकृतिः । सा निराकारा साकारा च । सैव सर्व विश्वं व्याप्यास्ति । सर्वस्याद्या सर्वप्रपञ्चानां कारणम् (गुप्तवती) । इन्द्रं प्रति हैमवती वाक्यम् देवी भागवते —

रूपं मदीयं ब्रह्मेदं सर्व्वकारण कारणम् ।

मायाधिष्ठान भूतंतु सर्व्वसाक्षि निरामयम् ।।

हैमवती देवराजमवदत् हे इन्द्र । त्वं मदीयं यद्रूपं दृष्टवानसि, तम्ममैव परम् ब्रह्मरूपम् । तच्च सर्व्वकारणानामपि कारण स्वरूपम् । तन्मध्ये त्रिगुणात्मिका प्रकृतिः साम्यावस्थतयावतिष्ठते । सा सर्व्वसाक्षिरूपा सर्व्वोपरि विनिर्मुक्ततया च निरामया ।

निर्गुणं सगुणं चेति द्विधामद्रूपमुत्तमम् ।

निर्गुणं माययाहीनं सगुणंमाययायुतम् ।।

साहं सर्व्वं जगत् सृष्टवा तदन्तः संप्रविश्य च ।

प्रेरयाम्यनिशं जीवं यथाकर्म्म यथाश्रुतम् ।।

सृष्टि स्थिति तिरोधाने प्रेरयाम्यहमेवहि ।

ब्रह्माणञ्चतथा विष्णुं रुद्रं वै कारणात्मकम् ।।

मम सगुण निर्गुणभेदेन रूपद्वयम् । या मायातीता सा निर्गुणा, याच मायान्तर्गता सा सगुणेति कीर्त्यते । अहमेवेदं विश्वब्रह्माण्डं सर्व्वं सृष्ट्वा तन्मध्ये अन्तर्यामिरूपेण प्रविश्य सर्व्वजीवानां निरन्तरं स्व स्व कर्म्मणां वेदविधानानुरूपफलं प्रयच्छामि । किमधिकमहमेव कारणाभिमानिनं ब्रह्माणं विष्णुं रुद्रमपि विश्वब्रह्माण्डस्य सृष्टि स्थितिलय कार्य्ये नियोजयामि ।

अद्वैत वेदान्तवादिना श्रीमताशंकराचार्येण तदीय विवेक चूडामणिग्रन्थे उक्तम्—

अव्यक्तनाम्नी परमेश शक्तिः,
अनाद्यविद्या त्रिगुणात्मिका परा ।
कार्य्यानुमेया सुधियैव मायया,
यया जगत् सर्वमिदं प्रसूयते ।।

तथा च वेदे—

य एतां माया शक्तिं वेद स मृत्युं जयति,
स पाप्मानं तरति सोऽमृतत्वमश्नुते ।

अव्यक्ताहि माया तत्त्वान्यत्व निरूपणस्य अशक्यत्वादिति ब्रह्म सूत्रेशंकर-भाष्यम् (१-४-३) ।

उक्तश्च शक्तिसंगम तन्त्रे—

नारीत्रैलोक्य जननी नारी त्रैलोक्यरूपिणी ।
नारी त्रिभुवनाधारा नारी देहस्वरूपिणी ।।
पुरुषं च स्त्रियोरूपं यत्किंचिद् रूपमुत्तमम् ।
नारी चक्रे सर्वरूपं यत्किंचिद् जगति गतम् ।।
न च नारी समं सौख्यं नच नारी समागतिः ।
न नारी सदृशं भाग्यं नभूतं न भविष्यति ।।

तथा हि चण्डी माहात्म्ये सुम्भं प्रति देव्युवाच—

एकैवाहं जगत्यत्र द्वितीया का ममापरा ।
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः ।।

जगत्यत्राहमेव 'एका" विराजिता । मम द्वितीया सहायभूता अपराका, रे दुष्ट ? एता ब्रह्माणी प्रमुखा मद्विभूतयो मच्छक्तयो मय्येव विशन्तीति पश्य : अस्य शान्तनवी टीकायामुक्तम—

भागत्रयमकरोत् । यथा पृथिवीतो मायातत्त्व पर्यन्तमेकत्रिंशत् तत्त्वानि आत्मतत्त्वम् । शुद्धविद्या-ईश्वरः सदाशिवश्चेति तत्त्वत्रयं विद्यातत्त्वमवदत् । शक्तिशिवौ तत्त्वद्वयं शिवतत्त्वात्तेनाभिहितम् । तदुक्तं सेतुबन्ध ग्रन्थे—

मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।
शक्ति शिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ।।

तन्त्र मते साधकः-आत्मतत्त्वं-सत्-विद्यातत्त्वं चित्, शिवतत्त्वमानन्दम् सृष्ट्वा सच्चिदानन्दब्रह्मोऽहमस्मि, जगदिदं ममान्तरमित्यनन्यचिन्तया निजं ब्रह्मस्वरूपं विभाव्य साधनायां प्रवृत्तो भवेत् । तदुक्तं गीतायानवमाध्याये—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।

अतएवोक्तं देवीभागवते-सप्तम स्कन्धे—

यच्चकिंचित्क्वचिद् वस्तु दृश्यते श्रूयतेऽथवा ।
अन्तर्बहिश्च तत् सर्वं व्याप्याहं सर्वदा स्थिता ।।
नतदस्ति मयात्यक्तं वस्तु किंचित् चराचरम् ।।

मत् प्रणीत शाक्तदर्शने षट्त्रिंशत्तत्त्वानां प्रतितत्त्वस्य व्याख्या प्रदर्शिता ।

जगति—जीवान् कर्म्मानुसारं यथावत् फलदानेन या देवी प्रेरयति, सा महामाया । सोपास्या चेन्महामाया नृणां भवति मुक्तये । उपासना विधिर्वक्ष्यते । महामाया स्वरूपमुक्तं कालिका पुराणे—

गर्भान्तिर्ज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः ।
उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम् ।।
पूर्वातिपूर्वसंस्कार संघातेन नियोज्य च ।
अहरादौ ततो मोह-ममत्व ज्ञान संशयम् ।।
क्रोधोपरोध लोभेषु क्षिप्त्वा क्षिप्त्वा पुनः पुनः ।
पश्चात् कामेन संयोज्य चिन्तायुक्तमहर्निशम् ।।
आमोदयुक्त व्यसनाशक्तं जन्तुं करोति या ।
महामायेति संप्रोक्ता तेन सा जगदीश्वरी ।।

मातृगर्भस्थो ज्ञानसम्पन्नः शिशुः प्रसूतिवायुना प्रेरितो भूमिस्थमात्रं यया ज्ञान-रहितः क्रियते परन्तु पूर्वं पूर्व्वजन्म संस्कार वशात् सद्योजात जीवस्य प्रथमदिने यया ज्ञान नाशक मोह ममताभ्यामाच्छाद्यते । यया च क्रोध मोह लोभेषु पुनः पुनर्निक्षिप्य,

भागत्रयमकरोत् । यथा पृथिवीतो मायातत्त्व पर्यन्तमेकत्रिंशत् तत्त्वानि आत्मतत्त्वम् । शुद्धविद्या-ईश्वरः सदाशिवश्चेति तत्त्वत्रयं विद्यातत्त्वमवदत् । शक्तिशिवौ तत्त्वद्वयं शिवतत्त्वात्तेनाभिहितम् । तदुक्तं सेतुबन्ध ग्रन्थे—

मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।
शक्ति शिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ।।

तन्त्र मते साधकः-आत्मतत्त्वं-सत्-विद्यातत्त्वं चित्, शिवतत्त्वमानन्दम् सृष्ट्वा सच्चिदानन्दब्रह्मोऽहमस्मि, जगदिदं ममान्तरमित्यनन्यचिन्तया निजं ब्रह्मस्वरूपं विभाव्य साधनायां प्रवृत्तो भवेत् । तदुक्तं गीतायानवमाध्याये—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।

अतएवोक्तं देवीभागवते-सप्तम स्कन्धे—

यच्चकिंचित्क्वचिद् वस्तु दृश्यते श्रूयतेऽथवा ।
अन्तर्बहिश्च तत् सर्वं व्याप्याहं सर्वदा स्थिता ।।
नतदस्ति मयात्यक्तं वस्तु किंचित् चराचरम् ।।

मत् प्रणीत शाक्तदर्शने षट्त्रिंशत्तत्त्वानां प्रतितत्त्वस्य व्याख्या प्रदर्शिता ।

जगति—जीवान् कर्म्मानुसारं यथावत् फलदानेन या देवी प्रेरयति, सा महामाया । सोपास्या चेन्महामाया नृणां भवति मुक्तये । उपासना विधिर्वक्ष्यते । महामाया स्वरूपमुक्तं कालिका पुराणे—

गर्भान्तर्ज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः ।
उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम् ।।
पूर्वातिपूर्वसंस्कार संघातेन नियोज्य च ।
अहरादौ ततो मोह-ममत्व ज्ञान संशयम् ।।
क्रोधोपरोध लोभेषु क्षिप्त्वा क्षिप्त्वा पुनः पुनः ।
पश्चात् कामेन संयोज्य चिन्तायुक्तमहर्निशम् ।।
आमोदयुक्त व्यसनाशक्तं जन्तुं करोति या ।
महामायेति संप्रोक्ता तेन सा जगदीश्वरी ।।

मातृगर्भस्थो ज्ञानसम्पन्नः शिशुः प्रसूतिवायुना प्रेरितो भूमिस्थमात्रं यया ज्ञान-रहितः क्रियते परन्तु पूर्वं पूर्व्वजन्म संस्कार वशात् सद्योजात जीवस्य प्रथमदिने यया ज्ञान नाशक मोह ममताभ्यामाच्छाद्यते । यया च क्रोध मोह लोभेषु पुनः पुनर्निक्षिप्य,

पश्चात् कामासक्त्याहर्निशं चिन्तायुक्त आमोदनिरतो व्यसनाशक्तश्च क्रियते, सा [illegible] महामायाऽभिहिता । जीवस्य बन्धनमुक्तिर्महामायया सम्पद्यते ।

आधुनिक जगत् – कलियुगं पाप भूयिष्ठं, अस्य लक्षणानि यथा—

धर्म्मः संकुचितस्तपो विरहितः सत्यश्चदूरं गतम् ।
क्षोणी मन्दफला नृपाश्च कुटिलाः शास्त्रेतराब्राह्मणाः ।।
लोकाः स्त्रीवशगाः स्त्रियोऽतिचपलाः पापानुरक्ताजनाः ।
साधुः सीदति दुर्ज्जनः प्रभवति प्रायः प्रवृद्धे कलौ ।।
यदा यदा सतांहानिर्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ।।

इत्येवम्प्रायं कलियुगम् । कलियुग प्रभावः—भविष्यपुराणं, गरुडपुराणं, भागवत तन्त्रश्च समालोच्य दृश्यते । सत्यं शौचं दया क्षमाचेतिचतुष्पादः धर्मस्य । सत्यादियुग-त्रयेऽपि कलेः प्रभावात् पादत्रयं नश्यति इहाधुनिक युगे केवलमेकं सत्यपादमवशिष्यते, तदपि दुरात्मा नानादुष्कर्म्मभि[illegible] यतते ।

तदेवमाधुनिके जगति—अधर्म्मनिरताः प्रायश्सर्वेजनगणास्त्रिगुणात्मिकाया महा-मायाया रजस्तमोगुण प्रभावेण, काम क्रोध-लोभ-मोह-मद मात्सर्य्यादीनां वशीभूता दुर्नीतिपरायणा, असन्मार्गगामिनो लौकिक पंच मकार लिप्सायां क्षणिकमशाश्वतम् आनन्दं प्रति धावन्तो, महामायापरांमुखा दुष्कर्म्मचारिणो अन्ततो दुःखमेव भजन्ते । महामाया च तत्तत् कर्म्मफलरूपं आध्यात्मिकमाधिदैविकमाधिभौतिकं प्राकृतिक दुर्योगादि भयावहं कर्म्मसमूहं, यद् दृष्टमिह जगति तत् सर्वं प्रकृतेः कार्य्यं महामाया सम्पाद्य क्रीड़ति । तदुक्तं ब्रह्मणा महाकालीस्तवे—

त्वं शक्तिरेव जगतामखिलप्रभवा,
तन्निर्म्मितश्च सकलं खलुभावमात्रम् ।
त्वं क्रीड़से निजविनिर्म्मितमोहजाले,
नाट्ये यथा विहरते स्वकृते नटो वै ।।

जगत्—सततं चक्रवत् परिवर्त्तनशीलं ज्ञानविज्ञानमयं शक्तिप्रधानञ्च दृश्यते । यदा यदा यस्य जनस्य वा येषां जनानां शक्तेः प्राधान्यं जायते, तदा तदा तस्य जनस्य तेषां जनानां वा जगद् भोगाधिकारो दृश्यते । भारतेऽस्मिन् भारतीय महाप्राज्ञः महात्मा गान्धिः शक्ति प्रभावेण कंग्रेस् महासभायोगेन भारतवासि सर्वजनानां चिरागत वर्णाश्रम धर्म्मोच्छेदेन, अस्पृश्यता वर्ज्जनेन च सर्वेषां नरनारी समूहानां सम्मोहन क्रियया सर्व-शक्तिमेकीकृत्य काम-क्रोध-लोभ-मोह-मद मात्सर्य्यादि त्यागरूपबलिदानेन भारतेश्वरीं महाशक्ति महामायां सन्तोष्य, तत् कृपया महाशक्तिमताऽहिंसारूपमहास्त्रेण भारतत्याग-

ध्वनिमुद्घोषयन् प्रबल पराक्रान्तं साम्राज्यलोभि ब्रिटिशराजमुच्छेदयामास । ब्रिटिश-राजोऽपि भारतीय प्रधानान् मोहयित्वा, भारते प्रतिहिंसारूपंविद्वेष बीजं रोपयित्वाऽ-खण्डभारतवर्षं द्विखण्डितं विधाय स्वदेशं प्रस्थितः । तदन्ते भारतवासिमारणास्त्रेण महात्मापि स्वर्गे प्रेरितोऽभवत् ।

ततोभारतवर्षे सर्व्वजनानां मिलित शक्त्या गणतन्त्र राज्यस्थापनमभूत् । तदवधि भारत प्रधानो महाशक्तेः कृपाप्रभावेण, देशरक्षार्थमचिरं विविध ज्ञानविज्ञान योगेन, सुकौशलपूर्णं नानाप्रकार मारणास्त्रं शस्त्रं यन्त्रं व्योमयानञ्च बहुविधानि निर्म्मितवान् । तदर्थं भारतवर्षस्य नाना स्थानेषु यन्त्रागारानि सैन्य शिक्षालया बहूनि नूतन गृहाणि च निर्म्माय स्थापितवान् । जलपथे, स्थलपथे, आकाशपथे च विचरणाय बाष्पीण जलयानानि स्थलयानान्याकाशयानानि बहून्यभूतपूर्वाणि निर्मितानि दृश्यन्ते । शिक्षा चिकित्सा कृषि वाणिज्यादि विभाग विस्तारेण नानावैज्ञानिकोद्भावनेन च क्रमवर्द्धमान राष्ट्राणां मध्ये भारतवर्षस्य बहु सम्मृद्धिमन्महत्तरं स्थानं स्थापितम् ।

साम्प्रतमिन्दिरादेवी महाशक्तिः प्रधानमन्त्रिपदे स्थित्वा प्राचीन कंग्रेस् महासभां वशीकृत्य नूतनशासककंग्रेस् सभा विस्तारेण भारतीय सर्वदलान् पराभूय लोकसभायां सैव विजयिनी भवति । देशीयनृपतीनां राज्याधिकारमहरत् । राजप्रदत्त देवोत्तर ब्रह्मोत्तर वृत्तेरपि लोपः संजातः । स्वर्गीयलालबहादुरशास्त्रिप्रधानमन्त्रित्व समये पाकिस्तानेन सह घोरतर युद्धे भारतवर्षस्य विजयोऽभवत् । युद्धावसाने सन्ध्यवसरे प्रधानमन्त्री शास्त्रिदेवो रशियायां महाप्रयाणमकरोत् भारतवर्षस्य बहूनि राज्यानि संविभाज्य नूतन नाम्ना क्षुद्र राज्येषु परिणतानि । विचारतन्त्रे शासन यन्त्रे च शिथिलता परिलक्ष्यते ।

आधुनिके बांग्लादेशे राष्ट्रविप्लवहेतोःमृत्युभयात् प्रायः कोटिलोकाः शरणार्थिनो भारते प्रविशन्ति तेषां परिपालनार्थं प्रत्यहं त्रिकोटिमुद्रा व्ययो भवेत् । तदर्थं भारत-वर्षवासिनामुपरि नाना भावेन करवृद्धिः क्रियते । पाकिस्तानैः सहयुद्धसम्भावनाऽपि प्रबलतरा दृश्यते । अमेरिका रशिया च यान्त्रिक यानेन चन्द्रलोक जयाय यतमानौ दृश्येते । इत्येवं प्रायः स्थाली पुलाक न्यायेन, जगतः सर्वदेशेषु न्यूनाधिक्यया सृष्टि-स्थिति लयात्मकं प्रकृतेः क्रिया-कलापं प्रचलितमिति बोध्यम् ।

महामाया च जगतो जनानां सर्वेषामेवान्तर्य्यामिरूपा वर्त्तते । गीतायाः पराऽपरा प्रकृते र्जगत् कारणत्वमुक्म् । सा देवी तस्या रजस्तमो गुणोद्भवाष्ट महा-पाशैः मारणोच्चाटन-क्षोभण-मोहन स्तम्भन-विद्रावण - वशीकरण - विद्वेषनात्मकैः जगति जीवान् दृढ़बन्धनेन बद्ध्वा संसारचक्रेभ्रामयते । सत्त्व गुणोद्भवाष्ट महायोगैरणिमा-लघिमा-व्याप्तिः प्रकाम्यं महिमा ईशित्वं वशित्वं कामवसायितात्मकैर्योगैः साधक भक्तान् मोक्षधाम्नि प्रेरयति च । एतदेव जगतोमूलकारणम् । सर्व्वमेतत् प्रकृतेः कार्यं महामाया सम्पाद्य क्रीडति ।

अद्वैतं ब्रह्म सर्वत्राकाशवत् सर्व्वदेशेषु व्यापकरूपेणास्ति । गुणगत भेदेन नाना पद्धत्या जगति नाना नाम्ना नानाजन गणैर्ज्ञानाज्ञान भावेन केवलं तस्यैवोपासनायां यत्नः क्रियते । उक्तञ्च नारायणी स्तवे—

विद्याः समस्ता स्तव देवि भेदाः,
स्त्रियः समस्ताः सकला जगत्सु ।
त्वयैकया परितमम्बयैतत्,
का ते स्तुतिः स्तव्यपरा परोक्तिः ।। ६ ।।

हे देवि ! वेदाद्यष्टादशविद्या स्तवैवांशभेदा भवन्ति । जगत्सु चतुः षष्टिकला-युक्ताः पतिव्रताः सौन्दर्यतारुण्यादिगुणान्विताः स्त्रियः सर्वा एव तवांशभूताः । त्वमेका-किनी जननी रूपा सती जगतोऽन्तर्बहिश्च सर्व्वत्र परिव्याप्य तिष्ठसि । अतएव स्तव्य-परा स्तवार्हा वा अपरा का स्तुतिर्भवेत् । अत्र श्लोकोक्ताष्टादशविद्यारूपेण एवं चतुः षष्टि कला विद्यारूपेणैव महामाया जगतिसर्वत्र विराजते । एतत् सर्वं मत्प्रणीत शाक्त-दर्शने सविशेषंवर्णितम् ।

तन्त्रम्—यद्यपि तन्त्राणि सम्प्रदाय भेदेन विविधानि सन्ति, तन्नात्रालोच्य विषयः : तथाहि - चिकित्सको यथा रोगिणां रोग निर्णयानन्तरमेवौषध प्रयोगं करोति, तद्वदिहाधुनिक जगति सर्व्वशान्त्यर्थं शक्तिप्रधानं शिवोक्ततन्त्रमेवालोचयामि . यतः—

शक्तिहीनं नरं ब्रूते लोकश्चैवाति दुर्बलम् ।
विष्णु हीनं रुद्रहीनं नवदन्ति जनाः किल ।।

पुरा सती दक्षयज्ञदर्शनाय पित्रालये गन्तुं शिवं प्रार्थयत् . शिवो निमन्त्रणं विना पित्रालयेऽपि कार्य्योपलक्ष्ये गन्तुं नोचितमिति सतीं वारंवारं प्रबोध्य निषेधयामास । तदा महाक्रुद्धा सती दशमहाविद्यारूप धारणेन दशदिशमाच्छाद्य शिवमतीवविभ्रान्त-मकरोत् । तत् काले सती भयविह्वलं पतिं सन्तोष्य, शिवाज्ञया दशमहाविद्यानां नामान्यकथयत् । तदुक्तं बृहद्धर्मपुराणे महाभागवतपुराणस्याष्टमाध्याये च—

काली तारा महाविद्याषोडशीभुवनेश्वरी ।
भैरवी च्छिन्नमस्ता च सुन्दरी बगलामुखी ।।
धूमावती च मातंगी नामान्येतानि वै शिव ।
भक्त्या संभजतां नित्यं चतुर्वर्गफलप्रदाः ।।
मारणोच्चाटन क्षोभ मोहनद्रावणानि च ।
वश्य स्तम्भन विद्वेषाद्यभिप्रेतानि कुर्व्वते ।
इमाः सर्व्वा गोपनीया नप्रकाश्याः कदाचन ।।

हे शिव एता दशमहाविद्याः सर्व्वा एव नित्यं संभजतां साधकानां चतुर्व्वर्ग फलानि प्रयच्छन्ति । एवञ्च साधकानामभीष्टमारणउच्चाटन-क्षोभण-मोहन, द्रावण, वशीकरण-स्तम्मन-विद्वेषणानि च सर्व्वाण्याभिः सम्पाद्यन्ते । ममैता मूर्त्तयो नप्रकाश्याः सर्वथा गोपनीयाश्च ।

आसां मन्त्रं तथा यन्त्रं पूजां होमविधिं तथा ।
पुरश्चर्य्या विधानञ्च स्तोत्रञ्च कवचं तथा ॥
आचार नियमश्चापि साधकानां महेश्वर ।
त्वमेव वक्तासि विभो नान्योवक्तात्रविद्यते ॥
तदेवागम शास्त्रंतु लोके ख्यातं भविष्यति ।

आसां दशमहाविद्यानां मन्त्र-यन्त्र-पूजा-होम-पुरश्चरणविधि-स्तोत्र कवच-आचार-नियमानि च हे महेश्वर । साधकानां हितार्थाय तान् सर्व्वान् भवानेव करिष्यति । तदेवागम शास्त्रं लोके ख्यातं भविष्यति ।

आगमस्य भवान् कर्त्ता वेदकर्त्ता हरिः स्वयम् ।
आदावागमकर्त्तृत्वे भवान् वै विनियोजितः ॥
पश्चाद् वे वेदकर्त्तृत्वे हरिः सम्यङ नियोजितः ।
आगमश्चैव वेदश्च द्वौ बाहू मम शंकर ।
द्वाभ्यामेव धृतं सर्व्वं जगत् स्थावर जंगमम् ॥

शक्ति मंगल तन्त्रमते महाकाल्याज्ञया शिवो भारत भूमिं, विष्णुक्रान्ता, रथक्रान्ता, अश्वक्रान्तेति नाम्ना त्रिधा विभज्य, प्रतिविभागं विविध नाम्ना चतुःषष्टि संख्यकानि तन्त्राणि, तेषां साकल्येन द्विनवत्युत्तर शतसंख्यकानि तन्त्राणि प्रोक्तानि ।

आधुनिक जगति—तन्त्राचारेण ब्रह्मोपासना युगधर्म्मानुसारं प्रशस्तेति परमशिवेन जगतो मंगलाय भगवतीं प्रत्यभिहितम् ।

मुण्डमालातन्त्रे—

विनातन्त्राद् विनामन्त्राद् विनायन्त्रान्महेश्वरि ।
न च भुक्तिश्च मुक्तिश्च जायते वरवर्णिनि ॥
शक्तिमार्गं परित्यज्य योऽन्यमार्गेप्रधावति ।
करस्थं स मणिं त्यक्त्वा भूतिभारं प्रधावति ॥
नाना तन्त्रमतं देवि नानामन्त्रं प्रकाशितम् ।
ब्रह्मस्वरूपं विज्ञातुं कः समर्थो महीतले ॥

ज्ञानमार्गे प्रधावन्ति पशवो हृतबुद्धयः ।
श्रीदुर्गाचरणाम्भोजं हित्वा यान्ति रसातलम् ।।
सत्यं वच्मि हितं वच्मि पथ्यं वच्मि पुनः पुनः ।
न च भुक्तिश्च मुक्तिश्च विना दुर्गानिषेवणात् ।।

मत्स्यसूक्ततन्त्रे, आधुनिक जगति तन्त्रशास्त्रस्यैव प्राधान्यमुक्तम्—

विष्णोर्वरिष्ठोदेवानां ह्रदानामुदधिर्यथा ।
नदीनाञ्चयथा गंगा पर्व्वतानां हिमालयः ।।
अश्वत्थः सर्व्ववृक्षाणां राज्ञामिन्द्रोयथा वरः ।
देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा ।।
तथा समस्त शास्त्राणां तन्त्रशास्त्रमनुपमम् ।

कुब्जिका तन्त्रे—

श्रुतिस्मृति विधानेन पूजा कार्य्या युगत्रये ।
आगमोक्त विधानेन कलौदेवान् यजेत् सुधीः ।
नहि देवाः प्रसीदन्ति कलौ चान्य विधानतः ।।

महानिर्वाणतन्त्रे—

कलौतन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः ।
शस्ताः कर्म्मसु सर्व्वेषु जपयज्ञ क्रियादिषु ।।
नान्यः पन्था मुक्तिहेतुरिहाऽमुत्रसुखाप्तये ।
यथा तन्त्रोदितो मार्गो मोक्षाय च सुखाय च ।।

अत्रोच्यते—आचार हीनं नपुनन्ति वेदा इत्युक्त्वाद्, वेदे स्त्रीशूद्राणामधिकारो नास्तीत्युक्तत्वाच्च—इहाधुनिक जगति-प्राया जनगणा आचार हीना दुर्बला व्रतोपवासादि कार्य्ये असमर्थाश्च जाताः । परंतु तेषां धर्म्मार्थ-काम-मोक्ष लाभः सुदूर पराहतो भवति । अतएव शिवेन तेषां कृतेऽल्पायासेन तन्त्रमार्गेण शक्ति साधनाऽभिहिता ।

तन्त्रमते शक्तिसाधना महद्भावपूर्णा । तदुक्तं कौलवली तन्त्रे—

बहुजपात् तथाहोमात् कायक्लेशात्तुविस्तरैः ।
नभावेन विना चैव तन्त्रमन्त्राः फलप्रदाः ।।
भावस्तुत्रिविधः प्रोक्तः स च ज्ञानसेवावस्था बोधः ।

सत्त्व रजस्तमो गुणभेदाद् भावस्य वा ज्ञानस्यावस्था यथाक्रमं दिव्य-वीर-पशुश्चेति उत्तम-मध्यमाधम रूपेण त्रिधाभिहितः । तदुक्तं—रुद्रयामले—

शरीरं त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ।
भावश्चत्रिविधः प्रोक्तः उत्तमाधममध्यमः ।।

तथाहि—उत्तम-मध्यमाधमश्चेति शरीरभेदानुसारं मानव प्रकृतिरपि सत्त्वादि गुणसम्पन्नत्वरूपेण साधना प्रणाली च सत्त्वादि भेदेनोत्तममध्यमाधमाचेति । अर्थात् दिव्य-वीर-पशुश्चेति त्रिभावेन ग्रथिता भवति ।

अत एव यस्य यादृशी प्रकृतिस्तस्य पक्षे तद्रूप भावावलम्बनेन साधना प्रशस्ता । परंतु क्रमोन्नत्या साधकः पशुभावाद् वीरभावः, वीरभावाद् दिव्यभावः, दिव्यभावाद् भावातीतावस्थायामथवा गुणातीतावस्थायामारोढुं समर्थो भवति । वस्तुतः साधकस्य शक्तिभेदनिमित्तं भावत्रयमभिहितं । तदुक्तं रुद्रयामाले—

शक्तिप्रधानं भावानां त्रयाणां साधकस्य च ।
दिव्य-वीर-पशूनाञ्च भावत्रयमुदाहृतम् ।।

मत्प्रणीत शाक्तदर्शने सविशेषं सर्व्वमेतदालोचितम् । निबन्धेऽस्मिन् केवलं पशुभावमेवालोचयामि । तदुक्तं महानिर्वाणतन्त्रे—

वीरभावो दिव्यभावो नस्यात् प्रिये कलौयुगे ।
केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम् ।।

पशुभावः

यषां जीवानामन्तरविद्यावरणेन परिपूर्णमद्वैतज्ञानस्य किंचित् मात्रमपिनोदेति, तेषां मानसिकी अवस्था तामसिकीत्वेन पशुभाव इति कथ्यते । ते च पशुवदज्ञानान्धकारे संसारेण सह दृढ़बन्धनेन बद्धास्तिष्ठन्ति । उत्तमाधमभेदे च पशुभावो द्विविधः संसार-मोह जाले पतितःबद्धोजीवोऽधमपशुः । सत् कर्म्मपरायणो भगवद्विश्वासी जीवः उत्तमपशुः । द्वैतबुद्धित्वादुभौ पशू ।

इह जगति पथद्वयमस्ति निवृत्तिः प्रवृत्तिश्चेति । निवृत्तिर्योगः प्रवृत्तिर्भोगः । आगमसारतन्त्रोक्त सूक्ष्मपंच मकार साधना निवृत्ति पथे एवं महानिर्वाणतन्त्र प्रभृति वर्णित स्थूलपंच मकार साधना प्रवृत्ति पथे विधेया । येषां किल भोगवासना निवृत्ति-पूर्वकं विषय वैराग्यमुदेति, तेषांपक्षे निवृत्तिमार्गस्य योगपन्थाः यौगिक सूक्ष्मपंचमकार साधनाविहिता । अपिच येषां खलुभोग वासना शतबाहुना समग्र संसार भोगलिप्सा-दुर्द्दमनीया दुष्पूरणीया च । तेषां पक्षे सदाशिवेन स्थूलपंचमकार साधना तन्त्रशास्त्रे प्रकाशिता भोगेन-तेषां त्यागमार्गे क्रमशो योगपथे वा निवृत्ति पथे प्रवेशाधिकारः सुगमो भवति । अत एव मद्यमांसादि व्यवस्थया तन्त्रशास्त्रस्य निकृष्टत्वं प्रतिपन्नं न भवति । अपितु सर्व्वविधजनयोग्यत्वमेव प्रतिपादितमभूत् । यतः शास्त्रं सर्व्वाधिकारिणामधिकार्य्य-विषयस्योपदेष्टा । उक्तश्च महानिर्वाण तन्त्रे—

न मद्यभक्षणे दोषो न मांसे न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ।।

अपिच—

यत्रास्ति भोगो न च तत्र मोक्षः,
यात्रास्ति मोक्षो न च तत्र भोगः ।
शिवा पादाम्भोजयुगार्च्चकानां,
भोगश्च मोक्षश्च करस्थ एव ।।

अत्रोच्यते—स्वरूपतः सकाम्यसंयमिजनानां लौकिक पंचमकारादौशक्तिरधिक तरा, तेषां प्रियवस्तु पंचमकारोनाम ।

पंचमकार एव संसार वन्धहेतुः । कामनाविषये अथवा इच्छाविषये रजः प्रधान जीवानां स्वातन्त्र्यं नास्ति । तदुक्तं श्रीकृष्णेन भगवद्गीतायां—काम एषः क्रोध एष रजोगुण समुद्भव इत्यादिः । अत एव पंचमकार वासना परित्याग सहज साध्यो न भवति ।

जगदीश्वरीमहामाया सर्व्वजीवानामन्तर्य्यामिनी रूपेण वर्त्तते । परंतु यस्य यदन्नं वा भोगः प्रियो भवति तस्येष्ट देवताया अपि तदेव प्रियो भवति । तदुक्तं श्रीरामचन्द्रेण रामायणस्य अयोध्याकाण्डे दशरथस्य पिण्डदान समये—

"यदन्नाः पुरुषो भवति तदन्नास्तस्य देवता" इत्यादिः । तथैव सकामीनां तेषां प्रिय द्रव्येणैव स्वीयेष्ट देवता पूजायां तन्त्रेविधानमस्ति । तन्त्रोपदिष्टमार्गेण परदेवतायां प्रीत्युद्देश्यकात्मसमर्पणबुद्ध्या पूजायोगेन परमाशक्ति विषयीभूत द्रव्याणां प्रयोगे, हिंसाद्यसत् कर्म्मस्वपि न कोऽपि दोषो जायते । परंतु तदनुष्ठित कर्म्मभिः साधकस्य भोगेच्छायाश्चरितार्थत्वेन क्रमशस्त्यागपथे आत्मसंयमो भविष्यति । एवंचानेनाभ्यास योगेन यदामनोऽन्तर्मुखी भूत्वा, बाह्यविषयवस्तुषु आशक्ति रहितत्वेनाध्यात्मिक प्रक्रियायामन्तर्यागे प्रविश्य, सम्पूर्ण तन्मयत्वेन भगवत् परायणां भक्ति लभते । तदा-तदन्तः अनवरतं भगवत् स्फुरणेनबाह्य ज्ञान शून्यः स्वयं परम शिव इव स साधको यद् यदाचरति तत् सर्व्वं भगवत् पूजापरो भवतीति विस्तरेणालम् ।

आसाद्य जन्ममनुजेषु चिराद्दुरापम्,
तत्रापि पाटवमवाप्य निजेन्द्रियाणाम् ।
नाभ्यर्च्चयन्ति जगतां जनयित्रि येतां,
निःश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ।

# व्याकरणमित्यस्य शब्दस्य पदार्थः

दुर्गादत्त शास्त्री

सुप्रथितमेव तत्र भवतां भवतां यद् व्यवहारातीतेयं संस्कृत भाषा व्याकरण साहाय्यमन्तरेण न समर्था विज्ञातुम्—

शक्तिग्रहं व्याकरणोपमान कोशाप्त वाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।।

इत्युक्तेषु शक्तिग्राहकेषु मुख्यस्य व्यवहारस्य संस्कृते अद्यत्वे नितरामभावाद्-भाषायाः परिज्ञानाय व्याकरणमेव मुख्योपायः ।

अपि च नामरूपात्मके जगति शब्दज्ञानमन्तरा ज्ञानं नोदेति—उक्तञ्च भर्तृ-हरिणा "न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।"

अतः शब्दराशेः ज्ञानार्थं व्याकरणमेव प्रधानं सहायकम् ।

अपि च व्याकरणाध्ययनस्य भाष्यकृत् प्रतिपादितेषु मुख्येषु प्रयोजनेष्वपि अध्या-पन वृत्तिकेन ब्राह्मणेनावश्यं शब्दाः ज्ञेयाः । न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुमित्युक्तम् ।

तदिदं व्याकरणं किमिति समुपस्थिते प्रश्ने भगवान् पतञ्जलिः स्वयमेवं जिज्ञा-सते 'अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थ इति । अत्र अर्थशब्दो वाच्यपरक एव वेदितव्यो न प्रयोजन पर इति सूचनार्थमेव पद सहितमेवार्थमत्राभिहितवान् ।

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्य विदो विदुः ।।

इत्यनुसारं भाष्यकारः स्वयमेवोत्तरयति "सूत्रमेव व्याकरणमवगन्तव्यम् । यदि भवद्भिः सूत्रं व्याकरण पदार्थ इति स्वीक्रियते तदा व्याकरणस्य सूत्रमत्र षष्ठ्यर्थो नोप-

पद्येत द्वाभ्यामपि शब्दाभ्याम् अष्टाध्याय्याः प्रतिपादनाद् व्यतिरेकाभावस्य जागरूकत्वात् ।

यतो हि भेदे एव स्वस्वामिभावादि रूपा षष्ठी भवितुं शक्या । किं हि तदन्यत् सूत्राद् व्याकरणम्—यस्यादः सूत्रं स्यादिति सूत्रे व्याकरणपदार्थे समर्थिते सति एषः दोषः समापतति ।

अपित्र व्याकरणाच्छब्दान् प्रतिपद्यामहे इति लोके दृश्यते प्रसिद्धो व्यवहारः । सूत्रस्य व्याकरण पदार्थत्व स्वीकारे व्याख्यान रहित सूत्रमात्र श्रवणात् शब्दा न प्रतिपद्येरन् ।

यदि च तदेव सूत्रं विभक्तं सद् व्याख्यानं भवतीत्युच्यते तदपि-अविचारित-रमणीयमेव यतो हि न केवलानि चर्चापदानि व्याख्यानं वृद्धिः आत् ऐज् इति-किन्तु-उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवति ।

एवं सूत्रस्य व्याकरण पदार्थत्वे स्वीकृते समुत्पन्ने दोषे भाष्यकार आह शब्द एव व्याकरण पदार्थोऽस्तु-इति ।

शब्दस्य अर्थात् लक्ष्यस्य अष्टाध्याय्या व्युत्पाद्यस्य व्याकरण पदार्थत्वे सति व्याकरणस्य सूत्रमत्र षष्ठ्यर्थोऽप्युपपद्यते ।

किन्त्वेवं सति व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणमत्र 'करणेऽर्थे ल्युट् प्रत्ययो नोपपद्येत । यतो हि शब्दस्य व्याक्रियमाणत्वात् कर्मत्वमेव न करणत्वम् ।

शब्देन न किञ्चिद् व्याक्रियते अपितु सूत्रेण ।

राज भोजनादौ तु भुज्यन्ते (शालयः) इति भोजनाः राज्ञः भोजनाः राजभोजना इति व्युत्पत्तौ तु कर्मणि ल्युटः प्रवृत्तेरगतिगतत्वात् ।

अथ दोषान्तरमुद्भावयति 'भवे च तद्धितः' अर्थात्-व्याकरणे भवो योगो वैयाकरण इति रूपे अण् प्रत्ययो न स्यात्—नहि शब्दे भवोयोगः अपि तु सूत्रे ।

अपिच पाणिनिना प्रोक्तं पाणिनीयमिति प्रयोगे 'तेन प्रोक्तमिति सूत्रेण तद्धित प्रत्ययानुपपत्तेः नहि पाणिनिना शब्दाः प्रोक्ता अपितु सूत्राणि ।

एवं शब्दस्य व्याकरण पदार्थत्वे समुत्पन्नान् दोषान् खण्डयति भगवान् भाष्यकारः ।

अयं तावददोषः यदुच्यते 'शब्दे ल्युडर्थ इति । नावश्यं करणाधिकरणयोरेव ल्युट्-विधीयते-अन्येष्वपि कारकेषु तत्प्रवृत्तेः सुकरत्वात् 'कृत्यल्युटो: बहुलम् तद्यथा

प्रस्कन्दनम्, प्रपतनम्। एवं व्याकरणमित्यत्र अगत्यैव कर्मणि ल्युट: सत्वाद् दोष परिहार:।

अथवा शब्दैरपि शब्दा व्याश्रियन्ते यथा गौरित्युक्ते सर्वे संदेहा निवर्तन्ते नाश्वो न गर्दभ इति।

किन्तु भवे च तद्धित:, प्रोक्तादयश्च तद्धिता इति दोषद्वयस्य तादवस्थ्यत्वेन कथयति—

लक्ष्य लक्षणे व्याकरणम्।

लक्ष्य: शब्द: लक्षणं सूत्रमित्येतत् समुदितं व्याकरण मिति।

नच समुदाये प्रवृत्तो व्याकरण शब्दोऽवयवे नोपपद्येत—सूत्राणि चाप्यधीयान इष्यते वैयाकरण इति दोष: स्यादिति वाच्यम्।

समुदाये प्रवृत्तानां शब्दानामवयवेष्वपि प्रवृत्ति दर्शनात् 'पूर्वे पाञ्चाला: घृतं भुक्तमित्यादिषु तथा दर्शनात्। एवमयं समुदाये प्रवृत्तो व्याकरणशब्दोऽवयवेष्वपि प्रवर्त्तेतेति सुशकत्वात्।

एवं लक्ष्य लक्षणे व्याकरणमिति संसाध्य सिंहावलोकन न्यायेन पुनरपि भाष्य-कार: सूत्रमेव व्याकरण पदार्थ इत्युपपादयति तदुत्पन्नान् दोषांश्च समुद्धरतिसूत्रे व्याकरणे व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थो नोपपद्येतेति यदुक्तं तन्न रुचिरं प्रतिभाति। यतो हि व्यपदेशिवद्भावेन भविष्यति विशिष्ट: अपदेश: मुख्य: व्यवहार: स: अस्यास्तीति व्यपदेशी व्यपदेशिना तुल्यं व्यपदेशिवद् अर्थात् अमुख्ये मुख्य व्यवहारोऽनया परिभाषया विधीयते—

यथा राहो: शिर: इत्येकस्मिन्नपि वस्तुनि शब्दार्थ भेदाद् 'अर्थाद् अनेकावस्था युक्तं शिरो राहु शब्दार्थ:, यत् किञ्चिदेकावस्थायुक्त तच्-शिर: शब्दार्थ:। तादृशराहु शब्दार्थस्य तादृश शिर: पदार्थोऽवयव इति षष्ठ्यर्थोपपत्ति: (भेद व्यवहारात्)।

एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृति क्रियायां करण रूपत्वमुच्यते सूत्र शब्देन तु समुदाय रूपतेति भेद व्यवहार उपपद्यते अर्थाद् अनेकावस्था युक्तस्य तस्य व्याकृति क्रिया करणावस्थाविशिष्टमवयव: इति तद्रूपावयवस्यायं समुदाय इत्यर्थ:।

ईदृश स्थले व्यपदेशिवद् भाव विषये च विकल्पात्मकं ज्ञानं वस्तुशून्यमेव भवति—इत्युक्तं भगवता पतञ्जलिना स्वीये योग सूत्रे—

शब्द ज्ञानानुपाती वस्तुशून्यो विकल्प: एवं सूत्रं व्याकरण पदार्थ इति पक्षे द्वितीय दूषणोद्धारं विदधाति भगवान् पतञ्जलि:। यदप्युच्यते सूत्रत एव न शब्दान्

प्रतिपद्यन्ते अपितु व्याख्यानतश्चेति नेदं युक्तं प्रतीयते यतो हि तदेव सूत्रं विगृहीतं सद् व्याख्यानं भवति यदुच्यते न केवलानि चर्चा पदानि व्याख्यानम् वृद्धिः आत्-ऐच् इति उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवतीति तदपि न शोभनं प्रतिभाति

अविजानन एवं भवति। सूत्रत एव शब्दान् प्रतिपद्यन्ते अर्थात् पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनं भवति आतश्च सूत्रत एव 'यो हि—उत्सूत्रं कथयेन्नादो गृह्येतेति दिक्।

# अभिनवगुप्तस्य सरस्वती तत्व कारणानि

## एवम्

# तेषां मम्मटे पभावश्च

**डा० कैलासपती त्रिपाठी**

तत्र भवद्भिरभिनवगुप्त पादैः लोचनस्य प्रारम्भिक पद्ये कवि सहृदय निरूपणीयस्य सरस्वती तत्त्वस्य सर्वोत्कृष्टताप्रस्तावे केषाञ्चित् तत् कारणानामपि निर्देशः कृतो विद्यते। काव्य प्रकाशस्य सम्बद्ध सन्दर्भाः एतेन लोचनांशेन तत्त्वतो रूपतश्च बहुधा सम्वादिनो दृश्यन्ते।

कविभिः निरूपितम्, सहृदयैराम्नातम् लोक प्रसिद्ध वस्तु विजातीयम् स्व पूर्व क्षणानवस्थितम् अपूर्व सरस्वती तत्त्वं प्रख्या प्रथयति, उपाख्या सारयति एवम् तयोः प्रसरः भासयति।

एतस्य किलाह्लादमयस्य सरस्वती तत्त्वस्य त्रीणिकारणानि लोचनकृता संकेतितानि तानि च नामत—(१) प्रख्या (२) उपाख्या (३) एवंतयोः प्रसरः।

प्रख्या—ग्राव प्रख्यं पाषाण तुल्यं निसर्गतो नीरसं जगत् विनैव कारण कलाम् स्वाद्भुत शक्ति महिम्ना अन्यदिव संसृज्य प्रथयति विस्तारयति वा।

उपाख्या—वस्तूपस्थापन-नैपुण्यं निर्वचन पाटवं वा। एतेन ग्रावप्रख्यं जगत् सरसी क्रियते। सरस्वतीतत्त्वस्य प्रख्यया प्रख्यानानन्तरं उपाख्यया उपाख्यानं क्रियते। लोकशास्त्राद्यवेक्षणाद्युपलब्धेन प्रख्यया प्राप्त वस्तुनो वस्तु विन्यास-निर्वचन-नैपुण्येन सरसता सम्पाद्यते।

(तयोः) प्रसरः—प्रख्योपाख्याभ्यां यथा क्रमम् उन्मिषित सरसितं सरस्वती तत्त्वं काव्यज्ञादीनां साहाय्येन प्राप्तानां प्रख्योपाख्या विकासानां बलेन विच्छित्ति वलितं सौभाग्य भूषितं सरस्वती तत्त्वं भासयति। एवम्—

(i) प्रख्या वस्तु विशेषं प्रथयति।

(ii) उपाख्या वस्तु विशेषं सारयति।

(iii) प्रसरः वस्तु विशेषं भासयति।

एभिः प्रख्योपाख्या प्रसर रूपैः कारणैः प्रथन सारण भान रूपाणि कार्याणि क्रियन्ते ।

अभिनव गुप्तस्य मते प्रख्या प्रतिभायाः अपरा संज्ञा प्रतीयते । यतोहीयं अपूर्व नवोन्मिषितं वस्तु प्रथयति । जगत् कारण निरपेक्षं विस्मयप्लुतानि अनम्भमि कमल निर्माणादीनीव कार्याणि सम्पादयति । अतएव हि मम्मटस्य शक्ति तत्त्वेनास्य सम्वादः ।

उपाख्याऽपि—मम्मटाभिमत निपुणता तत्त्वेन सह सम्वादं भजते । यतो हि उन्मिषितमपि वस्तु लोकशास्त्रादि समुचित संज्ञानाभावे सनैपुण्य निरूपणेऽसुकरमिव प्रतिभाति । यद्युपाख्यया वस्तूपस्थापन कौशलमाधीयते तदा नूनमियं निपुणता ।

प्रसरोऽपि अभ्यास सम्वादी । यतो हि सतीभ्यामपि अभ्यास निपुणताभ्याम् वस्तु तत्त्वं नाञ्जस्येन उपस्थाप्यते । एवं यावत् प्रख्योपाख्योः यथापेक्षं प्रसरो नस्यात् तावत् सरस्वती तत्त्वं न भासते । एव प्रख्योपाख्या प्रसराणां शक्तिनिपुणताऽभ्यासै-रद्भुत तादात्म्यम् ।

एवम् —

अपूर्वं यद् वस्तु प्रथयति विना कारण कलां,
जगद् ग्राव प्रख्यं निजरस भरात् सारयति च ।
क्रमात् प्रख्योपाख्या प्रसर सुभगं भासयतितत्,
सरस्त्यास्तत्त्वं कवि सहृदयाख्यं विजयते ।।

(लो० १।१)

इति पद्यस्य छाया अधोलिखितयोरुभयोरपि पद्ययोः दृश्यते—

[1]नियतिकृत नियम रहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नव रस रुचिरां निर्मितिमादधती कवे र्भारती जयति ।।

(का० प्र० १।१)

[2]शक्ति निपुणता लोक शास्त्र काव्याद्यवेक्षणात् ।
काव्यज्ञ शिक्षयाऽभ्यास इति हेतु स्तदुद् भवे ।।

(का० प्र०)

अत्र वस्तु तत्त्व निरूपणे अथ च पद विन्यास क्रमे साम्यम् एवं द्रष्टुं शक्यते—

---

१. ध्वन्या लोक लोचन-मङ्गल श्लोकः ।

२. काव्य प्रकाश-मङ्गल श्लोकः ।

| लोचने | काव्य प्रकाशे |
|---|---|
| १. प्रख्या | शक्तिः |
| २. उपाख्या | निपुणता |
| ३. तयोः प्रसरः | अभ्यासः |
| ४. विना कारण कलाम् | नियतिकृत नियम रहिताम् |
| ५. अपूर्ववस्तु | ह्लादैकमयीम् |
| ६. जगद्ग्रावप्रख्यं निजरसभरात् सारयति | नवरस रुचिराम् । |
| ७. सरस्वत्यास्तत्त्वं कवि सहृदयाख्यं | कवेर्भारती । |
| ८. विजयते | जयति |

एवम् सरस्वती तत्त्व निरूपण प्रस्तावे अव्यय तत् कारण निर्वचन प्रसङ्गेऽपि तत्र भवतामभिनव गुप्त पादानां छाया रसादि स्थलानीव प्रतीयते ।

# पाणिनीय व्याकरणे केचन तद्धित प्रयोगाः

श्रीमती मनीषा पाठकः

(१) चाटकैरः—

चटकायाः एरक् इति सूत्रेण (४-१-१२८) चाटकैरः इति पदं चटकायाः अपत्यमित्यर्थे सिद्ध्यति। सूत्र-पठित 'चटकायाः' इति पदमाक्षिपन् वार्त्तिककारः 'चाटकैरः इति पदस्य (१) चटकायाः अपत्यम् (२) चटकस्यापत्यम् इति द्विविधां व्युत्पत्तिमाह। चटकस्यापत्यमित्यर्थे चाटकैर इति पदस्य निष्पत्तये 'चटकायाः इत्यस्य स्थाने' चटकस्य इति पाठः कर्तव्यः इति वार्त्तिकारस्याभिमतम्। अतएवाह वार्त्तिककारः 'चटकायाः पुल्लिङ्ग निर्देशः इति। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'' इति परिभाषया 'चटक पदेन चटकाया अपि ग्रहणसिद्धेः अर्थद्वयेऽपि चाटकैर इति पदस्य निष्पत्तिः शक्या कर्तुम्।

तदेवं वार्त्तिकोक्त्या प्रतीयते यत् चाटकैर इति पदं पाणिन्युत्तरकाले अधिकार्थबोधकं जातम्। पाणिनिस्तु 'चटका' इति स्त्रीलिङ्गविशिष्टपदादेव अपत्यार्थकेरक् प्रत्यये चाटकैर इति पदं साधु मन्यते। 'चटक' इति पुल्लिङ्गात् अपत्यार्थकतद्धितोत्पत्तिः पाणिनिना नोक्ता। सा तु कात्यायन-सम्मता। अनेन ज्ञायते यत् सूत्रकारस्य समये चटक-चटका इति पदद्वयमपि भाषायां प्रयोगार्हम्। अपत्यार्थक तद्धितवृत्तिस्तु केवल चटका पदादेव सम्भवति। तदुत्तरकाले यावत् वार्त्तिककारः समायाति उभावपि तद्धितवृत्तिमर्हतः स्म। अस्मिन् प्रकरणे सूत्रकारः एवंविधान्येव कतिपय तद्धित रूपाणि उदाहरति यत्र स्त्रीलिंगविशिष्टाः प्रकृतयः दृष्टिमायान्ति। तद्यथा—कौलटिनेयः (कुलटायाः अपत्यम् ४-१-१२७) गौधेरः (गोधायाः अपत्यम् ४-१-१२९) काणेरः, दासरः (काणायाः अपत्यम् दास्याः अपत्यम् ४-१-१३१) इत्यादयः।

कतिपयविशिष्टान्येव तद्धितरूपाणि स्त्रीलिङ्गप्रकृतिमूलानि पाणिनिना प्रतिपादितानि। अनेन प्रतिभाति यत् एवंविधाः स्त्रीलिङ्ग प्रकृतयः (यथा चटका, गोधा, कुलटा) भाषायां विशिष्टं पदं दधते। अथवा भाषायां एषां प्रयोगबाहुल्यं दृश्यते। चटकः गोधः इत्यादि—पुंल्लिग प्रयोगाणां न तथा प्रयोगः स्यात् यथा चटकादि स्त्री-

लिंगानाम् । अथवा अथवा तद्धितवृत्तिमभिलक्ष्य पुंल्लिगरूपाणां न तथा महत्वं यथा स्त्रीलिंगानाम् । 'चटका' इति स्त्रीरूपात् तद्धितोत्पत्तिं कुर्वता सूत्रकारेण इदमेव प्रकाशितम् । वार्त्तिककारस्य समये तद्धितोत्पत्तिदृष्ट्या चटक-चटका इति उभयोः तुल्यंमहत्वम् । य चाटकैर इति शब्दः पाणिनेः चटकायाः अपत्यम् 'इत्यर्थः बोधयति स्म स एव कात्यायनस्य चटकस्य चटकाया वा अपयत्म् इति अर्थद्वयबोधकं जातम् इति चाटकैर पदे अर्थविस्तारो जातः । पतंजलिरपि वार्त्तिकोक्तं स्वीकरोति । तदित्थं चाटकैरः इति पदं चटकाया अपत्यम् इति अर्थबोधकम् आपाणिनेः (पतंजलियावत्) पाणिन्युत्तरकाले तदैव चटकस्यापत्यम् इत्यर्थस्यापि बोधकं जातम् ।

(२) **चटका** —

'चटकायाः ऐरक्' इति सूत्रे (४-१-१२८) वार्त्तिककारः द्वितीयं संशोधनं कुर्वन्नाह 'स्त्रियामपत्ये लुक्' इति । चटकस्य चटकायाः वा अप यमित्यर्थे ऐरक् प्रत्ययमारभता वार्त्तिककृता स्त्रीरूपापत्ये विवक्षिते ऐरक् प्रत्ययस्य लुगादिष्टः तदेवं चटकस्य चटकायाः वा स्त्रीरूपमपत्यमित्यर्थे 'चटका' इति पदमेव साधु इति वार्त्तिकस्याभिप्रायः । सूत्रकारस्तु नैवं रूपां काचिद् व्यवस्थां करोति । अतः स्त्रीरूपापत्ये विवक्षिते किं पदं सूत्रकृदभिमतमिति विचारणीयम् ।

'कल्याण्यादीनामिनङ् (४-१-१२६) इत्यतः आरम्य क्षुद्राभ्यो वा' इति (४-१-१३१) सूत्रपर्यन्तं या षट्सूत्री पाणिनिना कृता, सर्वत्र स्त्रीलिङ्गाः एव प्रकृतयः उपदिष्टाः, तत एव प्रत्ययविधानं कृतम् । चटकाया ऐरक् इति विधानमपि तदन्तर्गतमेव । कल्याणी कुलटा—चटका—गोधा इत्यादिभ्यः स्त्रीलिङ्ग प्रकृतिकेभ्यः प्रत्ययविधानं तत्कालीन भाषायांतत् रूपाणां वैशिष्ट्यमावहति । 'चटका' इति पदं मन्ये पाणिनेः अर्थद्वयबोधकमासीत् । प्रथमं 'चटका' इति स्त्रीरूप विशिष्टस्य, द्वितीतं 'चटकायाः स्त्रीरूपापत्यस्यापि इति । कात्यायनो पि' चटकातः स्त्रीरूपापत्यबोधनाय तदर्थक प्रत्ययं कल्पयित्वा, तस्य च लुक् विधानेन पाणिन्यभिमतमेवार्थं द्रढयति ।

निष्कर्षतः 'चटका' इति पदं स्त्रीरूपापत्यस्यापि बोधकं पाणिनेः, कात्यायनस्य, पतंजलेश्च सम्मतम् ।

(३) **अविसोढम्—अविदूसम्—अविमरीसम्—**

पाणिनीय-सूत्र-पाठे सोढ-दूस-मरीसचः प्रत्ययाः नोपलभ्यन्ते । सर्वप्रथमं कात्यायनः अवि शब्दात् एतेषां विधानमाह, अवेर्दुग्धम् इत्यर्थे च अविसोढम्-अविदूसम्-अविमरीसम् इति रूपत्रयं साधु चकार । नैतेषां तद्धितरूपाणां क्वचित् प्राचीन वाङ्मयेऽपि प्रयोगः उपलभ्यते । सूत्रेऽनुक्तः कश्चित् प्रयोगः वार्त्तिके समुपलभ्यमानः सूत्रोत्तरकालिकम् भाषा विकासं प्रकाशयति । अविसोढम् इत्यादयः सूत्रेषु अनुक्ताः प्रयोगा अपि वार्त्तिकसमकालिको विकासः आहोस्वित् पाणिनिना अनवधानतया सूत्रेषु अनुक्ता इति विचार्यमाणे इदं प्रतिभाति यत् वार्त्तिकोक्ताः एते तद्धित— प्रयोगाः न शिष्टप्रयुक्त

भाषातः गृहीताः । तदानीन्तनेषु जनपदीयप्रयोगेषु दृश्यमानाः प्रयुज्मानाः च एते प्रयोगाः कात्यायनेन व्युत्पादिताः । शिष्टप्रयुक्तभाषायाः व्याकरणं विधीयतः पाणिनेः नैतादृशः प्रयोगाः लक्ष्यभूताः । वार्त्तिके एतादृशानांव्युत्पत्तिं दृष्ट्वा प्रतीयते यत् पाणिन्यनन्तरं जनपदीयशब्दा अपि क्वचित् शिष्टेषु प्रयोगार्हाः सम्भूताः अतः कात्यायनेन व्याकरणे संस्कारिता. ।

अविशब्दात् दुग्धार्थे विधीयमानाः सोढ-दूस मरीसचः न मूलतः प्रत्ययरूपा एव । प्रथममेते शब्दाः दुग्धार्थवाचकाः स्वतंत्रप्रकृतिरूपाः भवेरन् । भाषासु परिक्षीयमाण एतं कालक्रमतः प्रत्ययरूपतां संप्राप्य अविशब्दात् संश्लिष्टाः ।

पाणिनेः एते शब्दाः संस्कृतभाषायां सम्मता न वेति विषये निर्णयमधिगन्तुं न कश्चित् प्रामाणिकः आधारः । शिष्टेषु अप्रयुज्मानत्वात् सूत्रेषु अनुक्तिरिति प्रथमः कल्पः । अथ शिष्टप्रयुक्ता अपि यदि पाणिनिः नैतेषाम् प्रकृति-प्रत्ययरूपां व्युत्पत्तिं प्रदर्शयन्ति-तदपि पाणिनेः सिद्धान्तानुकूलमेव यतः अविशब्दात् सोढ-दूस-मरीसच् प्रत्ययान् उपदिश्य नान्यत् किमपि प्रयोजनं सूत्रकारस्य सिद्ध्यति । सोढादयः प्रत्ययाः नान्यत्र क्वचिदपि उपलभ्यन्ते अतः अविसोढम् इत्यादिपदत्रयार्थमेव प्रत्ययत्रयकल्पनं पाणिने अन्याय्यम् । "नैकं प्रयोजनं योगारम्भं प्रयोजयति" इति नियमानुसारं पाणिनिः अविसोढम् इत्यादीनाम् व्युत्पत्तिमकुर्वन्नपि न स्वकीये शास्त्रे किमपि न्यूनतां जनयति ।

(४) मातामहः—पितामहः—

"पितृव्यमातुलमातामहपितामहाः" (४-२-३६) इति सूत्रे पठितेषु निपातनेषु कात्यायनः प्रकृति-प्रत्यय विभागं प्रदर्श्य पितृव्यादीनाम् व्युत्पत्तिं करोति । तत्र मातामह पितामह शब्दयोः मातृ-पितृ शब्दयोः तयोः पितरि विवक्षिते डामहच् प्रत्ययः वार्त्तिके उपदिष्टः । तदुक्तं "मातृपितृभ्यां पितरि डामहच्" इति । सूत्रोक्त शब्दानामेव व्युत्पत्तिं कुर्वता वार्त्तिककारेण भाषिक विकास दृष्ट्या न किमपि नावीन्यमाविष्कृतम् । यतः सूत्रे उक्तत्वात् पाणिनेः तत्रसम्मतिः वार्त्तिके निष्पन्नत्वात् वार्त्तिककारस्यापि तदभिमतत्वं निश्चितम् । अथापि सूत्रकारः मातामह-पितामहयोः व्युत्पत्तिमकुर्वाणः निपातनं करोति, वार्त्तिककारस्तु तत्र प्रकृति प्रत्ययात्मकं विभागं प्रदर्शयति । अन्यत्रापि कतिपयेषु पाणिनीय-निपातनेषु कात्यायनस्य इयमेव प्रवृत्तिः । पितृव्य मातुल (४-२-३६) आगवीनम् (५-२-१४) हैयंगवीनम् (५-२-२३) इत्यादयः केचन निपाताः तद्धित-प्रकरणे सूत्रेषु दृश्यन्ते यत्र स्पष्टार्थप्रतीतये प्रकृतिप्रत्ययविभागः वार्त्तिकेषु कृतः । एते वार्त्तिकाः सूत्रसिद्धार्थान् एव स्पष्टीकरणाय आरब्धाः ।

पाणिनिः मातामह-पितामह शब्दयोः प्रकृतिप्रत्ययविभागापेक्षया निपातनमेवोचितं मन्यते यतः मातृ-पितृ शब्दयोः माता-पिता-इत्येवं रूपे समासेषु नोपलभ्येते । सर्वत्र मातृ-पितृ शब्दयोः अन्येन समस्यमाने मातृ पितृ-इत्येवं रूपे स्तः । केवलं पुत्र शब्देन समस्यमाने मातापुत्रौ, पितापुत्रौ इति रूपद्वयं वार्त्तिककारेणोक्तम् (६-३-२५)

वैदिक वाङ्मयेपि पितापुत्रौ इति एकमात्रं प्रयोगं वर्जयित्वा क्वचिदपि पितृ शब्दस्य पिता इति रूपं समासेषु न दृश्यते। (अथर्ववेदे—६-११२-२, शतपथब्राह्मणे—१३-२-४-४ च पितापुत्रौ इति प्रयोगः कृतः।) तदेवं मातृ-पितृ-शब्दयोः समासेषु माता-पिता-इति रूपेण प्रयोगदौर्लभ्यं वीक्ष्य केवलं मातामह पितामह-इत्यनयोः निष्पत्तये प्रकृति-प्रत्यय कल्पनं सूत्रकारेण वर्जितम्। यदि एतादृशः प्रयोगाः (मातृ-पितृ शब्दयोः समासेषु माता पितेति रूपमापद्यमानाः) अन्यत्रापि समुपलभ्येरन् तर्हि सूत्रकारोऽपि निपातनापेक्षया वार्त्तिकानुसारं व्युत्पत्तिं प्रदर्शयेत।

तदित्थं मातामह-पितामह शब्दौ पाणिनेः पतंजलिं यावत् भाषायां प्रयुज्यमानौ-आस्ताम्। वैदिक वाङ्मये पितामह शब्दस्य प्रयोगः दृश्यते। (अथर्ववेदे ५-५-१, ६-५-२०, ११-१-१६, १८-४-३५, तैत्तिरीयसंहितायाम् १-८-५-१, ७-२-७-३, वाजसनेयि संहितायाम्—१६-३६, शतपथब्राह्मणे ५-५-४) पाश्चात्यविदुषा डेल्ब्रुक महाशयेन "पितामह" शब्दस्य पिता-महान् इति व्युत्पत्तिः कृता। (द इंडोजर्मानिश्शन फेरवान्द्स्शाफ्तस् नामन ४७३, ४७४, ४८०) मातामह शब्दस्तु वैदिकसाहित्ये नोपलभ्यते। वस्तुतः "पितामह" शब्दस्य सादृश्यात् "मातामह" शब्दो पि भाषायां गृहीतः, वेदोत्तरवाङ्मये च प्रयुक्त इति प्रतीयते।

(५) वात्या—

"तस्य समूहः" (४-२-३७) इति सूत्र प्रकरणे पाणिनिः पाशादिभ्यः शब्देभ्यः य प्रत्ययो विधत्ते (पाशादिभ्यो यः ४-२-४६) भाष्यकारः पतंजलिः अत्र पाशादिगण-पठितान् शब्दान् उद्धरति—पाश—तृण—धूम—वात—इति। एषु "वात" शब्दस्य तद्धितरूपमभिलक्ष्य वार्त्तिककारस्य अभिमतमपि भाष्ये विवेचितम्। वात शब्दात् समूहार्थे य प्रत्यये निष्पन्नो "वात्या" इति प्रयोगः न वातानां समूह इत्यर्थमाह। यतः वातपरमाणूनामनेकत्वेपि वातसंज्ञकस्य अवयविनः एकत्वात् 'वातानाम् समूह' इति कथनमनुपपन्नम् इति वार्त्तिककारस्याशयः। सामूहिके वात्या शब्दस्य निष्पत्त्यपेक्षया शीघ्रत्वे तदुपपत्तिःकात्यायनस्येष्टा। अतएवाह कात्यायनः पृथग्वातादर्शनादसमूहः 'शीघ्रत्वे' तु इति। तदेवं कात्यायनस्य मतानुसारं-वात्या इति पदं 'शीघ्रो वातः इत्यर्थे-निष्पाद्यम्। सूत्रकारस्तु 'वातानां समूहः' इत्यर्थे तद् साधयति। सूत्रवार्तिकयोः विवदमानयोः भाष्यकारः सिद्धान्तमतं प्रस्थापयन्' सूत्रकृत् व्युत्पत्तिमेव अनुकरोति। तदुक्तं भाष्यकृता अथवा पृथग्वाता अपि दृश्यन्ते। तद्यथा-पूर्वो वातः उत्तरो वातः, सर्वतो वातः, वाता वान्तु दिशोदश इति। भाष्योक्तेषु उद्धरणेषु वातानां पृथक्त्वेन बोधो जायते। यथा एकाऽपि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेका व्यपदिश्यते तथैव एकस्यापि वातस्य दिग्भेदनिमित्तभेदप्रतिभासादनेकाश्रयसमूहोपपत्तिः।

सिद्धान्ततः वातानां समूह इत्यर्थे वात्या इति प्रयोगो नाव्यवहारिकः वार्तिक-कारस्तु 'वात्या' इति प्रयोगं वातस्य शीघ्रतां बोधयितुं प्रयुनक्ति। वस्तुतः 'वात्या'

इति पदस्य सूत्रवार्त्तिक-प्रतिपादितयोः अर्थयोः तावन्मात्रमेव अन्तरम् यावत् हिन्दी भाषायां (१) हवाएं चल रही हैं। (२) हवा तेज चल रही है' इति वाक्यद्वयाभिव्यंजितार्थयोः । लोके उभयोरपि प्रयोगा दृश्यते। सूत्रसिद्ध वात्या इति पदेन आद्याभिव्यक्तिर्जायते। वार्त्तिककारस्तु अपरार्थे तद् व्युत्पादयति। भाष्यकाराय सूत्रकृत्व्युत्पत्तिः रोचतेतराम्।

# आनन्दवर्धनाभिमतं काव्यात्मत्वम्

**महोपाध्यायः—सु-नीलकण्ठशास्त्री । अनन्तशयनम् ।**

काव्यालङ्कारसूत्रप्रणेता वामनः 'रीतिरात्मा काव्यस्येति' सूत्रे इदंप्रथमतया-लङ्कारशास्त्रविषये आत्मशब्दं प्रयुञ्जानो विशिष्टा पदरचना रीतिः, विशेषो गुणात्मा' इति सूत्राभ्यां गुणानामात्मत्वमङ्गीकृतवान् दृश्यते ।

आनन्दवर्धनोऽपि—

'योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ।।'

इति कारिकायाम् आत्मशब्दं प्रयुक्तवान् ।

'यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः । अर्थसम्प्रत्ययाच्च व्यवहारः' (वात्स्यायन भाष्यम् ।) यावन्तोऽर्था यावदर्थं, प्रत्यर्थं नामधेयशब्दा इति यावत् । अनेनार्थवानेव शब्दः शब्दशब्दाभिधेय इति ज्ञायते । शब्दस्यार्थस्य च सम्बन्धः शक्तिः । सा च तत्तत्पदजन्यबोधविषयत्वप्रकारकत्वविशिष्टेच्छा । तत्तत्पदानां तत्तदर्थे सङ्केतितत्वात् पृथगवस्थितानि पदानि तं तमर्थं बोधयन्तीति वाचकत्वमेव पदानाम् । पदान्तर-समभिव्याहारे तु यत्र मुख्यार्थस्य समभिव्याहृतपदान्तरार्थेन साकम् अन्वयस्य तात्पर्यस्य वा बाधे सति विवेचकत्वादिना, सामीप्यादिना वा सम्बन्धेन रूढितः प्रयोजनाद् वा मुख्यार्थ सम्बद्धस्यार्थान्तरस्य बोधो लक्षणया भवति । कर्मणिकुशल इत्यादौ दर्भग्रहणाद्य-योगाद् वाच्यार्थस्य बाधे विवेचकत्वादिना सम्बन्धेन, रूढितः (प्रसिद्धेः) समर्थ इत्यर्थस्य प्रतीतिः लक्षणया भवति । सेयं निरूढलक्षणेत्युच्यते । अनादितात्पर्यविषयीभूता लक्षणा निरूढलक्षणा । एवं गङ्गायां घोष इत्यादौ गङ्गा शब्दमुख्यार्थस्य प्रवाहस्य घोषपदार्थेन साकमन्वयस्य बाधे, सामीप्यसम्बन्धेन गङ्गातीर रूपार्थस्य लक्षणया बोधो जायते । गङ्गातटे घोष इत्यादेर्वाचकशब्दस्य प्रयोगे स्वायत्ते किमित्यवाचकं प्रयुञ्जीतेति चेत्शैत्यपावनत्वादेर्व्यङ्ग्यार्थस्य प्रतीतिर्लाक्षणिक शब्दप्रयोगेणैव हि सम्भवति । अत एव व्यङ्ग्यार्थप्रतिपिपादयिषया लाक्षणिक शब्दप्रयोगे कवीनां नैर्भर्यम् । इत्थं वाच्य-लक्ष्यव्यङ्ग्यभेदेनार्थस्य त्रैविध्यसम्भवात् तदनुरोधेन शब्दस्यापि वाचकत्वं, लक्षकत्वं व्यञ्जकत्वं च सम्पद्यते ।

यथा आत्मनो भोगायतने शरीरे आत्मनः समावेशेन चैत्रमैत्रादिव्यवहारो जायते, तथा वर्णसमुदायात्मक शब्दरूपे शरीरस्थानीये आत्मस्थानीयस्यार्थस्य सन्निवेशेनैव स शब्दशब्दव्यवहारविषयो भवति । बाह्यप्रत्यक्षाविषयस्यात्मनो यथाशरीरावच्छेदेन 'अहं' प्रत्ययविषयत्वं, तथा बाह्यप्रत्यक्षाविषयस्य (मानसप्रत्यक्षविषयस्य) शब्दार्थस्य शब्दरूपं शरीरस्थानीयमाश्रित्यैव प्रमातृज्ञानविषयत्वम् ।

अयमाशयः—आत्मनो भोगायतनं शरीरम् । शरीरावच्छिन्नात्मनि भोगो जायते । यथा चैत्रात्मनो भोगायतनं तच्छरीरं, तदवच्छेदेन 'अहं सुखी' त्यादिकं तस्य ज्ञानं भवति । तथा अर्थस्यापि स्वनामधेयशब्दावच्छेदेनैव प्रमातृज्ञानविषयत्वं, शब्दस्य स्वशक्यार्थायतनत्वं च विद्यत इति शरीरस्थानीयत्वं शब्दस्य आत्मस्थानीयत्वमर्थस्येतिच वक्तुं युक्तम् । न तु मुख्यम् आत्मत्वमर्थस्य, मुख्यं शरीरत्वं शब्दस्येति च स्पष्टम् । इदं पृथक्पदविषयकम् ।

वस्तुतस्तु—शब्दः श्रवणेन्द्रियसन्निकृष्टेन मनसा प्रमातुरात्मनि तत्सङ्केतितस्यार्थस्य ज्ञानं जनयति । अतः प्रमातुरात्मनो ज्ञानाधिकरणत्वं, शब्दार्थयोस्तु प्रमातृज्ञानविषयत्वमेवेति ज्ञानविषयस्य ज्ञानाधिकरणत्वरूपं मुख्यमात्मत्वं नास्त्येव । यद्यपि ज्ञानविषयत्वस्य केवलान्वयित्वाद् ज्ञानाधिकरणस्यात्मनोऽहमितिज्ञानविषयत्वं तथापि ज्ञानविषयाणामितरेषां ज्ञानाधिकरणत्वरूपं मुख्यमात्मत्वं दुरुपपादम् । अतः काव्यात्मेतीत्यत्र आत्मशब्दं प्रयुक्तवतः, आत्मा सारभूतोऽर्थ इति व्याख्यातवतश्चानन्दवर्धनस्यैतदभिप्रायकत्वमेवेति स्फुटं प्रतिभाति ।

वाक्यं तु पदसमूहः । ('तिङ्सुबन्त चयोवाक्यम्' इत्यमरः ।) विवक्षितस्यार्थस्य परप्रतिपत्तावभीप्सितायां तदर्थावबोधकानि पदानि प्रयुज्यन्ते । तानि च वृत्त्या तत्तदर्थान् बोधयन्ति ततश्चाकाङ्क्षायोग्यतासन्निधिवशाद् विशिष्टवैशिष्ट्यावगाहिवाक्यार्थज्ञानं जायते । अतो वाक्यं वाचकं, तात्पर्यं (तत्प्रतीतीच्छयोच्चरितत्वं) व्यापारः, वाक्यार्थबोधः फलं च भवति । एतेन वाक्यस्थितानि पदान्येव वाचकानि, वाक्ये तु विशिष्टे न सङ्केतः (शक्ति) अत एव न लक्षणापि । उक्तं च—अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानाम् अर्थानामाकाङ्क्षादिभिः परस्परमन्वयमभिहितान्वयवादिनो वदन्ति' इति । तस्य च सहृदयश्लाघ्यस्यार्थस्य प्रतिपादकः शब्दः काव्यम् । अत्रत्यशब्द शब्दो वाक्यपरः । ('शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणेध्वनौ' इतिहैमः ।) तस्यैव काव्यत्वात् । अतः सुकविप्रयुक्तं वाक्यं (काव्यात्मकं) वाचकत्वव्यापारेण तद्घटक शब्द शक्यानतिरिक्तं सहृदयश्लाघ्यमर्थं बोधयति । क्वचिच्च वाक्यम् उक्तरीत्या वाक्यार्थबोधजननद्वारा अङ्गनासु निखिलावयवव्यतिरेकि लावण्यमिव वाक्यघटकेनैकेनापि पदेनानभिधेयं प्रतीयमानं वस्तु (माधुर्यादिकं) प्रकाशकत्वव्यापारेण प्रकाशयति । इत्थं च काव्यार्थो वाच्यो व्यङ्ग्यश्चेति द्विविधः । 'योऽर्थः सहृदयश्लाघ्यः काव्यात्मे'तीत्यत्र आत्मशब्दस्य सारभूतोऽर्थं इत्येवार्थः । अत्र प्रमाणं तु—'काव्यस्य ललितोचितसन्निवेशचारुणः शरीरस्येव आत्मा साररूपतया स्थितः सहृदयश्लाघ्यश्च योऽर्थः तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ" इत्यानन्दवर्धनवचनमेव । शरीरस्यात्मेव, शरीरस्येव काव्य-

रूपस्य शब्दसन्दर्भस्य सारभूतोऽर्थइति स्फुटतया व्याख्यानात् । सारभूत इत्यस्य, यस्य काव्यस्य काव्य व्यपदेशो यदर्थनिबन्धनः स तत्र सारभूत इत्यर्थः । यथा—कमलमिव मुखं मनोज्ञमेतदित्यत्र उपभावाचकेनेवशब्देन बोध्यस्य सादृश्यस्योपमालङ्कारस्य वाच्यत्वेन तस्य काव्यव्यपदेशो वाच्योपमालङ्काराधीन इति स एव तत्र सारभूतः । एकस्मिन् काव्ये वाच्यो व्यङ्ग्योऽप्यर्थो यदा विद्येते तत्र प्राधान्यव्यवस्था किन्निबन्धनेति जिज्ञासायामुपस्थितायाम् आनन्दवर्धन एवाह—"चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यव्यवस्था" इति । उत्तमकाव्ये व्यङ्ग्यस्य प्राधान्यात् सोऽर्थः सारभूतः । तस्य काव्यचारुत्वोत्कर्षहेतुत्वम् । गुणीभूतव्यङ्ग्ये व्यङ्ग्यापेक्षया वाच्यस्यैव काव्यचारुत्वोत्कर्षहेतुत्वम् । उभावप्यर्थौ सहृदयश्लाघ्यौ च । व्यङ्ग्यस्याविवक्षितत्वेनास्फुटत्वेऽपि शुद्धस्य वाच्यस्यापि स्वभावोक्त्यादिना काव्यचारुत्वोत्कर्षहेतुत्वं सहृदयश्लाघ्यत्वं चास्तीति ध्वन्यालोकस्य चतुर्थोद्योते तेन सुनिपुणं निरूपितम् । काव्यं च उत्तमं गुणीभूतव्यङ्ग्यं चित्र चेति त्रिधा विभज्य प्रदर्शितम् । इत्थं च योऽर्थः काव्यस्य सारभूतः सहृदयश्लाघ्यश्च व्यवस्थितस्तस्य वाच्यप्रतीयमानाख्यौ द्वौ भेदौ-इत्यतिपरिस्फुटप्रतीतिविषयार्थकतया सहृदयश्लाध्यवाच्यप्रतीयमानान्यतरार्थ विषयकबोधजनक शब्दः काव्यम्" इति काव्यसामान्यलक्षणमनया कारिकयानन्दवर्धनेनाभिहितमित्यवगम्यते । अग्रे,

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः सध्वनिरिति सूरिभिः कथितः ॥"

इति काव्यविशेषलक्षण कथनाच्चेदं सुव्यक्तं भवति । अतः काव्यसारभूतार्थत्वरूपं काव्यात्मत्वं वाच्यप्रतीयमानयोरुभयोरप्यविशिष्टम् ।

तत्र सहृदयश्लाघ्यः काव्यस्य सारभूतो बाच्यार्थो वस्त्वलङ्कारात्मना द्विविधः । वस्तुरूपो यथा—

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्प व्यतिरिक्तमस्त्रं बाल्यात् परं साथ वयः प्रपेदे ॥

कुमार सम्भवे वर्ण्यमानं पार्वत्याः कौमारावस्थाविर्भावरूपं वस्तु काव्यस्य सारभूतोऽर्थः ।

अलङ्काररूपो यथा—

सर्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्नाद्
एकस्थसौन्दर्यदिदृक्षयेव ॥

अत्रैकस्य सौन्दर्यदिदृक्षाया अहेतोर्हेतुभावेन सम्भावनया हेतूत्प्रेक्षारूपः सहृदय श्लाघ्यो वाच्योऽलङ्कारः सारभूतोऽर्थः ।

तथा प्रतीयमानश्च सारभूतः काव्यार्थो वस्त्वलङ्काररसात्मना त्रिविधः । वस्तु-रूपो यथा—

राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम् ।
बाले वारय पान्थस्य वासदानविधानतः ॥

अत्र उपभोगं देहीति वस्तु व्यज्यते । यद्यप्ययमर्थ 'उपभोगं देहीति शब्दसमुदाये-नाप्यभिधातुं शक्यं, तथापि नृपति चन्द्र रूपोभयार्थं शक्तस्य राजपदस्य द्वितीयया शक्त्याभिहितेन चन्द्ररूपार्थेनोपश्लिष्टाद् वाक्यार्थात् प्रतीयमानस्यार्थस्य सारभूतत्वेन वस्तुनो व्यङ्ग्य त्वम् ।

अलङ्काररूपो यथा—

करतलनिर्गलदविरलदानजनोल्लासितावनीवलयः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥

इत्यत्र नानार्थस्य सार्वभौमशब्दस्य श्रवणेन तद्वाच्यानां सर्वेषामप्यर्थानामुपस्थितौ प्रकरणादिना तज्जन्यतात्पर्यज्ञानेन वा चक्रवर्तिरूपस्य प्रकृतार्थस्य बोधानन्तरं करदान-धनदादिशब्दसन्निधानेन स्मृतिविषयस्य दिग्गजरूपस्य द्वितीयस्यार्थस्यापि तत्पदसङ्केतित-त्वात् तस्यापि बोधो जायते । ततः सम्राजो दिग्गजसादृश्यरूप उपमालङ्कारो व्यज्यत इत्यालङ्कारिकसमयः । सच सादृश्यवाचकशब्दाभावाद् अनेकार्थ शब्द प्रयोगात्मकस्य कविव्यापारस्य महिम्ना प्रतीयत इत्यभ्युपगम्यते । सोऽपि प्रतीयमानार्थप्रकाशकत्वरूपो व्यापारः शब्दनिष्ठ एव । किञ्च, दिग्गज इव सम्राड् जयतितरामिति शब्दसन्दर्भेणापि सादृश्यमभिधातुं शक्यमिति उपमादीनामलङ्काराणां वाच्यत्वमपि सम्भवति ।

रसादिरूपो यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

अत्र लीलाकमलपत्रगणनरूपस्यानुभावस्य वाच्यत्वेन तद्वारा अवहित्थाख्यः सञ्चारिभावो व्यज्यत इति अवहित्थात्मकस्य भावस्य सारभूतत्वेन तन्निबन्धनः प्राधा-न्यव्यपदेशः ।

एवं वाच्यवस्त्वलङ्कारयोः, व्यङ्ग्य वस्त्वलङ्काररसादीनां च तत्तत्स्थलानुरोधेन, चारुत्वहेतुत्वेन सहृदयश्लाघ्यत्वेन च प्राधान्यं प्रतिपादितम् ।

प्रतीयमानस्यार्थस्य काव्यघटकपदवाच्यत्वाभावेऽपि तस्मादेव काव्यात् यतः प्रतीतिविषयो भवति ततो यत्र तादृशार्थस्य प्राधान्यं तत्र तस्यापि काव्यसारभूतार्थ-

स्वरूपं काव्यात्मत्वमस्तीति प्रतिपादयितुम् उद्युक्तस्यानन्दवर्धनस्याभिमतं मतमिदानीं प्रकाश्यते ।

प्रतीतपदार्थको लोकेध्वनिः शब्द इति वैयाकरणैरङ्गीकृताम् अर्थवतः शब्दस्य ध्वनिसंज्ञा सहृदयश्लाध्यार्थप्रतिपादक शब्दसन्दर्भात्मकस्य काव्यस्य समुचितां मन्वानो-ऽङ्गीकृतवान् आनन्दवर्धनः । व्युत्पत्तिभेदेन ध्वनिशब्दो व्यञ्जकस्य शब्दस्य, व्यञ्जक-स्यार्थस्य, व्यञ्जनाव्यापारस्य, व्यङ्ग्यार्थस्य, व्यङ्ग्यार्थप्रधानस्य काव्यस्याप्यभिधायक-त्वेन प्रसिद्धः । ध्वनेरर्थस्य सम्यक् प्रतिपादनेन आनन्दवर्धनोऽपिध्वनिकार इति प्रसिद्धि-मुपगतः । तद्विरचितस्य ध्वन्यालोक इति ग्रन्थस्य नाम्नि ध्वनिशब्दः प्रतीयमानार्थपरः । तस्यालोको यथासहृदयहृदये प्रकाशेत तथाध्वनिर्निरूपितः । तत्र प्रथमतया—

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व—
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेनब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम् ।।

इति ध्वनिस्वरूपनिरूपणं चिकीर्षितं प्रतिज्ञायते । ध्वनिनिरूपणस्य प्रयोजनं सहृदयमनः प्रीतिः । अधिकारी, भट्टोद्भटादिभिः पूर्वैरलङ्कारशास्त्रकारैः सम्यङ्निरू-पितस्यवाच्यस्य तत्त्वमधिगतवान् ध्वनितत्त्व जिज्ञासुः ।

कोनामध्वनिः, यस्य निरूपणं प्रतिज्ञायत इति प्रश्नं समाधित्सुराह—

योऽर्थः सहृदयश्लाध्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौस्मृतौ ।। इति ।

सहृदयश्लाध्यः काव्यस्य सारभूतोऽर्थो वाच्यः प्रतीयमानश्चेति द्विविधः । तत्र प्रतीयमानो ध्वनि संज्ञकः ।

वाच्योऽर्थः कुतो न निरूप्यत इति जिज्ञासायामाह—

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ।।
भट्टोद्भटप्रभृतिभिस्ततो नेह प्रतन्यते ।। इति ।

ध्वनिस्तु नास्ति, भाक्तः, अनाख्येय इत्यादिवादैः विप्रतिपत्तिग्रस्त इत्यतो मया निरूप्यत इति वदतानन्दवर्धनेन तन्निरूपणं चिकीर्षितम् । किं ध्वनिसंज्ञितोऽर्थोवाच्या-दन्यः ? प्रतीयमानं पुनरन्यदेव वस्तु । स किमस्ति ? अस्ति । कुत्र ? वाणीषु महाकवी-नाम् । किमिव ? प्रसिद्धावयवातिरिक्तमङ्गनासु लावण्यमिव । स कथं सहृदयसंवेद्यः ? काव्यरूपं शरीरस्थानीयम् आश्रित्यैव । तत्र को दृष्टान्तः ? इतिहास एव । क्रौञ्चगतः शोकः सहृदयदहृये वासनारूपेणावस्थितस्य शोकस्योद्बोधनाय करुणरसव्यञ्जक विभावा-नुभाववाचकशब्दसन्दर्भात्मकेन ।

मानिषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।

इति श्लोकरूपेणादिकवेर्वदनादुद्भूतः । तस्य काव्यस्य श्रवणात् सहृदयेनास्वाद्यमानः प्राग्विनिविष्टवासना रूपः शोकः करुणरसव्यपदेशविषयो भवति । अत एवाह --

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।। इति ।

सः ध्वनिसंज्ञितोऽर्थः, काव्यस्यैवात्मा सारभूतोऽर्थः, (काव्यार्थं एव) यतः सोऽपि काव्यात्मक शब्दसमुदायादेवावगम्यते । तथाच क्रौञ्चद्वन्द्ववियोगोत्थः शोकः क्रौञ्चगतः सहृदयसंवेदनाय वाल्मीकेर्वदनात् श्लोकरूपेण प्रादुर्भूत इति कारिकार्थः ।

एवं च वाच्यस्य काव्यसारभूतार्थत्वरूपं काव्यात्मत्वं पूर्वैर्भट्टोद्भटादिभिरुपवर्णितम् । ध्वनेश्च तादृशं काव्यात्मत्वं मया च प्रतिपादितमिति वदत आनन्दवर्धनस्य काव्यसारभूतार्थत्वरूपं पारिभाषिकं काव्यात्मत्वं वाच्यप्रतीयमानयोरुभयोरप्यर्थयोरित्येवानन्दवर्धनस्याभिमतमित्यवगम्यते ।

एवं स्थिते योऽर्थः सहृदयश्लाघ्य इति कारिकाया व्याख्यानावसरे लोचनकारेण यदुक्तं—'तुल्येऽर्थरूपत्वे किमिति कस्मैचिदेव सहृदयाः श्लाघन्ते । तद् भवितव्यं तत्र केनचिद् विशेषेण । यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वाद् आत्मेति व्यवस्थाप्यते । वाच्यसंवलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते, चार्वाकैरिवात्मपृथग्भावे ।

अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधाय अपोद्धारदिशा तस्य द्वौ भेदावंशौ इत्युक्तम् । न तु द्वावप्यात्मानौ काव्यस्येति—"तत् कथं सङ्गच्छत इति सुधीभिर्विभावनीयम् ।

पूर्वोक्तरीत्या वाच्यप्रतीयमानयोरुभयोरपि सहृदयश्लाघ्यत्वस्यातिपरिस्फुटप्रतीयमानतया कस्मैचिदेव सहृदयाः श्लाघन्त इत्यनुपपन्नम् । ध्वनिकाव्ये प्रतीयमानस्य, गुणीभूतव्यङ्ग्ये चित्रे च वाच्यस्यैव च सहृदयश्लाघ्यत्वेनोभयोरपि काव्यार्थत्वसम्भवात् । यथा चार्वाकाः शरीरातिरिक्तमात्मानं न सहन्ते, तथा वाच्यातिरिक्तस्य व्यङ्ग्यस्य पृथग्भावं न सम्मन्यन्ते केचिदिति यदुक्तं तदपि न सङ्गच्छते । विप्रतिपत्तिनिरसनपूर्वकं ध्वनेः समर्थितत्वात् । अर्थं इत्येकतयोपक्रम्येत्याद्यर्थकथनमपि न व्याख्यासरणिः । वाच्यव्यङ्ग्ययोरुभयोरपि मुख्यमात्मत्वं न भवतीत्यत उभयोरपि आत्मत्वाभावात् कथं द्वावप्यात्मानौ काव्यस्येति लोचनकारस्य भीतिलेशस्यापि नावकाशः ।

एवं च काव्यसारभूतार्थत्वरूपं पारिभाषिकं काव्यात्मत्वं (काव्यार्थत्वपर्यवसन्नं) वाच्यप्रतीयमानयोरुभयोरप्यर्थयोरित्यानन्दवर्धनस्याभिमतमिति स्पष्टं प्रतिभाति ।

# "अभिहितान्वयवादान्विताभिधानवादयोर्विवेचनम्"

श्री आद्याचरण झा

संस्कृतसाहित्ये शाब्दबोध प्रकरणमतिजटिलं कठिनं च वर्तते। व्याकरणे न्याये मीमांसायां च पृथक्-पृथक् विस्तृत रूपेण शाब्दबोधस्य विचारः कृतः। एतेषां त्रयाणां शास्त्राणां गम्भीर परिशीलनेन विवेचनेन च यथार्थतः शाब्दबोध ज्ञानस्य संभवम्। एतेषु व्याकरण शास्त्रं पदार्थस्य विवेचकत्वेन "पदशास्त्रेणाभिधीयते।" प्रमाणस्य विवरणेन विश्लेषणेन च "न्यायशास्त्रं" प्रमाणशास्त्रेणाभिधीयते। वाक्वार्थशैली विवेचनेन च मीमांसाशास्त्रं वाक्यशास्त्र शब्देन बोध्यते। एतेषु शास्त्रेषु पारङ्गतान्विदुषः "पद वाक्य प्रमाण पारावारीणाः" इति कथयन्ति।

अलङ्कार शास्त्रस्य कस्मिन्नपि मूर्धन्य ग्रन्थे यत्रवाक्यार्थस्य प्रकरणं समागतं तत्र प्रोक्तानां शास्त्रत्रयाणां चर्चा अवश्यमेव येन केनापि प्रकारेण वर्तत एव। एवं प्रकारेण काव्यप्रकाश ध्वन्यालोक रसगङ्गाधर साहित्य दर्पणादिग्रन्थेषु एतस्य चर्चा समायाता। एतेषु ग्रन्थेषु वाच्यार्थलक्ष्यार्थ व्यङ्ग्यार्थानां विस्तृता विवेचना अस्ति। काव्यप्रकाशकारेण मम्मटेन लिखितं यत् "स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।" एतदतिरिक्तं तात्पर्यनामकोऽपरोऽप्यर्थो जागर्ति। तत्र मम्मटेन टिप्पणी कृता यत् "आकाङ्क्षा योग्यता सन्निधि वशाद्वक्ष्यमाणानां पदार्थानां समन्वये तात्पर्यार्थो विशेष वपुरपदार्थोऽपि वाक्यार्थःसमुल्लसतीति अभिहितान्वयवादिनां मतम्। वाक्य एव वाक्यार्थः इत्यन्विताभिधानवादिनः।।

मम्मटस्य पंक्तिरियंजटिला, एतएव सर्वप्रथममस्याः पंक्तेः विश्लेषणेनैव अभिहितान्वयवाद्यन्विताभिवादिनोः मतं ज्ञातुं शक्यम्। अस्याः पंक्तेरयमाशयो विद्यते। "वक्ष्यमाण स्वरूपाणां पदार्थानामाकाङ्क्षा योग्यता सन्निधि वशात् समन्वये अपदार्थोऽपि विशेषवपुः तात्पर्यार्थोवाक्यार्थः समुल्लसति।" इति अभिहितान्वय वादिनः तात्पर्यम्।

एतद्विपरीतं मीमांसकः प्रभाकर स्तन्मतानुयायिनश्चातिरिक्त रूपेण तात्पर्यार्थं न स्वीकुर्वन्ति । अतएव तेऽन्विताभिधानवादिनः । शब्दद्वयस्य स्पष्टार्थ विवेचनानन्तरमेव अग्रे विचारो भवितुमर्हति ।

(क) अभिहितस्य-कथितस्य परस्परमन्वयं वदति यः सः "अभिहितान्वयवादी ।" अर्थात् कस्मिन्नपि वाक्ये ये केचन शब्दाः वर्तन्ते ते स्वकीयानर्थान् प्रतिपाद्य विरमन्ति । तेषां परस्परं समन्वयार्थं कस्या अपि शक्तेः आवश्यकताऽस्ति । सैव शक्तिः तात्पर्यशक्ति शब्देनाभिधीयते । यथा — छात्रः पठनाय विद्यालयं गच्छति । अस्मिन् वाक्ये "छात्र कर्तृक पठनोद्देश्यक विद्यालयाधिकरणक गमनानुकूल व्यापारः" इति समुदितार्थ प्रतिपादनार्थं तात्पर्यशक्तिः । इमे अभिहितान्वय वादिनः ।

(ख) अन्वितस्य-परस्परं मिलितस्यैव अभिधानंकथनं वदति यः सः "अन्विताभिधानवादी ।" अर्थात् छात्र कर्तृक पठनोद्देश्यक विद्यालयाधिकरणकः गमनानुकूल व्यापार." इति समुदितार्थ एव प्रतीयते । न तदर्थं कस्या अपि शक्तेरावश्यकता वर्तते ।

मीमांसाशास्त्रस्य आचार्यः कुमारिलभट्ट स्तथा आचार्य प्रभाकरश्च द्वौपारगामिनौ विद्वांसौ वर्तेते । अतएव उभयो रुभौ सिद्धा तौ मीमांसाशास्त्रस्य कर्मकाण्ड भागेऽन्यस्मिन् शास्त्रे च सर्वमान्यरूपेणस्थितौ । अतएव उभौपक्षौ विचारणीयौ तथा तयोरनुगामिनश्च बहवः सन्ति ।

एतत्प्रसङ्गे पदवाक्य प्रमाण पारावारीणेन श्री जयन्त भट्टेन स्वकीय न्यायमञ्जरी नामके ग्रन्थे विस्तृतरूपेण विवेचनं कृतम् । एवं गागाभट्ट नाम्ना प्रसिद्धेन विश्वेश्वर सुधिया विरचितेन भाट्ट चिन्तामणि ग्रन्थेऽपि एतयोः पक्षयोः चर्चा समायाता । एतदतिरिक्तं मीमांसा कोषे मीमांसा न्याय प्रकाशादि ग्रन्थे च एतद्विषयस्य विवेचनं वर्तते ।

अत्र मया न्यायमञ्जरी भाट्टचिन्तामणिग्रन्थाभ्यां कियतः अंशान् उद्धृत्य उभयोः मतयोः संक्षिप्त रूपेण विवेचनं कृत्वा स्वकीय विचारोऽपि विवेच्यते ।

(१) अभिहितान्वयवादस्य समर्थने तर्कं समुपस्थापयन् श्री जयन्तभट्टः प्रतिपादयति यत् उत्तमवयस्केन मध्यम वयस्कंप्रति 'गामानय' 'अश्वंबधान' 'वृषं नय' इत्यादि वाक्यानां पदार्थ ज्ञानाभावेऽपि मध्यम वयस्केन कृतकार्यद्वारा आवापोद्वापाभ्यां पदपदार्थ ज्ञान शून्यः बालकोऽपि वाक्यार्थ ज्ञानं यद्यपि करोति परन्तु सः बालः अज्ञोऽपि पद पदार्थयोः पारस्परिकज्ञान रहित एवतिष्ठति । अतएव तद्ज्ञानार्थमभिहितान्वयवादस्य आवश्यकता वर्तते । यतोहि वाक्यद्वारा सम्पादित व्युत्पत्तिः प्रत्येक पदे सीमिता वर्तते । अन्यथा प्रत्येक वाक्यार्थं भिन्न-भिन्न व्युत्पत्तेः आवश्यकता भविष्यति या च अनन्ता असम्भवा च ।

एतावानेव नहि पदपदार्थज्ञानवतामेव यथार्थरूपेणवाक्यार्थ प्रतीतिः जायते। पदपदार्थज्ञान शून्यानां कृते 'पूर्णोऽप्यब्धिर्न मेरोरतिरिच्यते" यतो हि जलस्य कार्यं जलांशेन भवति नतु समुद्रेण। एवमेव सम्पूर्ण वाक्येन वाक्यार्थज्ञानं यथार्थतो न जायते किन्तु पदपदार्थज्ञानद्वारेणैव तस्यवाक्यस्य रसानुभूतिः जायते।

श्रीजयन्त भट्टेन कथितं यत् अन्विताभिधानवादिनां कृते तु "अङ्गुल्यग्रेहस्ति-यूथशतमास्ते" "वह्निनासिञ्चति" इत्यादि वाक्यानामपि अर्थबोधः सम्भवः यश्च सर्वथा असम्भवः। फलतस्तात्पर्य शक्तेरावश्यकता वर्तते एव।

(२) अन्विताभिधान वादस्य समर्थने तेनैव श्रीजयन्तभट्टेन कथितं यत्— अर्थप्रकरण प्राप्त पदार्थान्विय बोधने पदं प्रयुज्यते यत्तद्वाक्यमेवोदितं भवेत्, वक्ता वाक्यं प्रयुङ्क्ते च संसृष्टार्थ विवक्षया तथैव बुद्ध्यते श्रोता तथैव च तटस्थितः।" अर्थात् संहत्य अर्थं अभिदधति पदानि, वाक्यं एकार्थं पदसमूहो वाक्यमिति वाक्यार्थः। सेयं वाक्यस्य वाक्यार्थ बोधे व्युत्पत्तिः। यथा शिबिकायाः उद्यन्तारः सर्वे शिबिकामुद्यच्छन्ति तथा सर्वाण्येव पदानिवाक्यार्थमवबोधयन्ति तदिदमन्विताभिधानम्।

यद्यपि 'अङ्गुल्यग्रे हस्तियूथशतमस्ति' तथा 'वह्निना सिञ्चति' इत्यादि वाक्यार्थानां दोषाः अन्विताभिधाने प्रदत्ताः सन्ति। तथापि ते वस्तुतः भ्रामकाः वर्तन्ते यतोहि 'आकाङ्क्षा योग्यता सन्निधि युक्त एव पदसमूहः वाक्यत्वेनाभिधीयते। अतस्तदभावे अङ्गुल्यग्रे हस्तियूथ शतमास्ते' इत्यादि दोषोद्भावनस्य सम्भावना न वर्तते।

यद्यपि सिद्धान्ततः कस्यापि जिज्ञासोः ज्ञानवर्धनं मनोरञ्जनं च उभयोः पक्षयोः पठने मनने च भवतः। किन्तु मम मते विशिष्ट तात्पर्य शक्ति द्वारा परस्परान्विता-भिधान द्वारा वाक्यार्थप्रतीतिर्जायते। या च उभाभ्यां मताभ्यां किञ्चिद्भिन्नं वर्तते तदेव युक्ति संगतं च।

न्यायमञ्जरी, भाट्ट चिन्तामणि ग्रन्थानां निम्नोद्धृतैः सङ्केतैरेवमेव प्रतीयते।

(क) प्रकृति प्रत्ययौ यद्वदपेक्षेते परस्परम्
पदं पदान्तरं तद्वद्वाक्यं वाक्यान्तरं तथा।

(ख) संहत्य कारिपक्षेतु दोषो नैकोऽपि युज्यते
तेनायमुपगन्तव्यो मार्गोहि हृतकण्टकः॥

(ग) सेयं व्युत्पत्तिमूला पदविसरसमुद्भिद्यमानाङ्कुर श्रीः
संस्कारोदारपत्रा कुसुम चयवती प्रोल्लसद्भिः पदार्थैः;
प्रज्ञावल्ली विशाला फलति फलमिदं स्वादुवाक्यार्थतत्त्वैः।
नैराकाङ्क्ष्यं लसद्भिर्हृदयमुपगते यान्ति यस्मिन् पुमांसः।

(घ) पदात्प्रभृति या चैषा प्रज्ञा ज्ञातु विजृम्भते
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति।
तस्मादनया नीत्या सम्प्रत्ययो भवति साधुः
संसृष्टाश्च पदार्था वाक्यार्थ इति न्यवेदि प्राक्।

एवमेव भाट्ट चिन्तामणौ पं० विश्वेश्वर सुधीः कथयति यत् "घटमानयेत्यादौ घटपदोपस्थित घटसामान्यस्यानयनान्वयबोधासम्भवात् घटानयन विशेष एव वाक्यार्थः। तथा च लाक्षणिक वाक्यार्थे पदसमुदायरूपवाक्यस्य पदजन्यपदार्थोपस्थिति द्वारा जनकत्वमिति वाक्यार्थबोधे प्रामाण्यं युक्तम्।

व्याकरण न्याय मीमांसा शास्त्रेषु पदवाक्यप्रमाणेषु सर्वोच्च निर्णायकं व्याकरण शास्त्रमेवास्ति। तत्र "स्फोटवादस्य" सिद्धान्ते वाक्यस्फोट एव परमातर्थत्वं नात्र कश्चन सन्देह लवः। अन्या च समस्त पदपदार्थपरिकल्पना अविद्याऽज्ञान जन्या काल्पनिका। अयमेव चरमो निष्कर्षः।

यद्यपि 'स्फोटवाद' सदृश गम्भीरविषये विस्तृत विवेचनस्य आवश्यकता वर्त्तते यस्य समावेशः अस्मिन् निबन्धे न कृतः किन्तु तत्सिद्धान्ताधारे मीमांसकानामभिहितान्वयवादान्विताभिधान वादस्य शास्त्रार्थेन साहित्य शास्त्रे वक्ररूपेण जटिलरूपेण च समागते "अभिधालक्षणाव्यञ्जना" प्रकरणे सरलीकरणस्य दिग्दर्शनमात्रमेवायं स्वल्पीयान् निबन्धोऽस्ति मम मते मध्यममार्गावलम्बनं निर्विवादं मतम्। इति

# योगवासिष्टसिद्धः अद्वैतवादः

श्रीमती मधु श्रीराय्, एम. ए.

तत्रभवद्भिः महाकविवाल्मीकिपादैः विरचितं रामायणमहाकाव्यमिति प्रसिद्धं लोके। तत्र तावत् अस्ति रामायणस्य द्विविधो भागः पूर्वरामायणम् उत्तररामायणञ्च इति। तथाहि श्रीरामचन्द्रमहोदयविविधचित्रपूर्ण पूर्वरामायणम् आत्मज्ञानोपदेशपरम् उत्तररामायणञ्चेति निबन्धद्वयं प्रसिद्धम्। तत्र तावदिदमुत्तररामायणं श्रीमद्वसिष्ठ-रामचन्द्रसंवादरूपेण योगवासिष्ठसंज्ञया लोके प्रसिद्धिपदवीमलभत। अत्र च योगवासिष्ठे अद्वैतसरणिमुपजीव्य सिद्धान्ताः सर्वैप्रतिपादिताः। अयञ्च अद्वैतवादः सुप्राचीनकाला-दारभ्य भारतीयविद्वन्मण्डलानां महर्षीणां हृदयाकाशे चन्द्र इव विराजते इति निर्बाधं वक्तुं शक्यते। तत्र च वेदविभागकर्त्रा महर्षिणा कृष्णद्वैपायनेन ब्रह्मसूत्रं विरच्य श्रुति-तात्पर्यनिर्णयमुखेन विपक्षमतखण्डनपुरःसरम् अद्वैतमतवादः प्रतिष्ठापित इति सुविदितं तत्रभवतां विदुषाम्। किन्तु नारायणावतारात् सत्यवती सुतात् प्रागपि अद्वैतवादः महर्षीणां चित्तेषु समधिरूढ इति योगवासिष्ठरामायणपर्यालोचनया ज्ञातुं शक्यते अस्माभिः। आदि कविः तत्रभवान् महर्षिः वाल्मीकिः कृष्णद्वैपायनादपि प्राचीन इत्यत्र न सन्देहावकाशः। परिलक्ष्यते खलु महर्षिणा कृष्णद्वैपायनेन प्रणीतेषु भारतरत्नभूतेषु महाभारतग्रन्थेषु रामायणवृत्तान्तः। तथा च वनपर्वे अष्टाविंशत्यधिकद्विशततमे अध्याये मार्कण्डेययुधिष्ठरसंवादे रामायणवर्णनं संक्षेपतः दृश्यते।

अतः वेदव्यासादपि प्राचीनतमेन महर्षिणावाल्मीकिना अद्वैतवादस्य प्रवचनेन मतवादस्यास्य सुप्राचीनत्वं सम्यक् अवधार्यते।

यातु नाम ऐतिहासिकी कथा—अद्वैतवादस्य प्राचीनकालादारभ्य सर्वथा एक-रूपत्वं वैलक्षण्यं वा किञ्चित् परिलक्ष्यते तद्देव यथामति विवक्ष्यते।

तथाहि अद्वैतवादस्य कस्तावदर्थः इति प्रथमं निरूप्यते। न द्वैतम् अद्वैतम्। नञः निषेधार्थे एव प्रयोगात् द्वैतनिषेधपूर्वकं अद्वैतत्वस्थापनमिह विवक्ष्यते। द्वैतत्वञ्च सजातीयविजातीयस्वगतभेदात्मकं त्रिविधं सम्भवति। अत्र पुनः सामान्यतः द्वैतनिषेध

एव अद्वैतपदस्य स्वारसिकोऽर्थः इति श्रुतिस्मृति पर्यालोचनया सिद्ध्यति। ततश्च सजातीयविजातीयस्वगतभेदशून्यम् अद्वैतत्वमिह वर्ण्यते इति अद्वैतवादस्य निष्कर्षार्थः। अत्र पुनरिदं चिन्त्यम् यत् सत्स्वपि विशिष्टाद्वैतशुद्धाद्वैत द्वैताद्वैत विविधमतपरेषु दर्शनेषु आचार्यशङ्करकृतव्याख्यानमुखेन प्रतिष्ठितः अद्वैतवाद एव अद्वैतशब्दस्य मुख्यार्थपर इति आयाति।

तथाहि अथातो ब्रह्मजिज्ञासेतिवेदान्तदर्शनस्य आदिमसूत्रेण मुमुक्षोः ब्रह्मजिज्ञासा उपदिष्टा। मोक्षश्च बन्धहेत्वज्ञानध्वंसात्मकः तस्य साधकं ब्रह्मज्ञानम्। अतएव अविद्यानिवृत्तिरेव मोक्षः इति वेदान्तसिद्धान्तः सङ्गच्छते। बन्धस्य सत्यत्वे ज्ञाननिवर्त्यत्वानुपपत्तेः सुतरां मोक्षानुपपत्तिः अद्वैतसिद्धान्तहानिश्च। अतएव अज्ञानस्य मिथ्यात्वं सुतरां तत्कार्यस्यापि तथात्वमेव युज्यते। अतएव अहंप्रत्ययगोचरस्य ब्रह्मणो निश्चितत्वेऽपि ब्रह्मणि कर्तृत्वभोक्तृत्वाद्यध्यासं विना जिज्ञासानुपपत्तेः जिज्ञासापदेनैव ब्रह्मणि जगदध्यासः सूचित इति। अतएव क्रियाकारकादिफललक्षणभेदभिन्नस्य नामरूपव्याकृतस्य प्रपञ्चस्य मिथ्यात्वं श्रुतिस्मृतिप्रसिद्धं श्रीमच्छङ्कराचार्यपादैः युक्त्या व्यवस्थापितम्। अतः प्रपञ्चो मिथ्या इति शाङ्करसिद्धान्तः। महर्षिणा वाल्मीकिनापि प्रपञ्चस्य मिथ्यात्वमेव उपवर्णितम्। तथाहि—

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत्।
अपुनः स्मरणं मन्ये साधो विस्मरणं वरम्॥
(यो० वा० १।३।२)

जगद्भ्रमोऽयं दृश्योऽपि नास्त्येवेत्यनुभूयते।
वर्णो व्योम्न इवाखेदाद्विचारेणामुनाऽनघम्॥
(१।३।४)

यदिदं दृश्यते सर्वं जगत् स्थावरजङ्गमम्।
तत्सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति॥
(३।१।१०)

आचार्यशङ्करेण च एतद् एवं प्रपञ्चितम्। "तस्माद् यथा घटकरकाद्याकाशानां महाकाशादनन्यत्वं, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्, स्वरूपेण त्वनुपाख्यत्वात् एवमस्य भोग्यभोक्तृत्वादिप्रपञ्च जातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्।"

(शा० भाष्य २।१।२४)

ननु प्रत्यक्षतो दृश्यमानस्य जगतः मिथ्यात्वं कथं सम्भवतीति चेत् तत्रोच्यते मिथ्यात्वमिह अतस्मिंस्तद्बुद्धिरूपम्। तथाहि अनाद्यनिर्वचनीयमायाशक्तिबलात् यथा शुक्तौ रजत भ्रमः यथा वा मरुमरीचिषु तोयविभ्रमः, एवमिहापि युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमः प्रकाशवद्विरुद्धस्वभावयोः अन्योऽन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य मिथ्याज्ञाननिमित्तः लोकव्यवहारः प्रचलितः।

एतद् आदिकविनापि समर्थितम् । तथा चोक्तम्

"सती वाप्यसती तापनद्येव लहरीचला ।
मनसेहेन्द्रजालश्रीर्जगती प्रवितन्यते ।।

(यो० वा० ३।१।१६)

किञ्च नेह नानास्ति किञ्चनेत्यादिश्रुतिवचनात् ब्रह्मसत्तातिरिक्तसत्ताऽनङ्गीकारात् ब्रह्मैव केवलं पारमार्थिक सत् इति निश्चीयते । जगदपि यत् प्रतीयते, तत्रापि ब्रह्मसत्वमेव प्रकाशितं भवेत्, कि तु अविद्यापरिकल्पितनामरूपाभ्यां तत् सत्वं प्रकाशमानम् एकमपि अनेकमिव अद्वितीयमपि सद्वितीयमिव निरुपाधिकमपि सोपाधिकमिव प्रतीयते । अयमेव भ्रमः । तथा च सूत्रम् 'तदनन्यत्वमारम्भणशब्दादिभ्यः ।" महर्षिणा वाल्मीकिनापि दृश्यमानस्य प्रपञ्चस्य ब्रह्मोत्पन्नत्वात् ब्रह्मणि एव लयप्रतिपादनात् च ब्रह्मसत्तया एव जगतः सत्ता अङ्गीकृता । तथाहि—

"द्वितीया कल्पनैवेह न रघूद्वह विद्यते ।
ब्रह्ममात्रादृते वह्नावौष्ण्यमात्रादृते यथा ।।

(४।३६।१५ यो० वा०)

तथाहि कारणसत्तातिरिक्तसत्ताशून्यत्वात् कार्याणां ब्रह्मोपादनकस्यजगत. ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वं शाङ्करमते योगवासिष्ठमते च तुल्यमेव । एवमन्यत्रापि—

सर्वस्मात् सर्वगतात्तस्मादनन्तात्‌ब्रह्मणः पदात् ।
नान्यत् किञ्चित् सम्भवति तदुत्थं तदेव तत् ।।
ब्रह्मतत्वं विना नेह किञ्चिदेवोपपद्यते ।
सर्वं च खल्विदं ब्रह्मेत्येषैव परमार्थता ।।

(यो० वा० ४।४०।३४-३५)

अत्रेदं तात्पर्यम्—यत् यस्मादुत्तिष्ठति, यत् यस्मात् जायते, तदेव तद्वस्तु, कारणसत्तातिरिक्तसत्ताशून्यत्वात् कार्यस्येति यावत् । एवं बहुशः प्रतिपादितेऽपि उभयमतसाम्ये लक्ष्यते तावदत्र किञ्चित् वैलक्षण्यम् । तथाहि जगतः ब्रह्मात्मकत्वम् ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वम् अङ्गीकृत्यापि तत्रभवता महर्षिवाल्मीकिना जगन्मिथ्यात्वप्रतिपादनावसरे कथञ्चित् भिन्नरीत्या मिथ्यात्वम् उपवर्णितम् । तथाहि—

यथा संकल्पनगरं संकल्पान्नैव भिद्यते ।
तथायं जगदाभासः परमार्थान्न भिद्यते ।।

(६।४१।२०)

यवा द्रवत्वं पयसि यथा शून्यत्वमम्बरे ।
यथा प्रस्पन्दत् वायौ महाचिति तथा जगत् ।।

(६।४२।६)

अत्र तावत् महर्षेः वाल्मीकेरयमाशयः—चित्तसंकल्पितं नामरूपव्याकृतं सर्वं जगत् "तदैक्षतेत्यादि" श्रुतेः। संकल्पश्च चित्तेन विना न भवतीति चित्तोपादानकः संकल्पः। संकल्पस्थले तु संकल्पसंकल्पितयोः भेदो नास्त्येव इति उक्तं वाल्मीकिना। एवञ्च सति संकल्पितानां जगतां संकल्पाव्यतिरिक्ततया संकल्प एव जगत्। तथा च संकल्पसत्तातिरिक्तसत्ताशून्यं जगत्। संकल्पश्च यस्य चित्तस्य कार्यं तच्चित्तं संकल्पस्य एव सूक्ष्मावस्थम्। तदेव अव्याकृतं नामरूपात्मकम्। एतत् पुनः सांख्योक्तप्रधान-साम्यतां लब्धुमर्हति। तत्रापि सांख्यनये प्रकृतेः सत्त्वरजस्तमसां साम्यावस्थत्वेन अव्याकृतं कार्यस्वरूपमेव तत्। अतएव अव्यक्तमिति प्रधानस्य संज्ञा व्यपदिश्यते, किन्तु विना व्यक्तावस्थां कार्यत्वं तस्य नोचितमिति केवलं कारणमेव। अत्रापि संकल्पितानां नाम-रूपव्याकृतानां सूक्ष्मावस्थं चित्तं संकल्पोपादानम् इति कथनात् प्रायः सांख्यसिद्धान्तच्छा-याम् अनुगृह्णाति।

न च पुनः सांख्यसिद्धान्तितः परिणामवाद एव वाल्मीकिना परिगृहीत इति साम्प्रतं परिणामवादे कार्यस्य जगतः मिथ्यात्वाङ्गीकारात्। यच्च चित्तं संकल्पोपादान-कमव्याकृतम् संकल्पितस्वरूपम्। तदपि ब्रह्मोत्थम्। अतएवोक्तम् तदुत्थं च जगत् सर्वमिति।

एवञ्च सति कार्यकारणयोः भेदाभ्युपगमे ब्रह्मतत्कार्यचित्तयोरपि भेदानभ्युपग-मात् सुतरामद्वैतवादः निर्दिष्ट एव।

किञ्च "नेह नानास्ति किञ्चन," "अथात आदेशो नेतिनेती" तिश्रुतिभिः निषेध-मुखेन ब्रह्मणः निर्देशः यः लक्ष्यते, महर्षिणा तु तदपि न समर्थितम्। तथा च योग-वासिष्ठम्।

"नेदं नेदमिति व्यर्थप्रलापैर्नोपशाम्यति।
संकल्पजनकैर्दृश्यव्याधिः प्रत्युत वर्धते ।।
(यो० वा० ३।१।२४)

अपि च जगन्मिथ्यात्वकारणीभूतायाः अविद्यायाः स्वरूपविषये अपि अस्ति महद्वैषम्यम्। तथा हि या नाम सदसद्भ्याम् अनिर्वाच्या अविद्या मायाख्या आचार्यपादैः स्वीकृता, तत्रापि महर्षिपादानां किञ्चित् वैलक्षण्यमिव प्रतीयते। तथा च योगवासिष्ठ-पंक्तिः।

"सा राम प्रकृतिः प्रोक्ता शिवेच्छा परमेश्वरी।
जगन्मायेति विख्याता स्पन्दनशक्तिरकृत्रिमा ।।
(६।८५।१४-१५)

एतेन एकस्यैव तत्त्वस्य पुरुषप्रकृतिभेदेन द्वैविध्यं सृष्टिदशायां स्वीकृतम्। नेदं सांख्यमतं यतः सांख्यमते प्रकृतिपुरुषयोः भेदः पारमार्थिकः सार्वकालिकः। प्रलय-दशायामेव प्रकृतिपुरुषयोः भेदस्य तत्र इष्टत्वात् महर्षिपादैस्तु केवलं सृष्टिदशायामेव

प्रकृतिपुरुषभावेन द्वैधीभावः कल्पितः, न पुनः प्रलयदशायामपि द्वैविध्यं तत्र अभिप्रेतम्। शाङ्करमते तु सृष्टिदशायामपि ब्रह्म स्वरूपतः न प्रच्युतम् न वा द्वैधीभावः। वाल्मीकिमते तु एकमेव तत्वं सृष्टिदशायां द्वैविध्यं भजते इति विशेषः।

एतदपि अत्र लक्ष्यम् यत् यथा आचार्यशङ्करेण जगतः सदसद्भ्याम् अनिर्वचनीयं किमपि स्वरूपम् अङ्गीकृतं महर्षिणा तु तन्नाभिप्रेतम्। तथा च योगवासिष्ठपंक्तिः—

यदिदं दृश्यतां यातं मानसं मननं महत्।
असन्मात्रमिदं यस्मान्मनोमात्रविजृम्भितम् ॥
(यो० वा० ४।४२।२२)

अत्र जगत् असदेव इति स्पष्टतयोल्लिखितम्।

अतएव योगवासिष्ठसिद्धान्तितः अद्वैतवादः शाङ्करमताद्विशिष्ट इति शम्।

# योगशास्त्रं च विश्वं च

ए. टी. पिंगले

सम्माननीयाः अध्यक्षमहाभागाः, विद्वद्वरेण्याश्च, अस्मिन् खलु विविधशास्त्र-पारङ्गतानां विदितवेदितव्यानां गीर्वाणवाणीसमुपासकानां संमेलने भवेत्काऽपि लोकाभि-मुखी यथार्थान्वेषिणी प्रवृत्तिः शास्त्रालोचनैकधियां पण्डितप्रवराणां इति मत्वा नितरां मोदमनुभवन्नपि स्वकीयं ज्ञानदैन्यं विमृशन्जिह्रेमि किमपि वक्तुम् । तथापि "परगुण परमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः" स्नेहवन्तो भवन्तः न गणयिष्यन्ति मदीयानि त्रुटिविच्युतिस्खलनानि, अपास्य चासाराणि फल्गुवचांसि तदेव ग्रहीष्यन्ति यद् ग्रहणोचितं इति विचिन्त्य योगशास्त्रविषये वक्तुं समुत्सहे—

अद्य खलु सर्वत्र भौतिकशास्त्रस्य करामलकवत्प्रतीयमानानि संशोधनाभ्यास-फलरूपाणि दूरश्रवण दूरदर्शन-विहायससंचरण-चान्द्रप्रवासादीनि मानवतासुखजनक-साधनानि प्रत्यहं नवनवीनरूपेण निर्मीयमाणानि विलोक्य आश्चर्यचकिता भूत्वा सर्वे कृतकृत्यंमन्यमाना दरीदृश्यन्ते । मानवतासंहारिका अण्वस्त्रादिप्रखरतापजनिका विश्वयुद्धसामग्री च जनान् तादृशसुखस्य तात्कालिकत्वं बोधयन्ती जिज्ञासितुं प्रवर्तयति यत्—'का खलु शाश्वतसुखजनिका सार्वत्रिकी रीतिः स्यात्' इति । यथा खलु नैके दैवशालिनो महान्तः आत्मारामाः समचित्ताः प्रशान्ताः स्वयं समाधौ आरूढाः सन्तः अस्मज्जनान् सन्मार्गं बोधयितुमुत्सुकाः सन्तीति श्रूयते । तां च रीतिं संशोधयितुं सर्वेषां धर्माणां शास्त्राणि, तथा ध्यानाभ्यासतत्पराः स्वीयसुखनिरपेक्षा शास्त्रकाराः कणभक्ष-अक्षचरणा अपि भूत्वा अस्मदर्थं प्रयतितवन्तः ।

एते खलु दार्शनिकाः पाश्चात्यतत्त्वज्ञवत् विचार मात्रेण स्वस्वीयमतोपपत्तिमेव उपपादयेयुस्तर्हि शाब्दमात्रमेव तत्स्यात् । केवलतर्काधिष्ठितमेव तत्, अभियुक्ततरैरन्यथै-वोपपाद्येत । अन्ते च किं सत्यं तत्वमिति विचारिते 'नैको मुनिर्यस्य वचः प्रमाणं' इति सर्वविषयिणी अव्यवस्थैव प्रसज्येत । तथापि यद्विषये विगीतत्वं तत्तत्त्वमिति सामान्यतः सर्वैरनुमन्येत । तदपि यदि शाब्दं भवेत् कः श्रद्दधति । अतीन्द्रिये च वस्तुनि किं नाम तत्प्रमाणं, यत् प्रत्येतुं शक्नुयात् । एवमपि भगवत्पूज्यपादैः स्वानुभवपूर्वकं

सूत्रभाष्ये अभिहितं 'यथायथं श्रुत्यादयोऽनुभवादयश्चात्र प्रमाणम्' इति । अनुभवश्चात्र विषये न विना योगाचरणं समुपपद्यते 'दृश्यते त्वग्र्यया बुध्या' इति श्रवणात् ।

एतच्च योगाचरणं योगशास्त्रानुसारेणैव भवितव्यम् । योगशास्त्रं यद्यपि गहनं अगम्यं च तथापि तेषां तेषां सिद्धानां साधकानां च मार्गदर्शकमेतत् । नवनवीनानुभवैः तत्तद्विभिन्नमार्गैः अद्यापि च वर्धिष्णु वर्तते । नेतरशास्त्रवत् स्थिरीभूतं समाप्तप्रायं च । अतएव अन्यधर्मीयैरपि बौद्धजैनसूफीरोझेक प्रभृतिभिः स्वस्वधर्मप्रचाराय तत्वशोधनाय च एतच्छास्त्रानुसारेणैव प्रयतितं प्रयत्यते च । शतकद्वये भौतिकशास्त्रज्ञैः विज्ञानक्षेत्रेऽपूर्वा प्रगतिः कृता । प्रयोगाधिष्ठितसंशोधनद्वारा रोगादिनिर्मूलनाय नवनवीन साधनानि, कल्पनाः, उपचारपद्धत्यश्चावलम्बिताः, परं नैकेनापि दिवसेन मानवस्यायुमर्यादायां वृद्धिः संजाता । अस्मिंस्तु शास्त्रेऽनुभवमात्रप्रत्येये एतदवगम्यते योगिजनाः शास्त्रीय प्रक्रियानुसारेण योग्येष्टकालं स्वीकृत्य स्वेच्छया देहत्यागं कुर्वन्ति, वारं वारं यौवन-प्राप्तिरपि तैरनुभूयते । भौतिकज्ञैः जडपदार्थ विश्लेषणेन विद्युदादिशक्तिद्वारा नैकाः सुविधाः सुखाय यद्यपि संपादिताः, तथापि आयुमर्यादावृद्धये अमरत्वप्राप्तये पुनस्तारुण्य संपादनाय च विफलाः तच्छास्त्रज्ञप्रयत्नाः समजायन्त । परं योगविषये उपलभ्यमानेतिहासात् पूर्वेषां महात्मनां कथाः पुराणकालेऽन्तर्गता इति मत्वापि आधुनिकवर्तमानशतके जनैः प्रत्यक्षीकृतघटनाभिः प्रयोगार्हमेतत् इति सुनिश्चितं वर्तते । केनापि प्रयत्नशीलेन च सुसाध्यमेतत् । शास्त्रानुसारं उपपन्नं चैतत् संक्षेपतः प्रतिपाद्यते, यथा—

मानवस्यायुर्मर्यादा श्वाससंख्यया निश्चिता, प्रत्यहं २१६०० श्वासप्रश्वासाः जनैः क्रियन्ते । प्राणायामेन दीर्घकुम्भकेन न तावती संख्या भवति श्वासानाम् । तेन क्रमशो गणितरीत्यायुर्वृद्धिरुपपद्यते । ऐकाग्र्य लक्षणयोगप्राप्तेः कुम्भकाभ्यासश्चावश्यकः । यतो—

"मनसो धारणादेव पवनो धारितो भवेत् । अपिच—यत्र यत्र धृतो वायुरङ्गे रोगादिदूषिते । धारणादेव मरुतस्तत्तदारोग्यमश्नुते ॥"

प्रत्याहारादिना वायोः संहरणे मनः स्थिरीभवति । कुम्भक परिपक्वतादशायां च षट्चक्रभेदपूर्वकं कुण्डलिनी शक्तिः जागर्ति । सुषुम्नानाडीद्वारा च वायुः सहस्रार चक्रपर्यन्तं प्रविश्य स्थिरीभवति, सैव समाध्यवस्था । न तदा योगिनः शारीरविकाराः वर्धन-परिणाम-नाशादयो जायन्ते । न नखकेशादयो वृद्धिगताः भवन्ति । प्राणक्रिया-स्थगनात् हृदयाकुंचनप्रसरणक्रियाः न प्रचलन्ति । एतद्विषये कार्डिओग्राफोपकरणेन प्रो० एम० ए० वेंगेरे (कालिफोर्निया यु०), प्रो० डा० बी० के० वाची (मिशिगन यु०) तथा डा० बी० के० आनंद (देहली यु०) - एभिः त्रिभिः त्रयो भारतीयाः योगिनः परीक्षिताः । तत्फलं च सर्क्युलेशन (American Heart Association) पत्रिकायां प्रकाशितम् । तत्र हृत्क्रियामन्दता, तत्क्रियायाः केन्द्रपरिवर्तनं, क्रियाप्रतिबन्धश्च तैः प्रत्यक्षीकृतः । स्पन्दनेऽपि सार्धपञ्चसेकन्दपर्यन्तमवधिः आश्चर्यजनकः । (अनुवादः— नवशक्तिपत्रे १४-२-६२) ।

सर्पो यथा जीर्णां स्वशरीरावृतत्वचं हित्वा पुनस्तारुण्यं भजते एवं योगिनोऽपि अखण्डितान्येव स्वोदरगतान्त्राणि बहिः जिह्वावत् निष्कास्य, जलेन स्वच्छीकृत्य, प्राणायामसामर्थ्येन पुनराकुंच्य, यथास्थानं स्थापयन्ति। तेन तेषां वार्धक्यपरिहारो जायते इति साक्षात्कृतं बहुभिः आधुनिक जनैः। पुनश्च यौवनेन विलसन्तो-वलोकिताः सर्वैरपि तदानीन्तनैः। एवं मृत्युसमयमपि जानन्त्येव योगिनः। तदा च समाधौ चित्तलयकरणेन सा वेला तैः परिहर्तुं शक्यते। नैके सुप्रसिद्धयोगिजनाः हिमालयादौ आनन्दमयं जीवनं यापयन्तः वरीवर्तन्ते। ब्रह्मीभूतानां च तादृशा कथाः तत्र तत्र भारते सुप्रसिद्धाः। नैतत्खलु अविश्वास्यं, आप्तजनप्रत्यक्षीकृतत्वात्। एतद्विषये स्वामि कुवलयानन्दाः स्वीयपत्रके लिखन्ति—"But I should like to let you know my present view of the matter. It is possible to take out a small part of the colcn, about a foot and a half, wash it and push it back into the abdomen, although this is a difficult feat. It is, however, within the reach of yogins who have developed themselves considerably." (Lonavala, letter dated 12th Feb. 1961.)

पाश्चात्यपौर्वात्यवैद्यैः जरापरिहाराय तारुण्यसंपादनाय च वानरवृषणसंयोजन युवजनरक्तभरणादयः, कायकल्पादयश्च इत्यादीनां बहूनां उपायानां प्रयोगः कृतः। परं अन्ततो गत्वा ते सर्वे निष्फलाः केवलं श्रमावहाश्च संजाताः। अत्र स्वानुभवेन साफल्यं साक्षात्कृत्य अभ्यासुजनार्थं स्पष्टीकृतं योगिभिः। यदि च प्रयत्नपूर्वकं दीर्घकाल-नैरन्तर्यसत्कारसेवितोऽयं योगः स्यात् जीवितसाफल्यं लभ्येत। अतएव निर्दिष्टं योगि-श्रेष्ठज्ञानदेवैः—(वार्धक्य तरी बहुडे। तारुण्याची गाठी विघडे। लोपली उघडे बाळदशा ॥—वृद्धत्वं प्रतिनिवर्तते, यौवनमपि वियुज्यते, पुनश्च बाल्यदशा लभ्यते। इति।

एवं च, यतः खलु नैतच्छास्त्रं शाब्दमात्रं, अपितु अनुभवेन प्रयोगद्वारा साक्षात्कारार्हमेतत्, अतः विश्वस्मिन् विश्वेऽस्य प्रचारोऽवश्यं विधेयः। तेन मनुष्यजातेः जरारोग परिहारपूर्वकं कल्याणमेव भवेत्। इति शम्॥

# गणितान्तरिक्षविज्ञानयोः संस्कृतस्य योगदानम्

**डा० दामोदर झा**

गणितान्तरिक्षविज्ञानयोः मानवजीवनेन सह विशिष्टतमः सम्बन्धो विद्यते। सम्बन्धोऽयं प्राचीनयुगे मानवजातेराविर्भावकालादेव वरीवर्ति। एतस्य हेतुः ज्यौतिषस्य कालविज्ञानत्वं वर्तते। ज्यौतिषशास्त्रस्य प्राचीनतमेग्रन्थे ज्यौतिषवेदाङ्गे (1400 B.C) ज्यौतिषशास्त्रं कालज्ञानं कथितमस्ति।[१] कालशब्दस्य प्राचीनतमः प्रयोग ऋग्वेदे सम्प्राप्यते।[२] त्रुटिकालादारभ्य महाप्रलयपर्यन्तं कालस्य गणना ज्यौतिषशास्त्रस्य विषयो विद्यते। यस्मिन् युगे सूर्यचन्द्रयोः तारकागाञ्च उदयास्तौ ऋतुपरिवर्तनचक्रञ्च ज्यौतिषविषयिणीं मानवजिज्ञासां समुदपादयन् वस्तुतः तस्मिन्नेव युगे ज्यौतिषविज्ञान-स्योत्पत्तिरप्यजायत। तत आरभ्य शास्त्रमिदं प्रतिक्षणं विकासमेति। अद्यत्वे तदानीन्तनं किमपि प्रमाणं नोपलब्धमस्ति। सम्प्रति समुपलभ्यं प्राचीनतमवाङ्मयमधिकृत्येदं कथयितुं शक्यते यदन्यकतिपयशास्त्राणामिव ज्यौतिषशास्त्रस्यापि जन्म भारते प्राक्तन-समये समभूत्। कथनमिदं विल ड्यूरैण्टसंज्ञकस्य अमेरिकाविदुषः Our Oriental Heritage नामक ग्रन्थे सुस्पष्टं स्वीकृतम् अवलोक्यते।[३] Max Muller संज्ञको जर्मन-विपश्चिदपि ज्यौतिषविज्ञानस्य तत्वानां जन्मस्थानं भारतमेव प्रत्यपादयत्।[४]

विश्वस्मिन् सर्वप्रथमं भारत एव क्रान्तिवृत्तस्य द्वादशराशीनां च मान्यता ऋग्वैदिककाले स्थापिताभवत्। ऋग्वेदे[५] एकत्र कथितमस्ति यद् द्वादशभिररैरर्थाद् राशिभिर्युक्तमिदं सूर्यस्य चक्रमर्थात् क्रान्तिवृत्तं कदापि न जीर्यति। अस्मिन् चक्रे अर्थाद् वर्षे दिनरात्र्योर्मिथुनानि विंशत्युत्तराणि सप्तशतानि जायन्ते। ऋग्वेद एवान्यत्र[६] कथि-

---

१. आर्चज्यौतिषम् २

२. ऋ० सं० ७०।४२।६

३. The Life of the Mind: Hindu Science, See Span, October, 1968

४. Objections Page 130

५. ऋ० सं० १।१६४।११

६. ऋ० सं० १।१६४।४८

तमस्ति यद् द्वादशपरिधीनामर्थाद् राशीनां चक्रमर्थात् क्रान्तिवृत्तमेकं विद्यते यस्य नाभयः सन्ति । तं चक्रं को जानाति ? न कोऽपीत्यर्थः । एतच्चक्रेण सह षष्ट्युत्तरं शतत्रयं शङ्कवोऽर्थादहोरात्रचिह्नानि सन्ति यानि चलानि विद्यन्ते इति । तैत्तिरीयसंहितायां वर्षस्य षष्ट्युत्तरशतत्रयदिनानां स्पष्टमुल्लेखो विद्यते[1] । शतपथब्राह्मणे वर्षस्य दिनानामूनानाञ्च निरीक्षणपरीक्षणयोरुल्लेखो दृश्यते[2] । वाजसनेयिसंहितायान्तु "प्रज्ञानाय नक्षत्रदर्शम्"[3] तथा "यादसे गणकम्"[4] इति वाक्ययोः नक्षत्राणां द्रष्टुस्तथा गणितज्ञस्य च चर्चा सन्दृश्यते । तैत्तिरीयसंहितायां द्वादशचान्द्रमासानामधिकमासक्षयमासयोश्चापि सूची प्राप्यते[5] । तैत्तिरीयब्राह्मणे पक्षस्य पञ्चदशदिनानां रात्रीणाञ्च पृथक् पृथङ् नामधेयानि विद्यन्ते । ऋग्वेदसंहितायां दिनस्य वृद्धेः क्षयस्य चोल्लेख उपलभ्यते[7] । शतपथब्राह्मणे कालस्य अत्यन्तसूक्ष्मविभागानां गणनाः सन्ति[8] । एते विभागाः सेकेण्डस्य शतांशादपि सूक्ष्मतमाः प्रतीयन्ते । शतपथब्राह्मणे एकत्र कथितमस्ति यत् सम्पूर्णाः प्रजाः ग्रहगृहीताः सन्ति[9] । वैदिकसाहित्ये यत्र तत्र ग्रहाणां नाम्नां चर्चापि दृश्यते यद्यपि तेषां शब्दानामर्थविषये वेदविद्याविशारदानां विदुषां मध्ये मतभेदो दृश्यते । स्वर्गीयो बालगङ्गाधरतिलकः स्वकीये ओरायननसंज्ञके ग्रन्थे ऋग्वेदे सप्तविंशतेर्नक्षत्राणां ज्ञानमासीदिति भणति स्म । तैत्तिरीयसंहितायां, काठकसंहितायां, वाजसनेयिसंहितायां, शतपथब्राह्मणे [illegible] च कृत्तिकादिसप्तविंशतेर्नक्षत्राणां सूचयो दृश्यन्ते । एवं भारतस्य प्राचीनसंस्कृतवाङ्मयमन्तरिक्षविज्ञाने विश्वस्य प्रथमगुरुः प्रसिध्यतितमाम् ।

गणितस्य क्षेत्रेऽपि भारतीयं प्राचीनवाङ्मयं गौरवशालि स्थानमधितिष्ठति । नवानामङ्कानां शून्यस्य च चमत्कारिकमनुसन्धानां संस्कृतस्यैव वरदानं विद्यते । काठकसंहितायां तैत्तिरीयसंहितायाञ्च सङ्ख्याया एकदशादिक्रमेणाष्टादशस्थानानां नामानि दृश्यन्ते[11] । विश्वस्यान्यसाहित्येषु सङ्ख्यास्थानानां पञ्चषान्येव नामानि प्राप्यन्ते । अत एव अलबेरुनीनामा अरबदेशीयो विद्वान् अस्मिन् विषये भारतस्यैव प्राधान्यमुदघोषयत्[1] ।

---

१. तै० सं० ७।५।१
२. श० ब्रा० २।२।३।७
३. वा० सं० ३०।१०,
४. वा० सं० ३०।२०
५. तै० सं० १।४।१४,
६. तै० ब्रा० ३।१०।१।१-३
७. ऋ० सं० ८।४८।७
८. श० ब्रा० १२।३।२।५
९. श० ब्रा० ४।६।५।१
१०. ओरायन १५८
११. क्रमशः ४।४।१०।१-३; ३९।१३; ६।७; १०।५।४।५ तथा २।१६

महान् गणितज्ञः प्रथमार्यभटः ज्यायाः, रूपव्यासार्द्धे अर्द्धपरिधेः (π) पाई इत्यस्य, पृथिव्याः स्वाक्षे भ्रमणस्य च सिद्धान्तान् आविश्चकार। अङ्कानां दाशमिकपद्धतेः बीजगणितस्य च क्षेत्रे संस्कृतमेव प्रथमकिरणमदर्शयत्। भारतादेव ज्ञानमिदं यूरोपीयैररबदेशीयविदुषाँ माध्यमेन सम्प्राप्तम्[१]। आर्यभटादनन्तरं ब्रह्मगुप्तः वराहमिहिरश्च ज्ञानमिदं विपुलं व्यकासयत् परमार्यभटस्य भूभ्रमणसिद्धान्तं परवर्तिन आचार्या नोररीचक्रुः। महान् गणितज्ञो भास्कराचार्यः सर्वप्रथमं तात्कालिकगतिसिद्धान्तं तथा पृथिव्यामाकर्षणस्य सिद्धान्तञ्चास्थापयत्। एवं भास्कराचार्यः विश्वस्मिन् Differential calculas इतिसंज्ञकस्यचलनकलनगणितस्य तथा Central Gravitation of the earth इति संज्ञकस्य पृथिव्या गुरुत्वाकर्षणसिद्धान्तस्य चादिगुरुर्विद्यते स्म। ऋग्वेदस्य (ऋ० सं० १।१६४।१-२) द्वयोर्मन्त्रयोर्व्याख्यां कुर्वाणो यास्काचार्यः[२] (700 B. C.) सूर्यस्य किरणे वर्तमानानां सप्तवर्णानामुल्लेखं चक्रे। अतो यास्काचार्यतः पूर्वमेव सूर्यस्य रश्मिषु सप्तवर्णानामाविष्कारः समजनीति स्फुटं प्रसिध्यतितमाम्। एषु प्रबलप्रमाणेषु सत्स्वपि यदि कश्चन नामधारी विद्वान् तात्कालिकगतिसिद्धान्तस्य, गुरुत्वाकर्षणसिद्धान्तस्य तथा सूर्यकिरणे सप्तवर्णानामाविष्कारकं न्यूटनं मन्यते तर्हि स स्वकीयां चिन्तनीयां संस्कृतानभिज्ञतामेव प्रख्यापयति।

अलबेरूनी, मैक्समूलरः, फ्रेञ्चयात्रीफ्राक्वीस वर्नियरः, सी० बी० क्लार्कः, प्रो० विल्सनः, डा० राबर्टसनः, प्रो० कोलब्रूकः, डा० थीबौटः तथा बर्जेसादयो बहवो विद्वांसः मुक्तकण्ठैः ज्यौतिषशास्त्रस्य, अङ्कगणितस्य, बीजगणितस्य रेखागणितस्य, क्षेत्रमितेश्चाविष्कारं भारते मन्वते[३]।

अत इदं सुतरां प्रसिध्यतितरां यत् सुबहुप्राचीनकाल एव भारतवर्षे गणितान्तरिक्षविज्ञानयोरुद्भवो विकासश्च समजायेताम्। अत एव स्थानादरबदेशवासिनः ततोऽपि यूरोपदेशवासिनः विज्ञानमिदं प्रापुः।

एतादृक्प्राचीनतादृष्ट्यैव गर्गाचार्यः[४] ज्यौतिषं कालज्ञानमाद्यज्ञानञ्चेति नामभिः व्याजहार। आधुनिका अपिविपश्चितः ज्यौतिषं सर्वेषां विज्ञानानां पितरं स्वीकुर्वते।

---

१. काठकसं० १७।१० तै० सं० ४।४।११

२. अलबेरूनीज इण्डिया vol. १ pp. १७४-१७७

३. Will Durant's Hindu Science, See Span, October 1968

४. निरुक्तम् ४।२६

५. डा० नेमिचन्द्रः भारतीयज्यौतिषम् 3 Edi. pp. 39-40

६. बृहत्संहिता, उपनय० श्लो ६ उत्पलटीकायाम्।

७. छान्दोग्य उ० ७।१।२-४

ज्यौतिषं प्राचीनतमकाल एव शास्त्ररूपेण स्वीकृतिं प्रापत् । छान्दोग्योपनिषदि नारदः स्वज्ञातविषयाणां सूचौ नक्षत्रविद्यामपि स्फुटतरं गणयाञ्चक्रे । आधुनिकेऽपियुगे केपलरन्यूटनाइन्स्टीनादयः स्वनामधन्या विदुषः ज्यौतिषस्य गभीरतरेणाध्ययनेन विश्वविश्रुतिं लेभे । ज्यौतिषस्य क्षेत्रमतीव विस्तृतं विद्यते । अत एवोक्तमासीद् वराहमिहिरेणाचार्यवर्येण[८]—

ज्योतिः शास्त्रमनेकभेदविषयं स्कन्धत्रयाधिठिष्तम् । तत्कात्स्न्योंपनयस्य नाम मुनिभिः संकीर्त्यते संहिता । इति । विज्ञानगणितभास्करो भास्कराचार्योऽपि कथयतिस्म[९]—

त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच् चारश्चद्युसदांद्विधा च गणितं प्रश्नास्तथा सोत्तराः । भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादियत्रोच्यते सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः । इति

एवमत्र प्रस्तुतैः प्रमाणप्रकरैरिदं निश्चप्रचं प्रसिध्यतितमां यत् गणितस्य तथा अन्तरिक्षविज्ञानस्य च विकासे संस्कृतस्य अविस्मरणीयं योगदानं विद्यत इति प्राच्यविद्याविशारदैर्विद्वद्भिः सबहुमानं विभावनीयम् इति शम् ।

---

८. बृहत्संहिता, उपनय० श्लो० ९ ।

९. भास्कराचार्यः सि० शि०, म० अ० ६ श्लो० ।

# काव्यमीमांसायाः एकं व्याख्यानम्

विद्यावाचस्पतिः, कविरत्नम् अमीरचन्द्रशास्त्री साहित्याचार्यः

इह खलु 'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते'। इति यद्यप्यवितथम्। तथापि 'शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।' इत्येतस्यादेशस्यानुपालनं नावश्यकं मन्ये। अनावश्यक एव चात्राधिकारिविशेषविचारः सत्सु सौहार्दैकनिधानेषु सहृदय-प्रधानेषु। इत्यधुनाभिधेयमेवाभिधेयम्।

'काव्यमीमांसा' इति शब्दः श्रवणसमकालमेवार्थद्वयं प्रत्याययति, प्रकरणादिकं हि तत्र विशेषस्मृतिहेतुर्न भवति। अत्र तत्रभवतो यायावरीयस्य राजशेखरस्य काव्य-मीमांसानामको ग्रन्थो वा पण्डितराजस्य जगन्नाथस्य रसगङ्गाधरनाम्नी काव्यमीमांसा वा सन्दर्भेणानेन समर्च्यते, मीमांसापरपर्यायेण विचारव्यापारेण वा काव्यस्वरूपमेवात्र चर्च्यते, इति संशयश्चिरं श्रीमतां मनांसि माऽऽकुलीकार्षीदिति काव्यस्वरूपविचार एवा-त्रैकव्याख्यानविषयतां नीयत इति व्याख्यानतो विशेषप्रतिपत्तिः साध्यते, न तु सन्देहा-दलक्षणमिति।

काव्यस्वरूपविचारणावसरे चात्र विशेषतो विश्वसंस्कृतसम्मेलने प्राच्याः प्रतीच्या-श्चोभय्यो दृष्टयः पुरस्करणीयाः, तथापि स्वभावादेव पाश्चात्या बहिर्दृष्टयो भारतीया-श्चा तर्दृष्टयो भवन्तीति सत्यमपि विस्तरभयादत्रालोचनीयं न भवति। भारतीयानामन्त र्दृष्टेरेवेदं विजृम्भितम्, यत्ते कतमः पदार्थः काव्यस्यात्मा? इत्येतमेव प्रश्नं पुरस्कृत्य पञ्चषान् सम्प्रदायान् प्रावर्तयन्। तद्यथा 'रीतिरात्मा काव्यस्येति वामनः, 'वक्रोक्तिः काव्यजीवितम्' इति कुन्तकः, 'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती। असौ न मन्यते कस्मादनुष्णमनलङ्कृती।' इति जयदेवः, काव्यस्यात्मा ध्वनिरित्यानन्दवर्धनः, 'वाक्यं रसात्मकं काव्यम्' इति विश्वनाथः, औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवि-तम्' इति च क्षेमेन्द्रः प्रत्यपीपदन्। अन्ये तु 'परोक्षप्रिया हि देवाः। इति न्यायेन साक्षा-त्काव्यात्मनो विषये वाचंयमाः सन्तोऽप्यन्यथैव काव्यस्वरूपं न्यरूरुपन्। तद्यथा तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। इति मम्मटः, रमणीयार्थप्रतिपादकः शब्दः काव्यम् इति च जगन्नाथो जगदतुः। भोजराजस्तु 'तच्चैतच्च सर्वं समुच्चित्य 'निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्। रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति॥

इन्यवलक्षत्। तत्रैतेषु कतमो भूतार्थवादी ? इति पर्यनुयुक्तेन केनचिदभियुक्तेन नूनमेकतम पक्षाश्रयणं दुःशकम् । आश्रितवतापि वा स्वयमक्षतेन स्थातुमक्षमम् ।

तथा हि यदि वयं 'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा'—इति, 'वाचकलाक्षणिकव्यञ्जकान्यतमत्वम्' इति वा काव्यगतस्य शब्दस्य, 'वाच्यादयस्तदर्थाः स्युः' इति, 'वाच्यलक्ष्यव्यङ्ग्यान्यतमत्वम्' इति वा च तद्गतस्यार्थस्य लक्षणं स्वीकृत्य 'काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, दोषाश्च काणत्वखञ्जत्वादिवदित्यतिदेशदिष्टानि काव्याङ्गानि परमार्थतो गृह्णीमः, तदा महति निग्रहे पतामः । काव्ये हि किमपि तत्त्वमिदानीं शब्दार्थाभ्यां विलक्षणं न लक्षयामः । किं खल्वयं रसादिरूपो व्यङ्ग्यः शक्यते चतुरतरैरप्यर्थकक्षातः पृथक्कर्तुम्, किञ्च नाम रचनाविशेषरूपा रीतिः प्रभूयते प्रभुभिरपि शब्दश्रेणीतो बहिष्कर्तुम् । यावच्चोक्त प्रकारक शब्दार्थातिरिक्तः कश्चन काव्यपदार्थो न प्रतिपद्यते, तावच्छब्दार्थनिष्ठान् लघिष्ठान् गरिष्ठान्वा, ध्रुवानध्रुवान्वा सर्वानपि काव्यविशेषान् काव्यगोचराद् बहिष्कर्तु-मनसापि चेष्टितुं-नालम्भवामः किं पुनर्वाचा ?

इदमत्र विचार्यते, 'शब्दार्थाभ्यां विलक्षणं किमपि तत्त्वं काव्ये न विद्यते' इति निर्धार्य काव्यात्मचिन्तायां मतत्रयमुद्भूतम् । तत्र प्रथमं शब्दं विनार्थस्थितिर्न भवति । इति अर्थं शरीरस्थानीयं मत्वा, शब्दं चात्मस्थानीयं विज्ञाय 'रीतिरात्मा काव्यस्य' इति वामनाचार्येणोपन्यस्तम् । इयं रीतिः परमार्थतः शब्दधर्म इत्यवदातम् । द्वितीयम् 'अर्थे शब्दः प्रयुज्यते' इति शब्दं शरीरस्थानीयम्, अर्थं चात्मस्थानीयं बुद्ध्वा 'काव्यस्यात्मा ध्वनि' रिति आनन्दवर्धनेन, 'वाक्यं रसात्मकं काव्यम्' इति च विश्वनाथेन प्रतिपादितम् । ध्वनिप्रस्थापनात्प्राक्च 'अर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।' इति स्थितिरपि ध्वनिकारेण सूचिता । इमौ ध्वनिरसौ तावदर्थधर्माविवेति स्फुटम् । तृतीयं पुनस्तदधीते तद्वेद' इति सूत्रयता पाणिनिना, सिद्धे शब्दार्थसम्बन्धे । इति निबध्नता व्याडिना, वागर्थाविव सम्पृक्तौ' इति श्लोकयता कालिदासेन, 'साहित्यमनयोः शोभाशालितां प्रति काप्यसौ । अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः' इति चाकलयता कुन्तकेन शब्दार्थयुगलस्य तुल्यप्राधान्यमेवोररीकृतमिति तद्द्वयं काव्यात्मेति ध्यात्वा 'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती । असौ न मन्यते कस्मादनुष्णमनलं कृती । 'इति वचनेनालङ्काराणामात्मत्वं जयदेवेन, 'वक्रोक्तिः काव्यजीवित' मिति प्रतिज्ञया च वक्रोक्तेरात्मत्वं कुन्तकेन निरुक्तम् । अलङ्कारास्तन्मूलभूता वक्रोक्तिश्च शब्दार्थयुगलधर्मतया प्रसिद्धैव ।

तत्र प्रवृत्तिवृत्तिरीतीनां काव्याङ्गानां व्याख्याने यायावरीयो राजशेखरः काव्यमीमांसायाम्—'वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमस्तु रीतिरिति व्यपदेशमियाय' इति व्यवीविचत् । 'तासु च विदर्भेषु भवां वैदर्भीं रीतिमुदाहरन्ति' इति च । एताञ्च—

धन्यासि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः काखलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ।।

इत्यादिना समर्था अपि कवयोऽभिष्टुवन्ति । 'गौडेषु भवां गौडीम्, पाञ्चालेषु भवाञ्च पाञ्चालीम्' ऊचुराचार्याः । इत्यनेन 'वचनविन्यासक्रमो रीति' रिति लक्षणेनापि सिद्धमेव रीतेः शब्दानतिरिक्तत्वम् ।

अत्र—'अयं गौडीयभेदोऽस्ति वैदर्भीयमित्यहो ।
गतानुगतिकन्यायान्नामाख्येयममेधसाम् ।।'

इति वाक्यानुसारेण वैदर्भीत्यादिनामाख्याने तावदास्तां गड्डलिकाप्रवाह एव हेतुः, किन्तु 'अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।' इति दण्डिवचनेन रीतीनांगीः पदोक्तशब्दानतिरिक्तत्वेऽनेकत्वे च, कुन्तकोक्तेन च सुकुमारविचित्रमध्यमात्मकेन त्रैरूप्येण च तासां त्रिविधत्वे नकश्चिदपि विपश्चिदपश्चिमो विमतो भवतीति तावन्निश्चप्रचम् । रीतिस्तावच्छब्दधर्मो नतु शब्द इति पर्यनुयोगे तु वयमिदमेव ब्रूमो यद् धर्मधर्मिणोः समवायसम्बन्धस्वीकारे तयोर्भेदनिरूपणं नूनमाग्रहग्रस्तमात्रम्, क्वचिदपि शब्दरीत्यो वैयधिकरण्यसम्भवाभावाच्च न क्षोदक्षमम् ।

रीतेः शब्दानतिरिक्तत्वमिव ध्वनिरसयोरर्थानतिरिक्तत्वमपि सुविदितमेव विदाम् । संस्कारमात्रोद्बोधनार्थन्तु तदिहानुवदामः । तत्र ध्वनिकार आनन्दवर्धनः:—यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः सध्वनिरिति सूरिभिः कथितः ।' इति ध्वनिकाव्यलक्षणे तमर्थमित्याह । 'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः । वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ।' इत्यत्र तु स्पष्टतयैव सहृदयश्लाघ्यस्य प्रतीयमानस्यार्थस्य ध्वनित्वम्, तस्यैव च काव्यात्मत्वं तेन प्रतिपन्नम् । रसस्यापि 'मुख्यार्थहतिर्दोषो रसश्च मुख्यः' इत्यनूचिवान् मम्मटो रसस्य काव्ये मुख्यार्थत्वम् । अपि च निरन्तररसोद्गारगर्भसौन्दर्यनिर्भराः । गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः । इत्यादिना सूक्तेनान्ये रसस्य काव्ये मुख्यार्थतां तुष्टुवुरपि, स्तुवन्त्यपि, स्तोष्यन्त्यपि । अग्निपुराणे तु रसस्यैतां काव्ये मुख्यार्थतामेवोपलक्ष्य—

'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।' इति रसः काव्यजीवितमेवोच्यते । तदनुसृत्यैव 'वाक्यं रसात्मकं काव्यम्' इत्ययं रससम्प्रदायः प्रवर्तते ।

यत्तु क्षेमेन्द्रेण रससिद्धस्यापि काव्यस्यौचित्यमेव जीवितमित्युक्तम् । ततश्च 'उचितं प्राहुराचार्याः सदृशं किल यस्य यत् । उचितस्य हि यो भावस्तदौचित्यं प्रचक्षते ।' इत्यौचित्यस्य लक्षणं कृतम् । तेनानौचित्यनामनि रसदोषे परिहृते औचित्यस्य स्वतः सिद्धत्वान्न क्षेमेन्द्रेण किमपि नवीनमुक्तमिति स्वतो विज्ञायते ।

अलङ्काराणान्तु 'शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ।।

इति लक्षणेन शब्दार्थधर्मत्वे सिद्धमेव काव्यात्मत्वम् । केचित्त्वत्र 'अस्थिरा धर्माः । इति विशेषणाच्छब्दार्थाभ्यामलङ्काराणां समवायसम्बन्धाभावं समवायसम्बन्धाभावेन च तयोरभेदासिद्धेः काव्यात्मत्वाभावमभिमन्यन्ते । तैरिदमवधेयम्— यद्यस्मिन् शब्देऽनुप्रासो यस्मिन्वार्थे उपमास्ति, तस्मिन् समवायसम्बन्धेनैवास्ति, यत्र तु नास्ति तत्र संयोग सम्बन्धेनापि नास्तीति क्वचिदलङ्काराः शब्दार्थयोः समवायसम्बन्धेन धर्मा भवन्ति, स्फुटं लक्ष्यन्ते च, क्वचित्तु भवन्तोऽपि ते स्फुटं न लक्ष्यन्ते इतितेऽस्थिरा धर्मा इत्युच्यन्ते। न तु ते विहङ्गमा नीडादिव क्वचनोड्डीय गच्छन्ति । एते चालङ्काराः प्रथमं त्रिविधा भवन्ति— शब्दालङ्काराः, अर्थालङ्काराः, शब्दार्थालङ्काराश्चेति । तत्रार्थालङ्काराः साम्यमूलकाः, अभेदमूलकाः, विरोधमूलकाः, संसर्गमूलकाः, शृङ्खलामूलकाश्चेति प्राधान्येन पञ्चविधाः । इत्थं सप्तविधानामप्येषां काव्ये शोभातिशायिनां सङ्ग्रहे महाकवयोऽपि यत्नवन्तो दृश्यन्ते । 'काव्यं ग्राह्यमलङ्कारात्' इत्याद्याश्चाचार्याणां चार्व्यो वाचः श्रूयन्ते। अलङ्काराणां रससम्बन्धनियमोऽपि तेषां सङ्गृहणीयतायाः प्रधानं निदानम् । तद्यथा रसवत्प्रेयऊर्जस्विसमाहितानां भावोदय भावसन्धिभावशबलतानाञ्च विशद एव रसादिसम्बन्धः, गूढनिद्रितयोर्मीलितोन्मीलितयोश्च सम्भोगशृङ्गारस्य, वक्रोक्तौ च हास्यरसस्यावदात एवान्वयः ।

अकालजलदावली किरतु नाम मुक्तावलीरपर्वणि विधुन्तुदस्तुदतु हन्त शीतद्युतिम् ।
इदन्तु महदद्भुतं यदनपायिविद्युल्लतावलम्बि कनकाचलद्वयमधोमुखं नृत्यति ।।

इत्यस्यामनिश्चयोक्तावालम्बनमात्रप्रतिपत्त्या भवन्तीं रसनिष्पत्तिं को नाम सहृदयोऽपलपितुमुपक्रमेत । इत्थमेवानन्वयप्रतीपोत्प्रेक्षोपमादयोऽन्येऽप्यर्थालङ्कारा उपमेयप्रधानताप्रतिपादनद्वारा रसमेवोत्कर्षयन्ति अत एवाग्निपुराणे— 'अर्थालङ्काररहिता विधवेव सरस्वती' इति सूक्तम् — सधवायास्तु निर्धनाया अप्यलङ्कारराहित्यं भारतीयानामनभिमतम् । अतएव —'अकाञ्चनेऽकिञ्चननायिकाङ्के किमारकूटाभरणेन न श्रिय.।' इति प्रब्रुवन् गीर्हर्षः श्रीहर्षोऽकिञ्चननायिकाङ्कमारकूटाभरणैनैव सम्बुभूषयिषति । अनुप्रासस्तु रसानुगतः प्रकृष्टो न्यास इति व्युत्पत्त्या रसानुकूलतां जातु न विजहातीति विदितमेव विदिताशेषवेदितव्यानाम् इत्थं शब्दार्थाभ्यामतिरिक्तानामलङ्काराणामभावेऽपि काव्यत्वं कथयतः प्रति समुचित एव पीयूषवर्ष जयदेवस्य ।

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।
असौ न मन्यते कस्मादनुष्णमनलङ्कृती ।। इति पर्यनुयोगः ।

एतच्चानुप्रासस्य रसानुगतत्वं गुणनिरूपणप्रकरणे विशेषेण विशदीभवति ।

रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा ।
गुणा माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा ।।

इत्युपक्रम्य चित्तद्रवीभावरूपस्य माधुर्यस्य टवर्गं विना स्ववर्गीयपञ्चमाक्षरचरणस्थिताः स्पर्शा लघूरणौ च व्यञ्जका भवन्तीत्यादिना या दिक् प्रदर्शिता, सैवानुप्रासे

प्रकृष्टन्यासबीजम् । दीप्तिरूपमोजः, विकासरूपश्च प्रसादस्तैस्तैर्वर्णरचनाविशेषैर्व्यज्यमाने नूनमनुप्रासमेवाश्रयेते, इत्यलमतिपल्लवितेन ।

यद्यपि कुन्तकोक्ता षड्विधा वक्रोक्तिरपि — वर्णविन्यासवक्रता, प्रकृतिवक्रता, प्रत्ययवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता चेति शब्दात्मिकैव प्रतिभाति 'श्रोत्रग्राह्यो गुणः शब्दः' इत्येतच्छब्दलक्षणं हि वर्णप्रकृतिप्रत्ययवाक्येष्विव प्रकरण-प्रबन्धयोरपि तावत्सङ्गच्छत एव । तथापि शब्दार्थरुभयोरपि शोभाशालितां प्रति कस्याश्चिदन्यूनानतिरिक्तत्वमनोहारिण्या अवस्थितेरेव कुन्तकाभिमत साहित्यपदार्थत्वाद् वक्रोक्तेरप्युभयात्मकत्वं वर्णविन्यासवक्रतादीनामर्थमुखप्रेक्षित्वमूलकमभ्युपगम्यते । शाब्दीत्वेनात्र प्रतिपादिताया अन्यत्रार्थीत्वस्य सर्वालङ्कारबीजत्वस्य च प्रतिपादनात् —

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ।। इत्यादिना ।

उपसंहारे तु सर्वथा सर्वत्र महीयमानया श्रुतिमहत्या सरस्वत्या प्रोक्तम् —

चत्वारिशृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य ।
त्रिधाबद्धोवृषभो रोरवीति महो देवो मर्त्यां आविवेश ।। इत्येव

काव्यलक्षणं सुरसरस्वतीसमुपासनाव्रतिनां विदुषां पुरस्ताद् व्याख्यायते । अस्य काव्यस्य 'उमोत्तमम्, उत्तमम् मध्यमम्, अधमञ्चेति चत्वार्यर्थमूलानि रूपाणि एव शृङ्गस्थानीयानि, माधुर्यमोजः प्रसादश्चेति त्रयो गुणा एव पादस्थानीयानि, गद्यं पद्यञ्चेति वा दृश्यं श्रव्यञ्चेति द्वे स्वरूपे एव शीर्षस्थानीये, उपर्युक्ताः सप्तविधा अलङ्कारा एव हस्तस्थानीयाः, सुकुमारविचित्रमध्यमाख्यया त्रिरूपया रीत्या बद्धः सन् वृषभो रसान् वर्षन् रोरवीति — शब्दं करोति 'रमणीयार्थप्रतिपादकः शब्दः काव्यमिति तल्लक्षणात् स महः — अत्सवरूपो महान्वादेवो दीव्यन्, ददत्, दीप्यमानः, अमरश्चकाव्यपुरुषः मर्त्यान् मरणधर्मणः कवीन् आविवेश-आवेश इव प्रविष्टः । तानप्यमरान् अकरोत् अत एव ते —

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ।।

इत्यादिसूक्तैरभिष्टूयन्ते ।

# ध्वनि विचारः

**राधाकृष्ण शास्त्री**

आवेदकालात् अद्ययावत् निखिलभारतीयवाङ्मयसमीक्षणेन एतदेवाक्षिपदमायाति यत् विविधवाङ्मयनिर्माणदत्तधियाः धीमन्तः वैमत्य मानयन्तोऽपि एकम् परोक्षतत्त्वं मतैक्येनाङ्गीकुर्वन्ति । यथाऽनेके दार्शनिकाः विषयान्तरेषु विवदमाना अपि कस्मिंश्चित् एकस्मिन् अनिर्वचनीय तत्त्वे प्रायः समविचारका दरीदृश्यन्ते । यद्यपि तत्र नामरूपमान्यता भेदः प्रतीयते परं नहि मूलस्वरूपे भेद । इमामेवानुसरणीमनुसरन्तः साहित्याचार्याः अलंकारशास्त्रकृत्पदाः सन्ति । तेषां नामरूपविशेषे अस्ति वैमत्यम्, परं मूलतत्वरूपे समेऽपि संस्मरन्ति एकमनिर्वचनीयं सहृदयहृदय संवेद्यं ब्रह्मानन्दसहोदरतत्त्वम् । यं तत्वं अलंकारसम्प्रदाय मूर्धन्य भूताः आचार्याः ध्वनिरिति नाम्ना व्यवहरन्ति । यद्यपि भामहोद्भट्टप्रभृतयः चिरन्तन अलंकारकाराः ध्वनिं अन्यरूपे निगदन्ति । केचन कोविदाः निषेधरूपेणैव तं संस्मरन्ति अनिर्वचनीयत्वेन च । परमस्ति ध्वनिनाम कश्चित् पदार्थः इति सर्वसम्मतं मतम् । ध्वनिरिति शब्दमधिकृत्य किमर्थमयं विवादः प्रचलितः इति समुदिते प्रश्ने उत्तरयन्ति विद्वान्सः यत् "काव्यस्यात्मा ध्वनिरिति ।" यथा भारतीयवाङ्मये आत्मानमधिकृत्य बहुविचारितं विचारकैः तथैव काव्ये जीवातुभूतध्वनि विषये विचारः औचित्यं बिभर्ति ।

अत्र साहित्य जगदाटवी वीचिषु नाना सम्प्रदायसम्मोदिताः विविधविषयाः रीति गुणालंकारप्रभृतयो काले काले प्रादुरभवन् । तेष्वेव काव्यात्मभूतेषु ध्वनिनाम सिद्धान्तोऽपि श्रुतिपथमायाति । तत्रैव अस्माभिरिदानीं पक्षपातरहितयाधिया क्रियते विचारः । यतोहि अन्यान्नतिशेतेराद्धान्तोऽयं काव्य क्षेत्रे । ध्वनेरस्य कोऽर्थः किं विषयम् गर्भकृत् प्रवृत्तोऽयं ध्वनिशब्दः, कोऽस्य जन्मदः प्रसारकः प्रचारकश्च, केन सर्व सिद्धान्त शिरोमणिपदवीप्रतिष्ठापितोऽयमिति सन्ति केचन विवेच्याः प्रश्नाः । अत्र समेऽपि सेमुषीमन्तः प्रतनाप्रतनाः ध्वनिरिति शब्दं श्रद्धया सोत्साहेन च संस्मरन्ति ।

काव्ये तत्व सत्वसमीक्षणपरैः सहृदयहृदयैः आलंकारिकैः काव्यार्थस्य अनिर्वचनीयं सौन्दर्यं नातिपिहितरूपे नातिपरिस्फुटरूपे एव संरक्षितम् यथा—नान्ध्रीः पयोधर इवातितरां प्रकाशो, नोगुर्जरीस्तनइवातितरां निगूढः, अर्थो गिरमापिहितः

पिहितश्चकश्चित्, सौभाग्यमेति मरहट्टवधुकुचाऽभा । पण्डितराजमते तु ध्वनेः किं स्वरूपं, केन च पूर्वं स्वीकृतः सिद्धान्तोऽयं इति जिज्ञासायां सिद्धान्तस्यास्य प्रतिष्ठापकः आनन्दवर्धनो शब्दमिमं वैयाकरणेभ्यः स्वीकृतवान् । यथा चोक्तं ध्वन्यालोके प्रथमे हि विद्वान्सो वैयाकरणाःव्याकरणमूलत्वात् सर्वविद्यानां ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति, तथैवान्यैः तन्मतानुसारिभिः काव्ये तत्वार्थदर्शिभिः वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यम् इति व्यपदेशो व्यञ्जकत्वसाम्यात् ध्वनिरिति । अनुमोदतेऽत्र मम्मटोऽपि बुधैः वैयाकरणैः प्रधानभूतस्फोटरूप व्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मताऽनुसारिभिः अन्यैरपि न्यग्भावित वाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थ युगलस्य ध्वनिरिति व्यवहारः कृतः ।

तेन पूर्वं पूर्वं वर्णानुभवजनित संस्कार सहितान्तिमवर्णानुभवेन स्फोटो व्यज्यते । स च ध्वन्यात्मकः । शब्दो नित्यः ब्रह्मस्वरूपः सकलप्रत्ययप्रत्यायनक्षमः अङ्गीक्रियते । तद् व्यञ्जकश्च वर्णात्मकः शब्दः । वृत्तिस्तु व्यञ्जनैव । तद्व्यञ्जकश्च शब्दो ध्वनित्वेन व्यवह्रियते इति वैयाकरणानां मतम् । वैयाकरणाः अखण्डस्फोटरूपं तथाऽखण्डानुरणन रूपव्यञ्जकं ध्वनिरिति निगदन्ति । अतः प्रधानीभूतव्यङ्ग्यव्यञ्जक सामर्थ्यात् गुणीभूतवाच्यं यद्व्यङ्ग्य तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्य उत्तमकाव्यस्य अन्यैरपि कतिपयै. वैयाकरणानुसारिभिः ध्वनिपण्डितैः आलंकारिकैरिति यावत् । ध्वनिरिति संज्ञा कृता । एवमेव काव्येऽपि यदा शब्दो वा अर्थो वा अमुख्यत्वं भजते तथा तयोरनुरणनेन व्यङ्ग्यार्थं प्रतीतिर्भवेत् । तदा तत्काव्यत्वं ध्वनिरिति संज्ञामविगच्छति । ध्वनिशब्दः यद्यपि वैयाकरणैः (येनोच्चारितेन सास्नालाङ्गुलककुद्खुरविषाणिनाम् सम्प्रत्ययो भवति स शब्द., अर्थप्रतीतिपदार्थको लोके ध्वनि शब्दः) इत्यादि पंक्तिषु शब्दरूपेणाङ्गीकृतः, परं वैयाकरणैरङ्गीकृतः ध्वनिः स्फोटात्मक एव । स्फोटसिद्धान्त एव अस्य साहित्यध्वनेः मूलमिति । यतोहि स्फोटस्य इयं व्युत्पत्ति यत् (स्फुटति अर्थः यस्मात् स स्फोटः) एवं वैयाकरणैः नित्योऽखण्डश्च शब्दरूपे स्फोटशब्दस्य कल्पना विहिता । वर्णपदवाक्यादयः स्फोटरूपस्यैव व्यङ्ग्यस्य व्यञ्जकाः सन्ति । साहित्यकाः अपि अस्यैव मार्गस्यानुयायिनः सन्ति । यथा अखण्डः नित्यश्च स्फोटः आदावेव भवति तथा वर्णपदादयः प्रदीपवत् व्यञ्जयन्ति । एवमेव सहृदय हृदये स्थितस्य व्यङ्ग्यार्थस्य प्रतीतिं व्यञ्जनाव्यापारान्वितः शब्दो वा अर्थो वा अभिव्यञ्जयति । यथा प्रतिपादितं ध्वनेरध्वनिकृत्प्रवेशेन आनन्दवर्धनेन "यत्रार्थः शब्दोवा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्त काव्यविशेषः स ध्वनिरिति बुधैः कथितः ।" अर्थात् यत्र वाच्यार्थः स्वस्वरूपं वाचकशब्दश्चाभिधेयार्थं गौणीकृत्य तं कमपि विलक्षणव्यङ्ग्यार्थं मुख्यतया प्रकाशयति स एव काव्यविशेष मनीषिभिः ध्वनिरूपेणाङ्गीकृतः, स चाङ्गीकृतो ध्वनि ।

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभातिलावण्यमिवाङ्गनासु ॥"

व्यञ्जनया व्यज्यमानं तद् व्यङ्ग्यरसादिवस्तुवाच्यार्थात् किमपि विलक्षणमेव विद्वद्भिः विदेलिमम् । यद्धि रमणीनां प्रसिद्ध मुखनयननितम्बजघनस्तनाद्यवयवातिरिक्तं

परमरमणीयं लावण्यमिव महाकवीनां सूक्तिषु भासते । लावण्यं हि नाम "मुक्ताफलेषु शय्या तरलत्वमिवान्तरा, प्रतिभाति यदङ्गेषु, तल्लावण्यमितीरितम् ।"

इति लक्षण लक्षितं किमपि रमणीयं कान्तिपूरमेव विज्ञेयम् । इत्थं गुणविशेष विशिष्टस्यास्य ध्वनिशब्दस्य का व्युत्पत्तिरिति जिज्ञासायामुच्यते । ध्वनति ध्वनयति वा यः स ध्वनिरिति कर्तृव्युत्पत्या व्यञ्जकौ शब्दार्थौ ध्वनिः । ध्वन्यते यः स इति कर्मव्युत्पत्या व्यङ्ग्यादिव्यङ्ग्यालंकारः व्यङ्ग्यवस्तु च ध्वनिः रसादि पदेनात्र रस, रसाभास, भावाभास भावोदय, भावप्रशम, भावसन्धि, भावशवलतादि अवगन्तव्या। ध्वनति ध्वन्यते वा अस्मिन्निति अधिकरण-व्युत्पत्या ध्वनिकाव्यम् एवं ध्वनिशब्दः पञ्चधा प्रयुज्यते । यथा व्यञ्जकः शब्दः, व्यङ्ग्यार्थः, व्यङ्ग्यरसादिः, व्यञ्जनाव्यापारः, व्यङ्ग्यप्रधानं काव्यमिति । एवं अन्यत्र ध्वनि भेद प्रसङ्गे अनेके भेदोपभेदाः अपि आचार्यैः प्रदर्शिताः, परमत्र विस्तरभयात् न लिख्यते । प्रसङ्गेऽस्मिन् विहङ्गमदृष्टया एतदपि विचारणीयं भवति यत् ध्वनिसिद्धान्तस्य अननुयायिभि अपि ध्वनेः स्मरणं विहितम् यथा प्राह जगन्नाथः —

"इदं तु बोध्यं ध्वनिकारात् प्राचीनैः भामहोद्भट प्रभृतिभिः स्वग्रन्थेषु कुत्रापि ध्वनि गुणीभूतव्यङ्ग्यादिशब्दाः न प्रयुक्ताः इत्येतावतैव तैर्ध्वन्यादयो न स्वीक्रियन्ते इत्याधुनिकानाम् वाचो युक्तिरयुक्तैव । यतः समासोक्ति व्याजस्तुत्यप्रस्तुतप्रशंसाद्यलंकार-निरूपणे कियन्तोऽपि गुणीभूतव्यङ्ग्य भेदास्तैरपि निरूपिताः । अपरश्च सर्वोऽपि व्यङ्ग्य-प्रपञ्च पर्यायोक्तकुक्षौ निक्षिप्तः । न हि अनुभवसिद्धोऽर्थो बालेनापि अपह्नोतुं शक्यते-ध्वन्यादिशब्दैः परं व्यवहारो न कृतः । न हिएतावता अनङ्गीकारो भवति । प्राधान्यात् अलंकार्यो हि ध्वनिरलंकारस्य कुक्षौ कथंकारं विनिवेशित इति तु विचारान्तरम्। एवं स्वीकृतैव तैरपि अन्ये ये अप्पयदीक्षितजगन्नाथमम्मट आनन्दवर्धनासर्वेऽपि मतैक्येन स्व स्व ग्रन्थेषु ध्वनिं यथोचितपदे स्थापितवन्त एव । एभिः समैः ध्वनिपथपोषकैः स्वेषु ग्रन्थेषु कालिदासवाल्मिकी प्रभृतय अनेके महाकवयः उदाहरणत्वेन प्रस्तुताः । येषां पद्यानि ध्वनि उदाहरणे श्रेष्ठतमानि सिद्ध्यन्ति । एवं आरामायणात् अद्ययावत् सर्वत्र सर्वेषु प्रमुख साहित्यग्रन्थेषु ध्वनिसिद्धान्तः विजयतेतराम् । सिद्धान्तस्य अस्य गरीयसी गरिमा केवलं संस्कृतवाङ्मय भारतीय साहित्ये एव वा नास्ति अपितु अन्यभाषाप्रधान-वैदेशिकसाहित्येऽपि ध्वनिरिति सिद्धान्तः नामभदेन सर्वैः स्वीकृतः ।

पाश्चात्य काव्यशास्त्रे ध्वनिः ।

न केवलं भारतीयैराचार्यैः पाश्चात्य-समीक्षकैरपि ध्वन्यर्थस्य सत्वं महत्त्वं चाऽभ्युपपन्नम् । यथा क्विन्टैलियन नाम्ना समीक्षकेण अर्थस्य गोपनकला (Art of Concealment) काव्यस्यानिवार्यं तत्वं प्रतिपादितम् । एतच्च भारतीयमते वाच्यार्थस्योप-सर्जनीभावेन सह साधु संवदति । होरेस नाम्ना समीक्षकेण नवार्थं-बोधनं काव्य-सौष्ठवं ऽर्थेऽपेक्षणीयम् उक्तम् । एतदपि वाच्यादन्यार्थबोधने ध्वनिपक्षएवाऽपतति । आई० ए० रिचर्डमहाशयश्च शब्दस्य चतुर्विधान् अर्थान् स्वीकरोति सेन्स्, फीलिंग् टोन्, इन्टेन्शन्

इति । प्रथमः खलुवाच्यार्थ एव । चतुर्थो यदि मीमांसक दृष्ट्या तात्पर्याऽर्थोऽपि स्वीक्रियते तदापि द्वितीय-तृतीया क्रमेण रसध्वनि काव्यादिवशोत्थध्वनिभ्यां संवदतः अन्यथा चतुर्थोऽपि प्रकरणवशायातो वस्त्वलंकाररूपो ध्वनिरेव नान्यत् । रोमाञ्चक साहित्योदये च रहस्यभावनायाः (Mysticism) काव्यक्षेत्रे प्रवेशेसति लक्षणामूला वक्रता तदीय काव्यभाषायाः अङ्ग समजनि । प्रतीकात्मिकायाः भाषायाश्च प्रयोगः तत्राऽपरिहार्योजातः । तद्वशाच्चव्यञ्जनायाः प्रत्यक्षतो ग्रहण तत्र सिद्धयति । सजेशन् (Suggestion) एवं सजेस्टेड् सैन्स् (Suggested Sense) इत्येतौ शब्दौ स्पष्टमेव व्यञ्जनां व्यङ्ग्यार्थञ्च बोधयतः । एवञ्च ड्राइडनः तथा एबरक्रोम्बीमहाशयः मूर्तपदार्थोत्प्रक्षणशक्तिकल्पनां संविदबोधाय च प्रतीकात्मंत्र शब्द प्रयोगं कवेरपरिहार्यमुपकरणं वदन्तौ व्यङ्ग्यार्थसत्तायाः परिपोषकौ । लौञ्जाइनस महाशयस्य औदात्यसिद्धान्तस्य (Sublimoty) विवेचनेऽर्धस्य औदात्तता-निरूपण तस्य ध्वन्यमानस्यैव परिणमते ।

पाश्चात्यसिद्धान्ते ध्वनि समर्थकं विशिष्टतमंतत्वं कल्पना (ımagination and fancy) लक्ष्यते यां तदीय समीक्षकाः काव्यस्याऽसाधारणीं शक्ति स्वीकुर्वंते ।

(डा० अवधद्विवेदिनः साहित्य-सिद्धान्तात् पृष्ठ ४६८ ।

# संस्कृतं कथा साहित्यं च

**श्री नारायणाचार्यः**

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ।।

नमाम्यहं गुरुं नित्यं ज्ञानसंवर्धकारकम् ।
नारसिंह इति ख्यातं ईप्सितार्थप्रदायकम् ।।

यद्यपि वेदाः पुराणेतिहासाः, काव्यानि प्रभु सुहृत् कान्तासम्मितरूपेणोपदेशकानि भवन्ति लोके लोकानां, अथापि केचन नीतिशास्त्रग्रंथाः शिशुक्रीडासदृशानन्दहेतवः भवन्ति । शिशुक्रीडास्तु नकेवलमानन्द हेतवः अपितु उपदेशकाश्च । शिशुक्रीडास्त्वानन्द-हेतवः इत्यत्र न केनापि विप्रतिपत्तिप्रदर्श्यत इति सर्वजनानुभूतमेव । कथमुपदेशहेतवः इति चेद्ब्रूमः—यद्येकत्रानेकास्सम्मिलिता भवेयुः शिशवः, ते सर्वेऽपि जातिमतदेशादिभेदं वा धनिकनिर्धनत्वादिकं वा अपरिगणयन्त एव स्वेच्छया खेलन्ति रमन्ते च । एतत् दृष्ट्वा वृद्धास्सर्वेऽपि तथा वर्तितव्या यथा सर्वेजनाः समानाः इति । ये तु शिशुसदृश-सहृदया भवन्ति तादृशानामेव वसुधा सर्वापि एकमेव कुटुम्बकं भवति । न केवलमेता-दृशसमानता प्रकटीक्रियते तेषां क्रीडनादिभिः, अपितु उदारतादयो गुणा अपि प्रकटी-क्रियन्ते । यथा क्रीडनसमये तेषां मध्ये कोऽपि रोदिति तं सान्त्वयितुं अन्ये सर्वेपि यतन्ते । स्वहस्तगतमपि वस्तु केवलं प्रदास्यन्तीति न प्रत्युत अर्पयन्ति च प्रतिफल-निरपेक्षतयैव । यदि सः संतुष्टः भवेत् तदान्ये सर्वेऽपि स्वयमपि सन्तुष्टाः भवन्ति । अनेन कर्मणास्माभिः एवं परिज्ञातुं वा अनुसंधातुं वा शक्यते यत् परेषामाभीलादयः अस्माभिः निवारणीयाः इति । ते एव बालाः वृद्धाः भूत्वा उदारचरिताश्चरित्रकाश्च भवन्ति । तेषां कृते वसुधैव कुटुम्बकं भवति । ते एव त्रिभुवनमुपकारश्रेणिभिः प्रीण-यन्ति, परगुणपरमाणून् पर्वतीकृत्य निजहृदि नित्यं विकसन्ति, परहृदयानि विकास-यन्ति च ।

उत्तमोत्तमोपदेशदानयोग्यानि काव्यानि कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदिति उपदिशन्ति, तथापि कदाचिन्मनुष्यः कान्तामपि

दूरीकृत्य, अर्थात् तस्याः वचनमपि अनादृत्य स्वेच्छाचारी भवतीत्यसकृत् बहुषु विषये पश्याम एव ।

शिशुभिः व्यङ्ग्यमर्यादया सूचितमुपदेशं तु अनादरीकर्तुं वय आधिक्यात् लज्जामहे । केचनबालाः वृद्धानामपि दोषान् निर्दिशन्तीत्यत्र नास्मासु विद्यते संदेहः ।

एवं पर्यालोच्यमाने तथाविधक्रीडासदृशपशुपक्ष्यादीनां उपदेशयुताः कथाः आकर्णयामो वा पठामो वा भवेम तदा अवश्यमस्माकं हृत्सु जायते परिणतिः । पशु-पक्षिणोपि—

यो नात्मना न च परेण च बन्धुवर्गे,
दीने दयां न कुरुते न च मर्त्य वर्गे ।
किं तस्य जीवितफलं हि मनुष्यलोके,
काकोपि जीवति चिरं च बलिं च भुङ्क्ते ॥

यथा वा—

परिवर्तिनि संसारे मृतः को वा न जायते ।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्छ श्रियाधिकः ॥

(मित्रभेदे प्रथमकथायां, ४, ७, श्लोकावेतौ) एवं चिन्तयन्तिचेत् भाषणशीलाः, बुद्धिमन्तः विवेकिनश्च वयं कथमेवं पापचारिणः संजातास्मः । यतोऽहि—

"यदिनामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
दण्डमादाय लोकेऽस्मिन् शुनः काकांश्च वारयेत् ॥"

इत्युक्तरीत्या एतादृशशरीरकस्यापि कृते मौढ्यनास्माभिः पापानि क्रियन्ते । इत्याकारकां चिन्तामपि वा, पठनकाले शिशुक्रीडादर्शनकालसंजातानन्दसदृशानन्दानुभव-समयेऽपि वा वयं अस्माकं वर्तनीं दृष्ट्वा लज्जामहे । यद्येकदा लज्जितास्मः तर्हि अवश्यं लोककल्याणकारिणो भविष्यामः । तदैव लोकास्समस्तास्सुखिनो भवन्त्विति यतिष्यामः । तथा यतित्वा अस्मिन् लोके शाश्वतिकीं यशोराशिं लब्ध्वा परलोके चिरन्तनीं अनुपमां असाधारणीं अक्षय्यां मुक्तिं लब्ध्वा तुष्यति जीवः ।

तथाविध शक्तिदायिन्यः मुक्तिदायिन्यश्च भवन्ति एताः मृगपक्षिभिरुपदिष्टाः नीतिबोधका कथाः यथा कर्म तथा फलं भवति किल यथा—यदि सम्यक् पठामश्चेत् उत्तमश्रेण्यामुत्तीर्णतां लप्स्यामहे । यदि सन्मार्गेण धनं संपादयिष्यामः तर्ह्येव वयं अनुभविष्यामः नोचेच्चोरैः संगृह्यते तद्धनं अथवा अन्यथा नष्टं यास्यत्यवश्यमिति नित्यं स्वानुभवनद्वारा जानीम एव । परन्तु पुनरपि मोहावृता भूत्वा यशोदेव "हा मम पुत्रक ? कृष्ण" इति वत् भवामः ।

अस्तु नामेवं तान् प्रस्तूय प्रकृतमनुसरामः—एवं नीति बोधका वेदान्तबोधकाश्च कथाः केवलपशुपक्ष्यादिपात्रयुताः आदिकाव्याद्रामायणादारभ्यैव वर्तन्ते । एवं महाभारत संहितायां पुराणादिषु च वर्तन्ते । केवलतत्पात्रयुताः नीतिबोधकाश्च पञ्चतन्त्रादयोऽपि ग्रन्थाः अनेकशः संस्कृतसाहित्ये वर्तन्ते एव । यथा महाभाते गृध्रगोमायुसंवादे गृध्रोवदति—

"न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्य प्राणिनां गतिरीदृशी ।।"

इति । इहेति अस्मिन् संसारे । संसार एव नश्वरो भवति चेत्, तत्रत्याः शाश्वताः भवन्ति किम् ? वयमपि एकदा एवमेवयास्यामो दिवम् । अलमतिपरितापेनेति ।

तदा गोमायुना कथ्यते—

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशंकिताः ।।"

इति । अनेनास्माभिरेवं ज्ञातुं शक्यते यत् "पूर्वक्षणं यावत् अमुमात्मीयं मत्वेदानीं मृत इति हेतोः निर्दय भावेन न त्यक्तव्यम् । केनापि भावेन अर्थात् रोदनादिभिर्वा स्नेहो दर्शनीय इति । मृतस्यविषयेऽपि स्नेहो दर्शनीयश्चेत् तर्हि जीवतां विषये किमु वक्तव्यम् अतः सर्वदा प्राणिषु विषये प्राणिभिः स्नेहो दर्शनीयः । यदि कश्चित् सर्वेष्वपि स्निह्यति, सर्वेषां कृते शुभानाचरति तस्य दुर्गतिरेव न भविष्यति । भगवद्वाणी अपि तथैव यत्—"नहि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति" इति । (भगवद्गीता ६-४०) तदेवोच्यते—

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनिसंसारे मृतः को वा न जायते ।।

अन्यच्च—

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ।।

अमुं श्लोकं करालमुखो नाम मकरः रक्तमुखं नाम वानरं प्रति वदति । वानरः जिघांसमानात् मकरादात्मानं कथंचिदरक्ष्य तं निष्कासितवान् । तथा मित्रेण निष्कासितो मकरः गृहं प्रति गत्वा तत्र स्वगृहमन्येनाक्रान्तमिति ज्ञात्वा चिन्ताकुलः पुनः स्वमित्रं रक्तमुखं प्राप्य स्वदीनावस्थां प्रकटीकृत्य "आत्मन्यनुग्रहं प्रदर्श्योपायो दर्शनीयः" इति प्रार्थयामास । पुनरेवमपि नीतिं प्रादर्शयत्—"उपकारिषु यः साधुः" इति ।

तच्छ्रुत्वा वानरः स्वप्राणहरणायोद्युक्तमपि तं क्षमयाश्वास्यैवमुपदिदेश—

उत्तमं प्रणिपातेन, शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समं शक्तिपराक्रमैः ।।

इति ।

अनेन कर्मणास्माभिः बुद्धिमद्भिरेवं चिन्तनीयं यत् वानरोप्यपकारिणमप्यतोषयत्किल । अत एवास्माभिरपि सर्वदा सर्वदा सदुपदेशदायिभिः भवितव्यम् । तथाहि—

"प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात् तदेव वक्तव्यं वचने का दरिद्रता ।।

इति खल्वार्योक्तिः । अत एवामुं मनसि सर्वदा चिन्तयन् वर्तितव्यम् ।

उत्तमं प्रणिपातेनेत्यस्योदाहरणरूपेयं कथाअस्ति कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः । सचैकदा वने स्वयं मृतं गजमपश्यत् । सः तस्य चर्मभेत्तुमशक्तः तस्य परितः भ्रमन्नवर्तत । अत्रान्तरे इतश्चेतश्च विचरन् सिंहस्तत्र समाययौ । तं दृष्ट्वा सौम्येन तं जेतुं शृगालः झटिनि लब्धसंज्ञः तस्याभिमुखं गत्वा क्षितितलन्यस्तमौलिः संयोजितकरयुगलः सविनयमेवमुवाच – "स्वामिन् सेवकोऽयं देवस्याहारं रक्षति । स्वीकृत्यानुग्राह्य" इति । तथा प्रणतं तं दृष्ट्वा सिंहः प्राह भोः । अहमन्येन हतं सत्वं न खादेयं, तत्तुभ्यमेवैनं दिशामि, सुखं भुज्यतां, यतोहि—

वनेऽपि सिंहाः मृगमांसभक्ष्या
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीतिमार्गं परिलङ्घयन्ति ।।

इत्युक्तवाऽन्यत्र जगाम । अनेनास्माभिरेवमपि संस्मरणीयं भवति यत्—

निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतुवा यथेच्छम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथात्प्रविचलन्ति पदं न धीराः ।।

अन्यच्च—

क्षुत्क्षामोपि जराकृशोपि शिथिलप्रायोपि कष्टां दशा
मापन्नोपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।

मत्तेभेन्द्र विभिन्नकुम्भपिशितग्रासैकबद्धस्पृहो
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ।।

इति । अनेन संभावनीया विषया बहवो वर्तन्ते । तत्तथातिष्ठतु नाम—

तथा सिंहे गते कश्चन शूरो व्याघ्रः समागतः । तं दृष्ट्वा—

"न यत्र शक्यते कर्तुं सामदानमथापि वा ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ।।"

इति संस्मृत्य चतुरकः तदभिमुखीभूयैवमवदत् ससंभ्रमं—माम ! कथमत्र मृत्युमुखे प्रविष्टोसि ? एष गजः सिंहेन व्यापादितः । स च मामस्य रक्षणे नियुज्य स्नानार्थं गतः । ह्यः, कश्चित् व्याघ्रः तस्य भक्षमभक्षयत् । ततः क्रुद्धः सिंहः यदि सः तव छायामपि पश्येत् तव प्राणान् हरेत्" इति । तत् श्रवणमात्रेणैव द्वीपी पलायितः ।

व्याघ्रे गते कश्चन चित्रको समायातः । तं नीचं दृष्ट्वा—दृढदंष्ट्रोऽयं चित्रकः । तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति तथा करोमीत्येवं निश्चित्य तदभिमुखीभूयैवमुवाच—"भो भागिनेय । कथं चिरात् दृष्टोऽसि ? बुभुक्षित इव लक्ष्यसे । एष गजः सिंहेन हतः अहमस्य पालने नियुक्तश्च । यावत् सिंहो नायाति तावत् किंचित् भक्षयित्वा क्षुधां प्रशमयस्व । दूरादेव सिंहं दृष्ट्वा वदिष्यामि । द्रुतमपसर्तव्य" मिति । लोभाक्रष्टः स चित्रको यावत् गजचर्मणि छेदमकरोत् तावज्जम्बुकेनाभिहितं—"भो भागिनेय ! गम्यताम् । एष सिंहः समायातीति । श्रवणमात्रेण चित्रको पलायितः । यदा सन्तुष्टः शृगालः तद्भेदकृतद्वारेण किंचिन्मांसं भक्षयति तदा अपरः फेरवः समायात । तं समानबलं दृष्ट्वा महाचतुरकः तेन सहायुध्यत । तं हत्वा चिरं हस्तिमांसेन स्वोदरपूरणमकरोत् ।

अनया कथया अस्माभिरेवमवगन्तव्यं भवति यत् तत्तत्कालेषु तांस्तानुपायानाश्रित्य शुभानि प्राप्य सन्तुष्टैः भवितव्यमिति ।

अन्ततः पर्यालोच्यमाने अस्माभिरेवमवगन्तव्यं भवति यत्—सर्वैरपि सदा सदेवाचरणीयं—यतो हि—

"यान्तिन्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ।।"

इत्येव किल आदिकाव्यस्य श्रीमद्रामायणस्य मुख्योद्देशः ।

यद्यपि वेदाः प्रभुसम्मिताः, पुराणेतिहासादयः सुहृत्सम्मिताः, काव्यानि कान्तासम्मितादीनि भवन्ति, अथापि एतानि पञ्चतन्त्रादीनि शिशुसम्मितानि भवन्ति ।

"गुणाः पूजास्थानं गुणिषु न च लिंगं न च वयः" इत्युक्तरीत्या तत्र पात्रता-प्राधान्यं न गणनीयमस्माभिः; अपितु पात्रकृतोपदेशस्यैव प्राधान्यम् दातव्यम् । एतन्मन-सिनिधायैव शीर्षिकाकारैरेवं शीर्षिका प्रदत्तेति मन्यामहे ।

सर्वे जनाः सुखिनो भवन्तु ।

सर्वस्तरतु दुर्गाणि ।

सर्वो भद्राणि पश्यतु ।

समस्तसन्मङ्गलानि भवन्तु ।

इति शम्

# हृध्वनेः संस्कृत भाषा शास्त्रीयमध्ययनम्

**लें० डा० हर्षनाथ मिश्रः एम० ए०**

देव नागर्यां वर्णमालायां 'ह्' ध्वनि संकेत चिह्न मन्ते दत्त स्थानं, किन्तु आक्षर समाम्नाये ध्वनिरयं द्विरुक्तः, हल् प्रत्याहारस्य प्रथमोऽन्तिमश्च ध्वनिर्हकारः। प्रत्याहार दृष्ट्या 'ह्' ध्वनि द्विरुक्तेः प्रयोजनानि प्रतिपादितानि महाभाष्य कारेण। तेनोक्तम्—अडादि प्रत्याहार प्रयुक्त णत्वादि कार्याय हस्य तत्प्रत्याहारे समावेशाय प्रथमो हकारः, वशादि प्रत्यय सिद्धये तस्य संग्रहाय हल् सूत्रे च तस्योपादानमावश्यकमिति। ध्वनि विज्ञान पण्डितस्य प्रत्याहार सूत्र प्रवक्तु बुद्धौ ध्वनि विज्ञान दृष्ट्याऽप्यस्या द्विरुक्तेः महत् प्रयोजनमुत्पश्यामः। पाणिनिना संस्कृत भाषायां 'ह्' ध्वने द्वैविध्यं दृष्टम्। व्यञ्जनात्मको 'ह्' ध्वनिः विसर्गात्मकश्च। 'हरि' 'साहित्य' 'सहादि' शब्देषु व्यञ्जनात्मको 'ह्' ध्वनिः। 'रामः' इत्यादौ विसर्गरूपो हि सः। हकार विसर्गयोः स्थानैक्यं यद्यपि प्रतिपादितं संस्कृत व्याकरणेषु यत्र तत्र सर्वत्र अकुह विसर्जनीयानां कण्ठ इत्यादिना ग्रन्थेन तथापि "अयोगवाहा विज्ञेया आश्रय स्थान भागिन" इत्युक्त दिशा विसर्गस्याश्रय स्थानमपि स्वीकृतमेव। इत्थं राम इत्यत्र विसर्ग पूर्ववर्तिनोऽकारस्याश्रयत्वाद् विसर्गस्य कण्ठस्थानं यथा सिद्धं भवति, तथैव 'हरिः' भानुः इत्यादौ आश्रयेकारोकारयोराश्रितो विसर्ग स्तालव्य ओष्ट्यश्च सिद्धो भवति। इत्थं विसर्गस्य न किमपि निश्चित मेकं स्थानमिति प्रतीयते। रामः हरिः इत्यादीनां वास्तविकमुच्चारणं रामह हरिह इत्येतद् भवतीति सर्वैरस्माभिरनुभूयत एव। विसर्गस्याश्रय स्थान स्वीकारस्य वर्ततेऽत्रैव स्वारस्यम्। सहि पूर्व वर्तिस्वर ध्वनि मिश्रितो भूत्वोच्चारितो भवति। अतएव संस्कृत व्याकरणे विसर्गस्याच्त्वं प्रतिपादितमस्ति। अनेकत्र विसर्गस्योच्चारणं ह ध्वनिवद् भवतीति सिद्धं संस्कृत-भाषा विज्ञाने 'हस्य' ध्वने द्वैविध्यम्। एवञ्च 'ह्' ध्वनिः स्वरात्मको व्यञ्जनात्मकश्चेति सिद्धयति। आधुनिक संस्कृत भाषा वैज्ञानिकै 'हँ' ध्वने द्वैविध्यं स्वीकृतम्। तेन व्यञ्जनात्मकस्य हस्य कण्ठ स्थानमङ्गीक्रियते अथ च विसर्गात्मकस्य तस्य स्थानं स्वर यन्त्र मुखं मन्यते। इत्थं विचित्रो हि 'ह' ध्वनिर्मिथो विरुद्ध स्वर व्यञ्जनात्मकत्वात्। स्वररूपः सन्नपि स नान्य स्वरवत् स्वतन्त्रोच्चार्य इति तस्यान्यद् वैचित्र्यम्। किञ्च व्यञ्जनात्मको 'ह्'

ध्वनि र्घोषरूपः स्वरात्मकः सन्नपि स विसर्गात्मकत्वेनाघोषरूप इति स्वीक्रियते भाषा वैज्ञानिकैः । ध्वनि विज्ञान वेत्ता चतुर्दशसूत्र प्रणेता तस्येदं सर्वं वैचित्र्यं वैशिष्ट्यं महत्वञ्च जानाति अतस्तेन स द्विरुक्तः । 'ह्' ध्वनि र्हि महान् वर्तते व्यञ्जनध्वनौ । 'ह्' ध्वनिरेवाल्पप्राणैः संयुज्य महाप्राणं जनयति । 'क' ध्वनि संयुक्तात् ह ध्वनेः नास्त्यतिरिक्तः 'ख' ध्वनिः । 'प' संयुक्तो ह ध्वनिरेव फः । संयोगादल्पीयो वैचित्र्यं तु जायत एव । एलाशर्करा लवङ्गादिसंमिश्रण निर्मिते प्रपाणक रसेऽपि सहयोगि द्रव्य-रसापेक्षयाऽनुभूतो भवत्येव कोऽपि नूतनो रसः । इत्थं हि महाप्राणोत्तरसंयुक्तात् 'ह्' ध्वनेर्नान्यित् किमप्यपूर्वं वस्तु । अल्पस्य स्व संयोगेन महत्व सम्पादको 'हः' वस्तुत एव महान् वर्तते नास्त्यत्र भाषावैज्ञानिकानां मतद्वयम् । अतएवाधुनिक भाषावैज्ञानिका 'ह्' ध्वनि मिश्रितो ध्वनिः महाप्राण इति महाप्राणस्य लक्षणं कुर्वन्ति । पूर्वोक्तं हस्य वैचित्र्यं प्राबल्यं च मनसि निधायैव ध्वनि विदुषा प्रत्याहार सूत्र प्रवक्त्रा हकारो द्विरुक्तो माहेश्वरसूत्र श्रृंखलायाम् । हलपरपर्याये व्यञ्जने हकारस्य ध्वनेः वैचित्र्यं निर्दिष्टं दृष्ट्वा स ध्वनिः हलि प्रथमं स्थानं प्राप्तः । वस्तुतो हयवरट्लण् इति सूत्रद्वये संगृहीता वर्णाः स्वरत्वेन व्यञ्जनत्वेन चोभयथा परिगणनयोग्याः । अतएव 'हयवरल' इत्येते ध्वनयोऽर्धस्वरा अर्धव्यञ्जना श्चोच्यन्ते । यदि कोऽपि 'प्रति ह्यम्' इति शब्द-स्योच्चारणमतिशीघ्रं पुनः पुनश्च करोति तदा 'प्रति अयम्' इति श्रुतं भवति । तत्र प्रत्ययम् इति ध्वनि र्मा श्रूयतामिति नाञ्झलाविति सवर्णसंज्ञा प्रतिषिध्यते । यकार वकारौ तु अर्धस्वरत्वेन भाषाविज्ञाने सर्वत्र परिगणितौ । प्रत्याहार सूत्र श्रृंखलायाम् इदं सर्वं ज्ञात्वैव स्वरसाधक प्रत्याहारादव्यवहितोत्तरमर्धस्वर संग्राहकं सूत्रद्वयं दृश्यते । इकारोकारयोः स्थाने यण् रूपेण यकारवकारौ, सम्प्रसारण रूपेण च यकारवकारयोः स्थाने इकारोकारौ भवतः । इत्थं यण् रूपेण सम्प्रसारण रूपेण च मिथो विनिमय दर्शनात् यकारवकारयोः अर्धह्रस्वत्वं ज्ञातं भवति । किञ्च 'हरयिह' हर इह इत्यत्र सप्रयासमुच्चारणे कृतेऽपि न कोऽपि साधीयान् भेदः प्रतीयते समानाभिहारात् मन्ये 'हरयिह' इत्यत्र न श्रूयते यकारः । सम्भाव्यते ऽतएव शाकल्येन वैकल्पिको यलोपो विहितः ऋस्थाने 'रेफः' न केवलं यणिकृते भवति, अपितु गुण वृद्धि विधानेऽपि 'र' परत्वं दृश्यते सर्वत्र । रेफस्य सम्प्रसारणं भवति ऋकारः 'गृहम्' 'पृच्छति इत्यादौ । इत्थं रेफ ऋकारयो रपि ध्वनि विनिमय दर्शनात् सिद्ध्यति "रेफस्यार्धस्वरत्वम्" । सर्वमिदं मनसि निधाय 'हयवरट्' इति सूत्रं स्वरसम्बन्धिसूत्रोत्तरं पठितम् । 'यरलवा' अन्त स्था इत्यादिनाऽपि यरलवानामन्तःस्थत्व प्रतिपादन मुखेनार्धस्वरत्वं प्रतिपादितम् । स्वर व्यञ्जनयोरन्तर्मध्ये तिष्ठन्तीत्यन्तःस्था इति व्युत्पत्त्यापि तस्यार्धस्वरत्वं प्रमाणितं भवति । उभय गुण दर्शनादेवैतेषामन्तःस्थ संज्ञा । हकारेत्वन्तस्थध्वनेरसंज्ञाकृतमर्धिक स्वरत्वमिति ज्ञात्वैव तस्य तेभ्य पूर्वः पाठः । सशषेतिवत्तत्रोष्मत्वमस्त्येव ।

कथनस्यास्य तात्पर्यं यत् 'ह' ध्वने द्वैविध्यम् तस्य स्वर व्यञ्जनोभयरूपत्वं, घोषाघोषवत्त्वं महाप्राणजनकत्वेनापूर्वं माहात्म्यं च विलोक्याक्षर समाम्नाये तस्य द्विरुच्चारणम् । एवमस्या द्विरुक्ते भाषा शास्त्र दृष्टयाऽपि नाल्पीयो महत्वमिति शम् ।

# अद्वैतवादस्य शून्यवाद वैलक्षण्यम्

**वे० सु० रामचन्द्रशास्त्री,**

यत्कृपाचन्द्रकिरणैः मदज्ञानं व्यलीयत ।
प्रणौमि ब्रह्मनिष्ठं तं चन्द्रशेखरभारतीम् ।।

औपनिषदानामद्वितीयं ब्रह्म पारमार्थिकं तत्त्वमभ्युपगच्छतां, माध्यमिकानां शून्यतां तथांगीकुर्वाणानां च सिद्धान्तवैलक्षण्यं प्रत्यपादि सूत्रभाष्यप्रभृतिष्वाकरग्रन्थेषु ।

अनयोर्दर्शनयो र्बहुधा साम्यमपि दरीदृश्यते तथाहि सत्यं द्विधा पारमार्थिकं सांवृतमिति सांवृतमपि द्विधा तथ्यसांवृतं मिथ्यासांवृतमिति अदोषैरिन्द्रियैरुपलब्धं लोकत एव सत्यं तथ्यसांवृतम् मायामरीच्यादिषु दोषवदिन्द्रियोपलब्धं यथास्वं तैर्थिकसिद्धान्तपरिकल्पितं लोकत एव मिथ्या, मिथ्या सांवृतम् तदुक्तम्—"विनोपधातेन यदिन्द्रियाणां षण्णामपि ग्राह्यमवैति लोकः । सत्यं हि तल्लोकत एव शेषं विकल्पितं लोकत एव मिथ्या ।। इति (मध्यमकावतारः ६.२५) इति माध्यमिकाः ब्रह्मज्ञानातिरिक्तबाध्यं प्रातिभासिकं सत्यं, ब्रह्मज्ञानैकबाध्यं च व्यावहारिकं सत्यमित्याचक्षाणा औपनिषदा माध्यमिकसमानाभिप्राया एव परमार्थसत्यस्य स्वरूपं माध्यमिका एवं विवव्रुः परमार्थसत्यहि सर्वव्यवहार समतिक्रान्तम्, निर्विशेषम्, असमुत्पन्नम्, अनिरोधम्, अभिधेयाभिधानज्ञेयज्ञानविगतम्, अविषयः सर्वकल्पनानाम् । भावाभावस्वपरभावसत्यासत्यशाश्वतोच्छदसुखदुःखशुच्यशुच्यात्मानात्मशून्याशून्य लक्ष्यलक्षणैकत्वान्यत्वोत्पादनिरोधादयो विशेषास्तस्य न संभवन्ति । तदेतदार्याणामेव स्वसंविदित स्वभावतया प्रत्यात्मवेद्यम् । इति औपनिषदानां परमार्थसत्यं ब्रह्मस्वरूपमपि ईदृगेव, परमार्थसत्यस्य प्रतिपादनमध्यारोपापवादाभ्यामेवेति माध्यमिकाः यदाहुः अनक्षरस्य धर्मस्य श्रुतिःका देशना च का ? श्रूयते देश्यतेचार्थः समारोपादनक्षरः ।। इति मध्यमकावतारेप्युक्तम् उपायभूतं व्यवहारसत्यमुपेयभूतं परमार्थसत्यमिति (६.४०) "व्यवहारमनाश्रित्य परमार्थो नदेश्यते । परमार्थमनागम्य निर्वाणं नाधिगम्यते" इति च 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" । "उपायाः शिक्षमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" ।। "मृल्लोहविस्फुलिंगाद्यैः सृष्टिर्या चोदितान्यथा । उपायः सोवताराय नास्तिभेदः कथंचन" ।।

इत्यादिकं निरूपयन्त औपनिषदा अत्रापि न विप्रतिपद्यन्ते परमार्थसत्यज्ञानमेव मुक्ति-साधनमिति संप्रतिपन्नमुभयोः "परमार्थमनागम्य निर्वाणं नाधिगम्यत" इति माध्य-मिकाः, "ब्रह्मविदाप्नोति परम्" इति वेदान्तिनः मुक्तिरपिद्विप्रकारा निर्वाणं परिनिर्वा-णमिति निर्वाणं सोपधिशेष इति परिनिर्वाणं निरूपधिशेष इत्यप्युच्यते औपनिषदा अपि जीवन्मुक्तिविदेहमुक्ति भेदेन द्वयीं मुक्तिमातिष्ठन्ति अविद्यामूलः संसारः, विद्ययैव अविद्यानिवृत्तिरित्युभयोः समम् सत्यप्यविद्यास्वरूपादिषु वैलक्षण्ये साम्यमनयोः मत-योर्विस्पष्टमुपलभ्यते ।

वेदप्रामाण्यवादिनः समेपि दार्शनिका माध्यमिकमतं समदूदुषन् । औपनिषदा अद्वैतिन इत्थं प्रत्यवतस्थिरे । "क्षणिकत्वाच्च" (२.२.३१) इति ब्रह्मसूत्रस्य भाष्ये शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते नह्ययं सर्व-प्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपन्होतुम्, अपवादाभावे उत्सर्ग-प्रसिद्धेः इति प्रत्यपीपदन् । भाष्यमिदमाचार्यवाचस्पतिमिश्रा एवं व्यभजन् । "प्रमा-णानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते । अतात्त्विकत्वन्तु तद्गोचर-स्यान्यतो बाधकादवगन्तव्यम् । न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते । बाधके चातात्त्विकत्वमेषां तद्गोचर विपरीतत्वोपदर्शनेन दर्शयेत्, यथा "शुक्ति-केयम् न रजतम्" । "मरीचयो न तोयम्" । इत्यादि । तद्वदिहापि समस्त प्रमाणगोचर विपरीत तत्त्वान्तरव्यवस्थापनेन अतात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्शनीयम् । नत्वव्यवस्थापित तत्त्वान्तरेण प्रमाणानि शक्यानि बाधितुम्, विचारासहत्वं वस्तूनां तत्त्वं व्यवस्थापयद्बाधकं अतात्त्विकत्वं प्रमाणानां दर्शयतीतिचेत् किं पुनर्विचारासहत्वं वस्तु यत्तत्त्वमभिमतम् ? किं तद्वस्तु परमार्थतः सदादीनामन्यतमं केवलं विचारं न सहते अथवा विचारासहत्वेन निस्तत्त्वमेव ? तत्र परमार्थतः सदादीनामन्यतमं विचारं न सहत इति विप्रतिषिद्धम् । न सहते चेत् न सदादीनामन्यतमम् । अन्यतमं चेत् कथं विचारं न सहते ? अथ निस्तत्त्वं चेत् कथमन्यतमं तत्त्वमव्यवस्थाप्य शक्यमेवं वक्तुम् ? न च निस्तत्त्वतैव तत्त्वं भावानाम्, तथाहि सति तत्त्वाभावः स्यात् । सोपिच विचारं न सहत इत्युक्तं भवद्भिः । अपिचारोपितं निषेधनीयम् आरोपश्च तत्त्वाधिष्ठानो दृष्टः यथा-शुक्तिकादिषु रजतादेः नचेत्किंचिदस्ति तत्त्वं कस्य कस्मिन्नारोपः ? तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्म अनिर्वचनीय प्रपञ्चात्मनारोप्यते । तच्च तत्त्वं व्यवस्थाप्य अतात्त्वि-कत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपेयत इति युक्तमुत्पश्यामः" इति एतदुक्तं भवति यत्सांव्यवहारिकप्रमाणानां बाधो न भवितुमर्हति, अधिष्ठान तत्त्वज्ञानाभावात् । प्रपञ्चारोपश्च न युज्यते अधिष्ठानाभावादिति । इदृश्येव प्रणाली माध्यमिक दूषणे शिश्रिये बहुभिर्दार्शनिकैः ।

अत्र माध्यमिकाः प्रत्यवतिष्ठन्ते । तथाहि । तथागतेन भगवता कृतान्युपदेशा बहुभिर्विनेयैः शुश्रुविरे । सर्वज्ञेन न कश्चिदपि ग्रन्थः प्रणिन्ये तस्य परिनिर्वाणानन्तरं मार्कि सतके वत्सराणामेकस्मिन्नतीते सर्वज्ञोपदिष्ट सिद्धान्तमधिकृत्य शिष्येषु वैमत्य-मुदपद्यत । तत्परिहृतिं तद्द्वारा बौद्धराद्धान्त स्थिरीकारं चाभिलषद्भिस्तात्कालिकैं विनेयैः संघीभूय विचार्य चिरं पिटकत्रयं निबबन्धे । परिवहति काले बहवो गत्वा जन-

न्थिरे। अभिप्राया विविधाः स्वसिद्धान्ते ग्रन्थकृद्भिः व्याख्यातृभिश्च प्राकाश्यमनीयन्त यथादर्शनान्तरेषु। नागसेनप्रभृतय आचार्या शून्यतां ज्ञानज्ञेययोरत्यन्ताभावमेव तत्त्वं भगवद्बुद्धोपदिष्टमिति व्यवस्थापयामासुः। अन्येत्वाचार्याः सर्वकल्पनाधिष्ठानं पारमार्थिकं तत्त्वं परिनिर्वाणप्राप्यं सुगतसम्मतमिति प्रतिपादयांचक्रिरे। अतएव लंकावतारसूत्रे (ल० सू० ४८) तत्त्वं ह्यक्षरवर्जिमित्यभिदधे। यथेक्षुक्षीरगुडादीनां माधुर्यभेदः सरस्वत्याप्याख्यातुमशक्यः क्षीराद्युपयोक्तृमात्रवेद्यः एवं परमार्थतत्त्वं कैरपिशब्दैरवेद्यम्, दुःखादिभावयितृ मात्रवेद्यमित्युच्यते। मध्यकवृत्तौ परमार्थोह्यार्याणां तूष्णींभाव इति निरटङ्कि (मध्यमकवृत्ति ५३) अतएव नैतद्बुद्धेन भाषितम्। अशक्यवचनंहि तत्। अपि च स्वसमये अहिंसादीनां सामान्यधर्माणामपि महान्तमुपप्लवमवलोक्य भगवता तेषा मेव प्राधान्येन रक्षणाय तीव्रो यत्न आतस्थे। परमार्थमधिकृत्यौदासीन्यमवावलंबे। "न बुद्धिभेदं जनयेत्" इति भगवतो बुद्धस्यापि सम्मतम्। अतो माध्यमिक सिद्धान्ते सर्वकल्पनाधिष्ठानं किंचिन्नास्ति, तत्त्वज्ञानमपि तस्य सांव्यवहारिक मानानां बाधकं गगनकुसुमायितमिति दूषणं दूरापास्तम्।

यत्तु माण्डूक्यकारिकायां "नैतद्बुद्धेन भाषितम्" इत्यस्य व्याख्यानावसरे भगवत्पादैः "ज्ञान ज्ञातृ ज्ञेय भेदरहितं परमार्थं तत्त्वमद्वयमेतन्नबुद्धेन भाषितम् यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्य मुक्तम्। इदन्तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः" विवरणं तन्नागसेनादि प्राचीनाचार्यमतमनुसृत्य। वस्तुतस्तु वेदान्तैरपि न तद्भाषितुं शक्यम्। अतएव भगवत्पादैः ब्रह्मसूत्रभाष्ये "अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेन्न अविद्याकल्पित भेदनिवृत्ति परत्वाच्छास्त्रस्य नहि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति किं तर्हि? प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादि भेदमपनयति तथाच शास्त्रम् "यस्यामतं तस्यमतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्।" (केन २.३), न दृष्टेर्द्रष्टारं पश्येः नविज्ञातेः विज्ञातारं विजानीयाः" (बृह० ३.४.२) इति चैवमादि," इति समन्वयसूत्रभाष्ये स्पष्टं निरूपितम्। "दर्शयति चाथो अपि स्मर्यते" (ब्र० सू० ३.२.१७) इति सूत्रस्य भाष्ये 'बाष्कलिना च बाध्वः पृष्टस्सन्न वचनेनैव ब्रह्मप्रोवाचेति श्रूयते 'सहोवाचाधीहि भो इति, स तूष्णीं बभूव। तं ह द्वितीये वा तृतीये वा वचन उवाच। ब्रूमः खलु त्वंतु न विजानासि। उपशान्तोयमात्मा इति निस्सन्दिग्धं प्रतिपादयामासुः वचस्तर्कागम्यतां परमार्थतस्वस्य। अतएव 'मौनव्याख्या प्रकटित परब्रह्म तत्त्वं युवानम्" इत्यादिमाः वेदान्ताभियुक्तानां वाचोयुक्तयः संगच्छन्ते।

आचार्य वाचस्पतिमिश्रप्रभृतयः नागसेनाद्यभिमतमेव माध्यमिक राद्धान्तं मन्वानाः तदेव स्वग्रन्थेषु दूषयांबभूवु नत्वाचार्यान्तराभिमतस्य। मध्यमक शास्त्रे "द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना। लोकसंवृतिसत्यं च सत्यं च परमार्थतः" (२४-८) इति कारिकां व्याचक्षाण आचार्यचन्द्रकीर्तिः "लोकसंवृत्या सत्यं लोकसंवृतिसत्यम्, सर्व एवायमभिधानाभिधेय ज्ञानज्ञेयादि व्यवहारोशेषो लोकसंवृतिरुच्यते नहि परमार्थत एते

व्यवहाराः संभवन्ति, तत्र हि "निवृत्तमभिधातव्यं निवृत्ते चित्तगोचरे । अनुत्पन्नानिरुद्धा-हि निर्वाणमिव धर्मता ।।" (म० शा० १८-७) इति कृत्वा कुतस्तत्र परमार्थे वाचां प्रवृत्तिः ? कुतोवाज्ञानस्य ? सहि परमार्थः अपरप्रत्ययः शान्तः प्रत्यात्मवेद्य आर्याणाम् सर्वप्रपञ्चातीतः, सनोपदिश्यते न चापिज्ञायते उक्तं हि पूर्वम्, "अपर प्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् । निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ।।" (म० शा० १८-९) इति स्पष्टमाख्यत्, तदेवं सर्वकल्पनाधिष्ठानस्य परमार्थतत्त्वस्याभ्युपगमेन प्रपञ्चमिथ्या-त्वघोषणे कथं औपनिषदाद्वैत वादिकृतंदूषणं माध्यमिकमते प्रसरेत् ।

अत्रोच्यते प्रत्यक्षादिसिद्धानां कल्पनाधिष्ठानत्वेन किञ्चित्तत्त्वमभ्युपगम्यतां नाम तस्य सद्रूपता युक्ता असतः कल्पनाधिष्टानत्वादर्शनात् नहि शशविषाणे किञ्चित् केनचित्कल्प्यते तस्य चित्त्वमानन्दरूपत्वमपरिच्छिन्नत्वमात्मत्वं च कथं सिध्येत् ? तस्यानन्दरूपत्वाभावे विद्यया अविद्यानिवृत्तिद्वारा तत्प्राप्तेः पुमर्थता दुर्भणा प्रकाश-त्वाभावे तु सुतराम् भासमानस्यैवानन्दस्य पुरुषार्थत्वात् तस्य विद्यावतो जीवस्यात्मत्व-मप्यूरी कार्यं अन्यथा अविद्यानाशेपि जीवस्य तत्प्राप्त्यसंभवात् नहि स्वभिन्ने स्थाणौ पुरुषत्वभ्रमनिवृत्त्या स्थाणुः स्वेन प्राप्यते परिच्छेदत्रयराहित्याभावेऽनित्यत्वापत्त्या कथं तत्प्राप्ति समीहेरन् ? अतः सत अधिष्ठानस्याभ्युपगमेपि तस्यात्मत्वाद्यनुपगमेन मेरुसर्ष-पयोरिव महद्वैलक्षण्यं माध्यमिकौपनिषद सिद्धान्तयोः ।

वस्तुतस्तु सांवृत प्रपञ्चकल्पनाधिष्ठानस्य पारमार्थिकस्याभ्युपगमो माध्यमि-कानां किं प्रमाणक इति विवेक्तव्यम् ? रूपाद्यभावान्नायमर्थः प्रत्यक्षगोचरः, लिंगाद्यभा-वाच्च नानुमानादीनाम् नाप्यागमस्य अपौरुषेयागमानभ्युपगमात्, पौरुषेयस्यचासर्वज्ञ प्रणीतस्य भ्रमप्रमादादिदोषमूलकत्व संभावनया नाप्रामाण्यशंकाकलंकशून्यनिर्णयहेतुत्वम् सर्वज्ञप्रणीतस्यागमस्य तथात्वे सर्वज्ञप्रणीतत्वेनागम प्रामाण्यसिद्धिः निर्णीतप्रामाण्येन सर्वज्ञ प्रणीतत्वसिद्धिरिति परस्पराश्रयः दुष्परिहरः, न च प्रमाणान्तरमुपलभामहे, अतः शून्यवादिनां पारमार्थिकाधिष्ठानांगीकारः प्रमाणविदूरः, तथा च प्रत्यक्षाद्यवगतानां निर-पवादतया परमार्थत्वे शून्य वाद निराकरणं भाष्यभामत्याद्युक्तमपि समीचीनमेव ।

यद्यप्यौपनिषदानामपि सर्वकल्पनाधिष्ठानं ब्रह्म पूर्वोक्त युक्तिभिः न प्रमाण-गोचरः, "एतदप्रमेयम्" इति श्रुतिः ब्रह्मणः मानागम्यतां ब्रूते "नहि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषतीति" च भाष्यकारः प्राह तथापि औपनिषदानां मते तदात्मस्वरूपमेव आत्मा च स्वसत्तागोचर संशय विपर्ययागोचरः सर्वोह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति । यदिहि नात्मास्तित्व प्रसिद्धिः स्यात् सर्वोलोको नाहमस्मीति प्रतीयात् ततः स्वयंप्रकाशे, न प्रमाणापेक्षा शून्यवादिमते तस्यास्वयंप्रकाशतया स्वात्म-भिन्नतया च तदवगतिः प्रमाणसापेक्षैवेति तदभावे न पारमार्थिकाधिष्ठानसिद्धिरिति प्रत्यक्षादीनां तत्त्वावेदकता निराबाधेति संक्षेपः ।

श्रुत्येकगम्यमात्मानं अद्वैतं पारमार्थिकम् ।
साक्षादकृत यस्तस्मै गुरवे करवै नमः ।।

# आधुनिकलोके योगशास्त्रस्योपयोगः

**बालचन्द्र शास्त्री**

आत्मनः स्वरूपस्थितिः मोक्षप्राप्तिर्वा मानवजीवनस्य स्वाभाविकमुद्देश्यम् । यावत् मानवः स्व स्वरूपं न प्राप्नोति अवस्थानं किंवा न्यूनातिन्यूनमपि लाभमाप्नुवन् सत्यमार्गं नाप्नोति तावत् शुभा शुभ कर्म वशीभूय तत्प्रयुक्त सुखःखादिफल प्राप्तये देहग्रहणं ऊर्ध्वाधोलोकादिषु इतस्ततः पर्यटनञ्च नितान्तमावश्यकं जायते । इयमेव संसारचक्रस्य व्यवस्था । अतः स्वरूपावस्थितिं विना मुक्तिलाभस्य सम्भावनामात्रमपि नास्ति । अस्याः स्वरूपस्थितेः स त्यनेके उपायाः । एषु उपायेषु मध्ये योगात्मकः उपायः सर्व-प्राचीन भारतस्य सर्वश्रेष्ठो निधिः । अस्यां योगविद्यायां नास्ति कीदृशोऽपि विसंवाद । विद्येयं निष्पक्ष भावेन जगतः मानव मात्रस्य मंगलकारिणी श्रेयस्करी च वर्तते । इयमेव मोक्षमाणानाम् अजिह्मा राजपद्धतिः । प्रेयः श्रेयसोः परं साधनम् । भवतापतप्तानां जीवानां समस्त तापेभ्यः मोचयति । अत एव समस्तदार्शनिकैः धर्माचार्यैश्च योगस्य प्रकृष्टोपयोगिता अङ्गीकृता ।

योगस्य विशदं वर्णनं बुद्ध धर्मस्य पालित्रिपिटकेषु अन्य संस्कृतग्रन्थेषु शक्यते द्रष्टुम् । जैन धर्मेऽपि चतुर्विंशत तीर्थङ्करेण महावीरस्वामिना सम्यक्तया विवेचिता योग परम्परा । स्वयञ्च ते आसन् महान्तो योगिनः ।

तान्त्रिकाचार्यैरपि सम्यक्तयाविवेचितो योगः । योगशक्त्या च सम्पद्यते शक्तिपातः इति तेषाम् अभिमतम् । अनेके आचार्याः एतस्य प्राप्ति साधनं ज्ञानोदयः अन्ये च कर्मसाम्यमिति प्रतिपद्यन्ते । परन्तु तान्त्रिकाः योगद्वारा मलविपाकपुरः सरं प्रातिभं ज्ञानं जायते इति प्रतियन्ति । मातङ्गागमे लिखितमिदं मलविपाकस्य अविना-भूतदीक्षा कर्मक्षयमापादयन्ती मोक्षप्राप्तिसाधिका च भवति । मलविपाकेन अनुग्रहशक्ति पातो जायते । शक्तिपातेन च अपाक्रियते मलावरणम्, ततश्च विशुद्ध सर्वज्ञत्वादिरूपेण भवति प्रकाशनं स्वस्वरूपस्य । अर्थात् शान्तस्य विमलस्य आत्मनः साक्षात्कारो जायते । तदुक्तम्—

तदागमवशात् साध्यं गुरुवत्तान्महाधिया ।
शिव शक्तिकरावेशाद् गुरुः शिष्यप्रबोधकः ।।

यथा भस्मनि तिरोहितोऽग्निः मुखान्निःसृतेन भस्त्रिकायाः वा वायुना देदीप्यमानो भवति तथैव गुरूपदिष्ट योगक्रियया प्रातिभं ज्ञानं दीप्यते । अतीन्द्रियम् अप्रमेयं चैतन्यतत्वं यदा विचारभूमिकामादाय अवतीर्णो भवति धारयति च आत्मबोधस्वरूपं तस्याः अवस्थायाः नाम विवेक इत्युच्यते । अवस्थायां तस्यां जीवेश्वरयोः मायापाशस्य च ज्ञानं स्वयमेवोदेति । भ्रान्ति रहितत्वाद् ज्ञानमिदं सम्यग् ज्ञानम् प्रातिभेत्यपरपर्यायं महाज्ञानञ्चोच्यते । तस्मिन् समये सर्वप्रकारस्य इन्द्रियगोचराणि अन्तः करणगोचराणि वा ज्ञानानि अहमहमिकया तस्मिन्नेव महाप्रकाशे विलीयन्ते सूर्यप्रकाशे दीपप्रभा इव । विवेकबुद्धया शापानुग्रहयोः सामार्थ्यमासाद्य विवेकी स्वयं मुक्तो भवति मोचयति च अन्य नपि ।

गोरक्ष सम्प्रदायनाम्ना प्रसिद्धोऽयं सम्प्रदायः । एतस्य सम्प्रदायस्य योगिनः हठयोगस्य प्रसिद्धाः आचार्याः सन्ति । महर्षि पतञ्जलि कृतं योगदर्शनं प्रसिद्ध षड्दर्शनेषु स्वकीयं महत्वपूर्णं स्थानमासादयति । समाध्यर्थक युज् धातोः निष्पन्नस्यास्य योगस्य विभिन्नाः शाखाः सन्ति । यथा-मन्त्रयोग, हठयोगः, लययोगः, राजयोगश्चेति । योगस्येमाः सर्वाः शाखाः साधकानां पारमार्थिक श्रेयस्कारिण्यः परमोप योगिन्यश्च सिद्धाः । आसु कस्याश्चिद् एकस्याः अपि शाखायाः साधकः स्वस्थं सुखमयञ्च जीवनं यापयन् पर्यवसाने समुपैति मोक्षपदम् ।

संक्षेपतः मन्त्रयोगस्यायमभिप्रायः यत् परमात्मनः भावः, भावाद् नामरूपे तयोश्च विकारः अयं विलासमयः संसारः । अतः येन क्रमेण सृष्टिः तेनैव विपर्यय क्रमेण लयोऽपि जायते । अतः अस्माद् विमुक्तये नामरूपयोः आश्रयणं कृत्वा भावे, भावात् भावग्राहि परमात्मनि चित्तवृत्तेः लयः एव मुक्तेः एकमात्रमुपायः । अस्य मन्त्रयोगस्य प्रवर्तकाः नारद, पुलस्त्य गर्गादयः सन्ति । अस्य योगस्य भक्त्याद्यनेकानि अङ्गानि सन्ति ।

योगस्यापरो भेदः वर्तते हठयोगः । योगेऽस्मिन् स्थूल शरीरमवलम्ब्य चित्तस्य वृत्तीनां निरोधनञ्च विधाय स्वस्थः सन् मोक्षोपलब्धिरेवचरमं लक्ष्यम् । महर्षि पतञ्जलिकृत योगदर्शने यम नियमासन प्राणायामप्रत्याहार धारणाध्यानसमाधयः इत्यष्टौ योगाङ्गानि भगवतः सन्निधौ प्रापणे अथवा आत्मज्ञान द्वारा स्व स्वरूपावस्थाने परमोपयोगीनि सन्ति । इमानि अष्टौ सोपान परम्परायमाणानि विलसन्ति । यम द्वारा बहिरिन्द्रियाणि नियम्यन्ते, नियमद्वारा अन्तरिन्द्रियाणि वशीक्रियन्ते । विभिन्नासनैः शरीरं योगसाधनोपयुक्तं कल्प्यते । प्राणायामेन प्राणापानयोः वाय्वोरूपरि प्रभावमुत्पाद्य तयोरपि योगोपयोगित्वं कल्प्यते । प्रत्याहारः इन्द्रियाणि विषयेभ्यो व्यावर्तयति तथा मनसश्च स्थैर्यं प्रददाति । धारणा द्वारा कस्मिंश्चित् ध्येय वस्तुनि मनः स्थिरीक्रियते । तस्यैव ध्येयस्य निरन्तरं चिन्तनं ध्यानमित्यभिधीयते । ध्यातृ ध्यान ध्येयरूपा त्रिपुटी

यदा एकाकारतामासादयति सा एवावस्था समाधिरित्युच्यते। अयमेवाष्टाङ्गो योग:। मन्त्रयोगे समाधौ नामरूपयो: साहाय्येन समाधिलाभस्य साधन प्रणाली वर्णिता। हठयोगे च वायुनिरोध द्वारा मनस: निरोधं कृत्वा समाधि लाभस्य विधिर्वर्णित:। मन्त्रयोग समाधि: महाभाव शब्देन तथा हठयोग समाधि: 'महाबोध' शब्देनाभिधीयते। हठयोगस्य षट् कर्मासनमुद्रा: प्रत्याहार प्राण संयम ध्यान समाधिरूपाणि सप्ताङ्गानि सन्ति।

लययोगस्य प्रवर्तका: अङ्गिरा याज्ञवल्क्य कपिल पतञ्जलि कश्यपादयो महर्षय: सन्ति। एतद्द्वारा पिण्डज्ञानाज्जायते ब्रह्माण्डज्ञानम्। श्रीगुरूपदेश द्वारा शक्ति सहितस्य पिण्डस्य ज्ञानानन्तरं कुशल क्रियाद्वारा प्रकृतेर्लयो जायते पुरुषे। अत एव लभस्यैकमात्रसाधनत्वेनायं 'लययोग:' कथ्यते। पुरुषस्य स्थानं सहस्रारचक्रेऽस्ति तथा च स्वयम्भूलिङ्गे प्रसुप्ताया: कुण्डलिन्या वर्तते स्थानं मूलाधार:। तस्यां प्रसुप्तायामेव बहिर्मुखी सृष्टिक्रिया सम्पद्यमाना वर्तते। योग द्वारा तामुद्बोध्य सहस्रारस्थित पुरुष समीपं नीत्वा तस्या: लयञ्च विधाय योगी कृतकृत्यतां याति। अयमेव लय योग:।

चतुर्थो वर्तते राजयोग: समस्त योगानां अयं राजा इति हेतोरुच्यते राजयोग:। वैशिष्टयञ्चास्य वर्ततेऽधोलिखितम्:—

सृष्टि स्थिति विनाशानां हेतुता मनसि स्थिता।
तत्सहायात्साध्यते योऽसौ राजयोग इति स्मृत:।।
अन्त:करणभेदास्तु मनोबुद्धिरहङ्कृति:।
चित्तञ्चेति विनिर्दिष्टञ्चत्वारो योगपारगै:।।
तदन्त:करणं दृश्यमात्माद्रष्टा निगद्यते।
विश्वमेतत्तयो: कार्यकारणत्वं सनातनम्।।
दृश्यद्रष्टोश्च सम्बन्धात् सृष्टिर्भवति शाश्वती।
चाञ्चल्यंचित्तवृत्तीनां हेतुमत्र विदुर्बुधा:।।
वृत्तिर्जित्वा राजयोग: स्वस्वरूपं प्रकाशयेत्।
विचारबुद्धे: प्राधान्यं राजयोगस्य साधने।।
ब्रह्मध्यानं हि तद्ध्यानं समाधिर्निर्विकल्पक:।
तेनोपलब्धसिद्धिर्हि जीवन्मुक्त: प्रकल्प्यते।।
उपलब्धमहाभावा महाबोधान्विता च या।
महालयं प्रपञ्चञ्च तत्वज्ञानावलम्वत:।।
योगिनो राजयोगस्य भूमिमासादयन्ति ते।
योगसाधनमूर्द्धन्यो राजयोगोऽभिधीयते।।

अस्य योगस्य अनेकानि अङ्गानि सन्ति । सर्वेषाञ्च तेषां परिसमाप्तिः ब्रह्मध्याने एव भवति । निर्विकल्पक समाधौ "अहं ब्रह्माऽस्मि" इत्यपि ध्यानं न भवति साधकस्य । तस्मिन् समये द्वैतस्य विकल्पो नावतिष्ठते । इयमेव तुरीयाऽवस्था । जीवन्मुक्ताः गुरु व एव समाधिभूमिं वेदयितुं सक्षमाः नान्यानि शास्त्राणि प्रभवन्ति तत्र ।

ब्रह्मसूत्रोपनिषद् गीताद्यार्षग्रन्थेषु योगस्य सर्वाङ्गीणम् विवरणमुपलभ्यते। तत्रैवं वर्णितं यत् कस्मिंश्चिद् आसने आसीनः सन् उपासनां कुर्यात् । न चलता, नवा धावता, न च शयानेन पुरुषेण साधना कर्तुं शक्यते । गतौ चित्त विक्षेपः उत्तिष्ठतः मनोऽपि देहधारणव्यस्तमत एव सूक्ष्मवस्तु निरीक्षणाक्षमं जायते । शयानस्यापि निद्राभयं वर्तते । अत एवः—शुचौ देशे, शुचौकाले पवित्रासनमासीनः स्थिरमनसा युञ्जीत योगं योगी । तदुक्तं श्वेताश्वतरोपनिषदि:—

समे शुचौ शर्करा वह्नि वालुका वर्जिते शब्द जलाशयादिभिः ।
मनोऽनुकूले नतु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ।।

ध्यानावस्थायां शरीरस्य तथा समस्त तदवयवानाञ्च पूर्ण नियन्त्रणमावश्यकम् । यथा गीतायां वर्णितम् ।

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचंचैलाजिनकुशोत्तरम् ।।
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियः क्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ।।
समंकायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।।

इदमेव तथ्यं योग सूत्रे ऽपि मनसः निरोधरूपं 'अभ्यासवैराग्याभ्यां तन्निरोधः, ईश्वर प्रणिधानाद्वेति शब्दान्तरैरुक्तम् प्रकारेणानेन गीतायामपि कर्मभक्ति ज्ञानयोगाः वैशद्येन विवेचिताः । एतदनुसारं भारतेऽत्र महात्मागान्धी, तिलकश्च प्रसिद्धौ कर्मयोगिनावास्ताम् । सन्त ज्ञानेश्वरारविन्दादयः ज्ञानयोगिनः तथा रामकृष्णपरमहंसादयो भक्तियोगिनश्च समपद्यन्त ।

प्राचीनकालेऽस्य योगस्य भूयान् प्रचारः आसीत् । परन्तु अद्यतनीयं विश्वं तदीयं भौतिकं चाक चक्यं तज्जन्य परमाशान्ति सम्वलितं मन कदम्बकं समवलोक्य योगप्रचारस्य नितान्तमावश्यकत्वं प्रतीयते । अद्यविश्वस्मिन् जगति परां काष्ठांगता समृद्धिस्तावतापि शान्तिरन्वेषणेनापि नोपलभ्यते कुत्रापि । भौतिकसमृद्धेरुग्रातप संतप्ताः मानवाः नानाविधोपप्लवग्रस्ताः मरुमरीचिकायां जलमिव भौतिकतायाः प्रचण्डवह्निना दन्दह्यमानेऽसारे संसारे शान्तिमन्विष्यन्तो विषण्णतामेवोपयान्ति, न च लभन्ते शान्तिलवलेशमपि । एतत्फलस्वरूपमेवाद्यतनीयाः मानवाः शारीरिक मानसिक व्याधिग्रस्ताः सन्तः कुम्भीपाकायमानेषु चिकित्सालयेषु शय्यामधिशयानाः मृत्युकल्पं कष्टं भुञ्जानाः लुठन्ति

परिवर्तन्ते चीत्कारं कुर्वाणाश्चावलोक्यन्ते परितः। दृश्यन्तेचेतरे उन्मत्ता इव विक्षिप्ता इव इतस्ततोऽटन्तः मार्गे मार्गे, ग्रामे ग्रामे, नगरे नगरे।

यदि कथञ्चित् एतेषां सद्बुद्धिः समुदीयात् योगमार्गानुसरणपरायण समीहा च कथमपि जागृयात् तथा अनुसरेयुश्चते योगमार्गं, पिबेयुश्च योगात्मकं दिव्यं रसायनं मन्ये तेषां सर्वविधं शारीरिकं मानसिकञ्च दुःखं विलीयेत। इदं सन्तोषास्पदं यदेतस्यां भीषणपरिस्थितौ भौतिक समृद्धयोत्पीडिताः सहस्रशोः नराः नार्यश्च योगशरणमायाताः विभिन्नेषु योगाश्रमेषु विभिन्न योग प्रक्रियाभिरपगत क्लेशाः शान्तिमयं जीवनं यापयन्तः जीवनस्य चरमं लक्ष्यं प्रति अग्रेसराः अवलोक्यन्ते।

सेयं योगप्रणाली पूर्णव्यावहारिकी वैज्ञानिकी च वर्तते। यत्र वैज्ञानिकाः ससीमेन भौतिकेन साधनेन असीमानाद्यनन्तस्य च ब्रह्माण्डस्यान्वेषणतत्पराः वर्तन्ते तत्रैव योगपरम्परा पारीणः योगी पिण्डज्ञानमात्रेणैव ब्रह्माण्डस्य विशिष्टं ज्ञानमासादयति। किञ्च बहुव्ययसाध्याः अपि भौतिकोपायाः विश्वविवेचनेऽक्षमाः प्रतीयन्ते परन्तु काणिकाव्ययमन्तरापि कुशलो योगी बिन्दौ ध्यायन्नेव निखिलब्रह्माण्डीय रहस्यानां साक्षात्कारं करोति एवञ्च योगः मनसः विकृतभावान् नियन्त्रयति, कुत्सिताः वासनाः दमयति व्याधीन्निवारयति, चेतः प्रसादयति, शरीरं शबलयति, धैर्यंवर्धयति, नैराश्यनिहारं निरस्यति, तिमिराच्छन्नमन्तरात्मभासा भासयति दैन्यं दलयति, उत्साहं समेधयति, आत्मसाक्षात्कारमापादयति, मोक्षं साधयति, जीवनञ्च सफलयतीति श्रेयस्करोऽयं मार्गः अद्यत्वेविश्वस्मिन् जगति श्रेयस्कामैराश्रयणीयएवेति।

# काण्वशतपथ ब्राह्मणम्

श्री ई० जा० कुमारस्वामीदीक्षितः

यस्यस्मृतिं प्रतीक्षन्ते चतुर्वर्गं मनीषिणः ।
नमोभगवते तस्मै याज्ञवल्क्याय योगिने ।।
यया विना जगत्सर्वं मूकवत्परिदृश्यते ।
ज्ञानाधिष्ठात्री या तस्यै वाण्यै नमोनमः ।।

वेदएव द्विजातीनां निःश्रेयसकरः परः वेदः शिवः शिवः वेदः । तादृश वेदः मन्त्रब्राह्मणात्मकः ''मन्त्र ब्राह्मणयोर्वेदनामधेयमिति कल्पसूत्रकार श्रीकात्यायनोक्तिः । या प्रथम शाखेति लोकेशास्त्रेषु च प्रसिद्धतमा ईशावास्यादि अहंब्रह्मास्मीति च महा-वाक्य मन्त्रघटिता वर्त्तते तादृश श्रीशुक्लयजुर्वेद प्रथमशाखा कण्वेन महर्षिणा दृष्टा काण्वशाखेति मतत्रय आचार्यवर्य्यैरपि उद्घोषिता श्रीरामकृष्ण गणपत्यादि देवताभिः स्वकीय शाखात्वेन स्वीकृता प्रथम शाखा काण्व शाखेति । अत्रैव शतपथे अन्ते सप्त-दशे काण्डे आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येन आख्यायन्ते । इमानि काण्वमाध्यन्दिन शाबीकादि संज्ञकानि शुक्लानि शुद्धानि अयातयामानि सूर्यात्-जातानि अर्थात् सूर्यमुखात् स्वीकृत्य वाजसनि पुत्रः वाजसनेयाख्यः श्रीयाज्ञवल्क्य महर्षिः कण्वादिपञ्चदश शिष्येभ्यः समन्तात् उपदिष्टवान् इत्यर्थः । अत्र प्रप्रथमा सर्वविचार सन्मार्ग सारभूता काण्व शाखेति । अत्रसंहितायां चतुर्दशकः चत्वा-रिंशदध्यायात्मकाः । अत्र दर्शपौर्णमासादि प्रवर्ग्यान्तं अन्ते आत्मविद्या च बोधिता द्विपञ्चाशदुत्तर द्विसहस्र खण्डात्मकाः ।

अत्र ब्राह्मणे काण्वे शतपथे चतुरुत्तर शताध्यायाः सप्तदश काण्डात्मकाः संहि-तायाः व्याख्यानरूपेण अन्ये सदुपदेशाश्च वर्त्तन्ते । सप्तदश काण्डानां नामानि एकपात् हविर्यज्ञ-उद्धारिः-आध्वर-ग्रह-वाजपेय-राजसूय-उखासंभरण-हस्तिघट चिति साग्निचिति-अग्निरहस्य-अष्टाध्यायी-मध्यम-अश्वमेध प्रवर्ग्य-बृहदारण्यक आत्मविद्याख्य सप्तदश काण्डाः पञ्चत्रिंशदुत्तर चतुश्शत अनुवाकाः ४३५ । षडुत्तर अष्टशतात्मक षट्सहस्रा मन्त्रकण्डिकाः वर्त्तन्ते ।

अथ शतपथव्युत्पत्तिः ।

शतं पन्थानः (मार्गोनाम) अध्यायाः यस्य सः शतपथः "शतषष्टेः षिकन् वाच्यः शतशब्दात् षष्टिशब्दाच्च परो यः पथिन् शब्दः तदन्तात् षिकन् वाच्यः शतपथं अधीते शतपथिकः । षष्टिपथं अधीते षष्टिपथिकः । साग्निः इत्यत्र तु अग्निरहस्य ग्रन्थ-पर्यन्तं अधीते साग्निरिति शाबर भाष्ये ।

ब्राह्मण ग्रन्थस्य लक्षणमेवम्—

हेतुः निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पः व्यवधारण कल्पना ।।
उपमानं दशैतेतु विधेयो ब्राह्मणस्यतु ।
काण्वे शतपथे सर्वं सविस्तरं संप्रतिष्ठितम् ।।

एवं बृहदभिधाने वाचस्पति मिश्राः ।

इदानीं प्रकृते भाषासृष्टिः तत्रापि संस्कृत शब्द प्रयुक्तिश्च काण्वशतपथे तृतीय काण्डे द्वितीय अध्याये पञ्चमकण्डिकायां विश्वसृष्टेः प्रारंभकाले एव मनसः भाषायाश्च परस्पर तारतम्यभावेन अहमेव श्रेष्ठः त्वं कनिष्ठ इति चर्चायां सत्यां हिरण्यगर्भः समाधानं कृतवान् श्रेष्ठत्वं मन एव लभतु-हेभाषामातृके क्रोधं माकार्षीरिति उच्यमाने सर्वसृष्टेः आधारभूता वेदमाताभाषामातृका, हे ब्रह्मन् भवतां भवदुपासकानाञ्च मनआराधनमेव श्रेष्ठतममस्तु सर्वं मनस्येवास्तुनतु प्रकाशः "मनसा प्रजापतिं ध्यायन्ति-त्येवास्तुइत्युक्त्यनन्तरक्षणं दैवीवागनुवदति इत्थं—"संस्कृतिः विश्ववराः सूस्कृतिः संस्कृतिरिति कथमितिचेत् संस्कारयुक्ता संस्कार जनक भाषा-वेदभाषा देवभाषा संस्कृत भाषा "विश्ववेराः, - विश्वें-वराः श्रेष्ठतमाएवसर्वदा वरीवर्त्ति, अतएव खलु—

परमेश्वरस्यापि प्राणाधारकत्वेन उच्छ्वास निःश्वासरूपत्वेन च एषा वेदभाषा देवभाषा संस्कृतभाषा वर्त्ततइति न विप्रतिपत्तिः । अन्यच्च श्रुतं हरतिपापानि अनेनैव कारणेन लोके सर्वभाषायां मूलभूतां इमां देवभाषां उच्चारणेन शरीरस्य बलपुष्टि प्रदात्रींगीयमानस्य शरणागतस्य त्राणरूपत्वेन गायत्रीतिनाम्ना सर्वैः उपास्यन्ते । किञ्च

पुराणन्यायमीमांसा धर्मशास्त्राङ्ग मिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।

इति श्रीमद्योगीश्वर याज्ञवल्क्य स्मृत्यनुसारेग-धर्मस्य स्थानानि एते चतुर्दश विद्यारूपत्वेन वर्त्तन्ते-त्यत्रापि ते सर्वेवाङ्मयाः देवभाषायामेव (संस्कृतभाषायामेवेतियावत्) एतस्माद्धेतोः संस्कृत भाषारक्षणेन-प्रोत्साहनेन च-सर्वधर्म-रक्षणं सर्वधर्मानुष्ठानफलं-ऐहिक आमुष्मिक पुण्यफलअवाप्तिश्च निश्चप्रचं भविष्यत्येव ।

अयमेवाऽभिप्रायः अन्यत्र शुक्लयजुर्वेदे काण्वसंहिता चतुर्थे दशके चतुर्थे अध्याये प्रथमानुवाके एवम्:—

ताँ सेवितुः वरेण्यस्य चित्रां आऽऽहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदूहत्प्रफीनाँ सहस्रधारां पयसा महींगाम् तां=पूर्वोक्तां "संस्कृतिः विश्ववाराः विश्ववाराः संस्कृतिरेव-संस्कार जनयित्री वेदभाषा संस्कृत भाषया एव । संस्कृति शब्दस्य संस्कार जनिकाभाषा एवेति शातपथे पञ्चमेकाण्डे निर्धारितम् । एषा अमरभाषा कीदृग्रूपा, अस्याः फलं किमितीति जिज्ञासायां—विश्ववरा संस्कृतिः श्रेष्ठतमा संस्कार जनिका भाषा, भगवता कुलपतिना, वेदशाखाचार्येण कण्वमहर्षिणा आदित्यस्य प्रशिष्येण श्रीमद्याज्ञवल्क्यस्य प्रियशिष्येण एवं उपासितम्— प्रसङ्गादस्य महर्षेः महिमा आदित्यपुराणात्किञ्चित्प्रदर्शये ।

बौधायन पितृत्वाच्च प्रशिष्यत्वाद्विवस्पतेः ।
शिष्यत्वाद्याज्ञवल्क्यस्य कण्वोभून्महतां महान् ।। इति

एतादृश महामहिम गुणविशिष्टः एवं पूर्वोक्त विश्ववरा संस्कृतिं उपासितवान् कथमितिचेत्—

ताँ सेवितु र्वरेण्यस्य चित्रां आहं वृणे सुमतिं विश्वजन्याम् यामस्यकण्वो अदूहत्प्रफीनाँ सहस्रधारां पयसामहींगाम् ।।

विश्वजन्यां=विश्वस्य जनयित्रीमित्यर्थः चित्रामतीव आश्चर्यरूपां वरेण्यस्य =वरणीयस्य, सवितुः=आदित्य मण्डलान्तर्वर्त्तिनः विराट् पुरुषस्यसुमतिं शोभनरूपां मतिं, अन्यच्च वरणीयस्यज्योतीरूपस्य सर्वदा सर्वज्ञानप्रकाशकस्य सुमतिं शोभनरूपां शुद्धस्वरूपां सुष्ठुमतिप्रदात्रीं तां पूर्वोक्तां अमरवाणीं "संस्कृतिः विश्ववरः सर्वश्रेष्ठतमां संस्कार जनिकां भाषांअहंवृणे वृणोमीत्यर्थः किमर्थमितिचेत् :—

यां सुमतिप्रदात्रीं विश्वजन्यां गां धेनुं=गिरञ्च "धेनुर्वाक्, वाचं धेनुमुपासीत"—इति श्रुतिव्याख्यान न्यायेन अस्यकण्वः कण्वमहर्षिः गां महीं भूमिं विपुलां वा एतादृशां प्रफीनां अदुग्धां गां पयसा सहस्रधारां अदूदुहत् दुग्धवान्=सिञ्चितवानित्यर्थः इति आनन्द बोध भट्टोपाध्यायाः—

अनेन विश्व जनकरूपा विशालरूपा "विश्ववरा संस्कृतिः,, विश्वसंस्कृत सम्मेलने विश्वरूप संस्कृत सम्मेलनरूपेण परिणमयितुं तामेव कामधेनु रूपां अमरवाणीं गैर्वाणीं वाणीं अहं प्रार्थये इति भाषासृष्टिः ।।

यज्ञसृष्टिः देवाः यज्ञं अतन्वत—

पञ्चप्राणाः प्रथमं यज्ञं सृष्टवन्तइत्यर्थः ।

अवतारसृष्टिः काण्वशतपथे २. काण्डे ४. अध्याये २. अनुवाकप्रभृति तृतीयान्तं मत्स्यावतार कथा वर्तते—

सृष्टिसमये देवाः मनुप्रजापतिं समेत्य जलं समर्पितवन्तः मनोः पाणौ धृतजले तदा एकोमत्स्यः प्रादुर्भूय मां रक्ष रक्ष मनो । यदाहं समुद्रे स्वच्छन्दं विहर्तुं

समर्थो भवेयं तदा समुद्रे निक्षिप मां इत्यवोचत् एतत्प्रार्थनां अङ्गीकृत्य मनुरपि तद्वत्कृतवान् ।

किञ्चित्कालानन्तरं स मत्स्यः मनुं आहूय, आज्ञप्तवानित्थम्:—अत्यासन्नः प्रलयः अतस्तदर्वागेव "उडुपः कृत्वा मच्छृङ्गे बद्ध्वा उडुपे उपवेशनीयमिति-तदनुसारेण सर्वं मनुरपि कृतवान् सर्वेसमुद्रे पतिताः मग्नाश्च । अवशिष्टो मनुः परमात्मस्वरूप मत्स्यं प्रार्थितवान् तदा अप्सु अप्सरस्त्री काचन तथा आकाशाग्निमित्रावरुणौ च आविर्भूतौ । अनयोस्संयोगे सृष्टिक्रमः प्रादुर्भूतः एतदाधारत्वेन मत्स्यावतार कथा जनितेति नात्र-संन्देहः । शतपथे पञ्चमेकाण्डे तृतीयेऽध्याये बहुवारं अकरोदिति शब्दप्रयोगः वर्त्तते । कुर्मः एव कूर्मः आसीत् कूर्मावतारकथापि अनेनैव प्रादुर्भूता । एमुषा नाम वराहः प्रजापतिर्वा संकुचितांभूमिं स्वदंष्ट्राभिः उत्खातवान् ततः सारवती विपुला पृथ्वी सम्भूता का० १२-१ अध्याय ३. अनुवाके एवं वर्त्ततेअनेन वराहावतार कथा समुद्भूता ।।

५. काण्डे ४. अध्याये १. अनुवाके वामनावतार कथायाः आधारः एवं वर्त्तते सूर्याख्य विष्णुः भूमावन्तरिक्षे आकाशे च पदत्रये पादत्रयवान् निरूपितः । भूमावग्नि-रूपेण, अन्तरिक्षे विद्युद्रूपेण आकाशे स्वयंज्योतीरूपेणगमनत्वात् अस्यदेवस्य पादविन्यासः पदत्रयेपिसूचितत्वात् एतदाधारकत्वेन वामनकथायाः स्वरूपं एवमेव नृसिंह रामकृष्ण कल्क्यादि अवतारकथायाः मूलस्वरूपं अस्मिन् शतपथे वर्त्तते ।

एवमेव सर्वदेवतावतार कथा सर्वे अस्मद्वेदभाषायाः गैर्वाण्याः वाण्याः मूलादेव प्रादुर्भूता इत्यत्र न संशयः ।

६. कां ३. अध्याये २. अनु० ईश्वरस्य कुमारस्य च कथाः वर्त्तन्ते । प्रजापतेः सृष्टिकाले एकः निर्गतः एवमेव अष्टवारं एकैका निर्गता, तामेव गायत्रीं ततः भूमिः तदनन्तरं रुद्रः रुत्-शब्दे नतुरोदने रुद्रइति तस्य नामासीत्, शर्वः जलादिरूपेण, पशु-पक्षिरूपेण पशुपतिरूपेणवा ततः उग्ररूपेण वायुरूपेणेत्यर्थः ततः अग्निः पर्जन्यः=वृष्टि-प्रदः, मघवा=अत्र चन्द्ररूपेणेत्यर्थः सोमयागादि मघेन तुष्टत्वात्, ईशानरूपेण—सूर्य-रूपेणेत्यर्थः अनेनमूर्त्यष्टक रूपेण वर्त्तमानः ततोप्यधिकः शिवतरः कुमाररूपेण महाग्नि-रूपेण (चयनाग्निरूपेण) रुद्रोवा एषयदग्निः इति शतपथानुरोधेन आग्नेयः वह्निगर्भः कुमारइति प्रकाशयतिवेदः ।।

नरमृगादि सृष्टिः तस्य एकाकी न रमते परं ब्रह्मा सृष्टिं तत्र ऐच्छदिति ।

**।। शतपथोक्त सन्मार्गाः ।।**

१. शुद्धस्यैव मार्गस्य स्वर्गमितिनाम ।। १३.२.१५

२. अग्निरित्यक्षरनाम ।। ४.३.५

३. त्यागस्यैव भक्तिरिति ।। ७.२.३.४

४. आज्ञापरिपालनमेव आनन्ददायकः ७.२.२.६

५. सत्यस्यैव श्रद्धेति नाम ।। ७.२.२.४

६. कुल्यसदृशाः प्राणाः रक्तादि सञ्चालकत्वात् । ७.३.४.१

७. कृषीवल एव ज्ञानान्न संपत्समृद्धः ।। ४.३.५

८. मधुसहितः पूतिदधिः पूर्णबलवृद्धिः ।। १२.२.३

९. छन्दोमयमेव सर्वं जगत् — ४.२.३.६

१०. आज्ञापीठे देशे एकस्यैव स्थानं देयम् ८.३.२.२

११. पद्मपत्रवद्भूमिः भगवत्पानीयस्य समुद्रोपरि वर्त्तते } ७.४.१.८

१२. वृष्टिरूपेण भगवान् दुष्टनिग्रहशिष्ट परिपालनमद्यापिकुर्वते ।।

१३. सृष्टिकाले कतिदेवाः ऋषयश्चासन्-
इदानीमपि ते वर्त्तन्ते वसन्तिस्म ।।

**।। अथ शतपथोक्त सूक्ष्मनामानि ।।**

१. "भुविस्थानानि सर्वाणि पदार्थानि वृतत्वात्— आवृतत्वात् वारिरिति नाम ।।

२. श्वासस्याऽपरनामेति मित्रेति यतः सर्वप्राणिनां मित्रत्वात्तदनुग्रहादेव जीवितत्वाच्च ।।

३. प्राणान् धृतत्वात् भृतत्वाच्च प्राणभृदिति शरीरस्थनाडीनामर्थः ।

४. स्तूयमानत्वात् सूर्यस्य "स्तोम" इति गुप्तनाम ।।

५. सुष्ठुकृतस्य शुद्धरूपेणोपकृतस्य सर्वेषां दैविकि कर्मणांत्यागे उक्तवत् स्विष्टकृतमित्यर्थः ।।

स्विष्टकृतमित्युच्यमाने कर्मसमाप्तिरिति नसंघटते सर्वदेति ।

६. प्रागाग्निहोत्रे (भोजनसमये इत्यर्थः) उपासनादिसमयेषुच सर्वेदेवा हृदन्तःस्थितत्वात् "उदरस्यैव, सदस् तदेव सादस् इत्यर्थः ।।

७. वर्षस्य त्वरितमित्यर्थः यतः सर्वान् स्वकाल रूपेणत्वरितं कृतत्वात् ।

८. विश्वज्योतिरिति वायोर्नामिधेयं, यतः सर्वेषां प्राणानां आत्मनि ज्योतिः प्रकाशकत्वात् ।

९. दिवमिति नामक स्थाने आकाशे वा (काले) प्रवेशसमये प्रादुर्भूतानामेव देवाइत्यर्थः ।।

१०. परमेष्ठिन् वा परमेष्ठिशब्दस्य "स्वाभीष्टावाप्तये यज्ञंक्रियमाणस्य यजमानस्य परमेष्टिरिति ।

११. सृष्टेः प्रप्रथमे आविर्भूतत्वात् अग्नेः अग्निरिति प्रस्तूयते ।।

१२. यस्य रोदनाक्षि जलेन सर्वेप्राणिजाताः प्रादुर्भूताः सृष्टाः तस्मादेव रुद्रइति ।

१३. सर्वान् लोकान् आप्तत्वात् (व्याप्तत्वात्) जलस्यआपइत्यर्थः ।

१४. छन्दोवद्धत्वात् सन्तोष जनकत्वात् स्वरूपत्वाच्च छन्दइतिनाम ।

१५. भूमादेव सर्वं लभते सत्यत्वात् भूमिः, अन्यत्रभ्रान्तिरेव अध्यात्मे देवता निवासः, तथा भूमावपि सर्वदेवाः वर्त्तन्ते, तस्मादाकाशादि स्थले भ्रमणं आपद्दायकमेव ।

१६. चन्द्रस्य श्वानमित्यर्थः सर्वप्राणिनां पशुरूपाणंआकाश वीथ्यां संचरति गृहे-यजमान रक्षकवदिति,

१७. इदंमे कर्मेदं वीर्यं पुत्रोऽनु सन्तनोतु ॥

१८. पूरणात्पुत्रः—

१९. गयां वैस्त्रायत इति गायत्री ॥

**अमृतत्वप्राप्त्युपाय:**

१. विद्यया अमृतमश्नुते

२. संभूत्या अमृतमश्नुते

३. अत्र ब्रह्म समश्नुत इति

४. तद्देवा ज्योतिषां ज्योतिः आयुः उपासते अमृतम्

५. सवा एष महानज आत्मा अजरः अमृतो भवति ॥

# महाकविकालिदासस्य काव्येषु काव्य बिम्बम्

डा० रामप्रतापः

**काव्यबिम्बस्य परिचयो लक्षणञ्च**

अनेक विधानां वादानामस्मिन् युगे भारतीयपाश्चात्यकाव्यशास्त्रयो र्मध्ये बिम्बवादमुपजीव्य महती चर्चा प्रवर्तते। न केवलं साहित्य क्षेत्रे अपितु अन्यास्वपि बह्वीषु कलासु अस्य वादस्य प्रभावातिशयो विलोक्यते। कविता, कथा, उपन्यासो नाटकमाधुनिक्यश्च चित्रमूर्तिस्थापत्यकला: सर्वमिदमस्य भासा भासते। आङ्गलभाषाया-मेष सिद्धान्तः Imagism इति नाम्ना निर्दिश्यते। हिन्दीभाषायां चायं काव्यबिम्बं बिम्बवादो रूपयोजनं चेति नामभिः प्रथितः। उर्दूभाषाभिश्चैष इशारियतेति नाम्ना ज्ञायते।

पाश्चात्यो विद्वान् ह्यूम महोदयः काव्येऽस्य स्थितिरावश्यकीति निरूपयन्नेव-माह—"काव्यस्य प्रत्येक शब्दो वस्तुविशेषं याथातथ्येन निरूपयितुं यत्नवान् भवेत् स च (नियतमेव) कस्यचिद् वस्तुनः प्रतिबिम्बं स्यात्।[1] सी० डी० लैविस महाभाग इममेवं लक्षयति—काव्यात्मकं बिम्बं न्यूनाधिक रूपेण एवं विध भावगर्भितं शब्दचित्रं यत्खलु कवितायां भावविशेषं भावेन विशेषं वा पाठकस्यान्तः करणे सङ्क्रामयति।[2] एवमस्य विदुषो मतेन-सामाजिक चेतसि भावविशेष सङ्क्रामकं शब्द चित्रमेव काव्य-बिम्बमिति अवगम्य भारतीयः समालोचक डा० नगेन्द्रोऽस्य स्वरूपमेवं प्रतिपादयति— शब्दार्थयो र्माध्यमेन प्रकटीकृता कल्पना निर्मिता भावप्रेरणामूला मानसी छविरेव काव्यबिम्बम्।[3] भावविशेषेण प्रेरिता कवि कल्पना कवि हृदये मानसं सौन्दर्य विशेष-मुत्पादयति तस्यैव सौन्दर्यस्याभिव्यञ्जकं शब्दचित्रं बिम्बमित्यस्य मतस्य निर्गलितार्थः।

---

१. काव्यसमीक्षा डा० विक्रमादित्यराय वाराणसी १९६७ तृतीयोऽध्यायः पृ० ८०।

२. The poetic Image C. D. Lewis p. 22.

३. काव्य बिम्ब : डा० नगेन्द्र पृ० ५।

डा० रामगोपालशर्मा विम्बमित्थं व्याख्याति—यदा कश्चित् रचनाकारो कलाकारो वा किमपि वस्तु विलोकयति तर्ह्यसौ तेन प्रभावितो जायते अनुभूति विशेषां वा लभते तदानीं तन्मनसि विद्यमाना साऽनुभूति र्भावात्मिका सत्यवतिष्ठते। अत्र मदुक्तेन भावपदेन काव्यशास्त्र प्रोक्तो भावो न ज्ञेयोऽपितु सामाजिक चेतसि सूक्ष्म रूपेण तस्य वस्तुनो कल्पना विशेषस्य वा या अवस्थितिः सैवात्र नोऽभिमता। कस्यचिदपि वस्तुनो दृश्यस्य वा स्वमानसे परिकल्पितां भावात्मिकां सत्तां यदा वयं प्रेषयितुमभिलषामस्तदा तां यथावत्प्रहितुमप्रभवन्तः स्वीयेष्वन्तःकरणेषु अङ्कितं रूपं छविमेव वा वयं प्रेषयामः। यत्खलु तदा प्रेष्यते तदेवास्मद्दृस्ट्या काव्यबिम्बमिति। व्यक्तिगतानुभूतित्वान्नेदं वस्तुनो यथार्थरूपम्[1]। डा० शर्मणोऽस्य कथनस्येदं तात्पर्यम्—

यदा कविः कश्चित्कलाकारो वा कमपि वस्तुविशेषमवलोकयति तदा तस्य चेतसि काचिदनुभूतिः जायते। सा च तन्मनसि वासनात्मकतया सूक्ष्मरूपेणावतिष्ठते। स्वमानस पटले संस्थितां यां छविं शब्दार्थे रेखाभिर्वा स कविः कलाकारो वा आविष्करोति सैव काव्यबिम्बम्। वस्तुतस्तु कस्यचिद् वस्तुनोऽनुभूते र्भावस्य वा मानस पटले प्रादुर्भूतं यद् भावात्मकं मूर्तं चित्रं तदेव काव्यबिम्बमिति। वस्तु विलोकनानन्तरं हृदयपटलस्योपरि दत्तस्य भावात्मकं चित्रं बिम्बं तदेव यदा शब्दार्थयोर्माध्यमेन प्रतिबिम्बितं जायते तत्काव्यबिम्बम्।

वस्तुत कस्यचिद् वस्तुनो भावस्य वा मनसि भावात्मकं मूर्तं चित्रमेव बिम्बमिति। एतच्च शब्दार्थयो र्माध्यमेन प्रस्तुतं कस्यचित् वर्ण्य पदार्थस्य मूर्तीकरण रूपम्। इत्थं शब्दैः प्रतिपादितं पदार्थानां मूर्तीकरणमेव काव्यबिम्बत्वेनावबोधनीयम्। लौकिकासु काव्येतर रचनासु वा यद् पदार्थानां वर्णनं तत्र तेषां प्रकृतेः स्वरूपस्यैव वा वर्णनं विधीयते। तत्र तु श्रोतॄणां पाठकानां वा मस्तिष्केषु तत्पदार्थस्य चित्रं निर्मितं स्यादिति तु नापेक्ष्यते। एतत्कार्यं साहित्यकारस्य प्रतिभान्वितया वर्णनशक्त्यैव निष्पद्यते।

उपमारूपकोत्प्रेक्षादिष्वलङ्कारेषु द्वयोः काव्यबिम्बयो द्विविधा रूपयोजना संजायते ? उपमेयजा उपमानजा च। सानुभूतावपि विभावानाम्, भावानाञ्च मूर्तीकरणमनिवार्यम्। मनचन्द्राद्यालम्बनोद्दीपनविभावा यावत्प्रेक्षकैः न प्रत्यक्षीक्रियन्ते तावदसौ रसमनुभवितुमक्षमः। अतएव दृश्यकाव्यान्येव वास्तविक काव्यानि इति मतं रुच्यास्पदम्।

इदानीमेकः प्रश्नोदृष्टि पथं समापतति—बिम्बध्वनि मध्ये कः सम्बन्धः ? वीची तरङ्गन्यायेनैष सिद्धान्तो व्याख्यातुं शक्यते। यथा कस्मिंश्चित् शान्ते सरोवरे

---

१. प्राच्य एवं पाश्चात्य काव्यशास्त्र में बिम्बसिद्धान्त। डा० रामगोपाल शर्मा, Principles of literary criticism in sanskrit, edited R. C. Dwivedi Delhi 1969.

जले प्रथमोत्पन्न स्तरङ्गोऽन्याननेकान् तरङ्गान् समुत्पादयति तथैव एकवस्तुनो यत् प्रथमं रूपं शब्दैः मनुष्यास्य मस्तिष्के समुत्पाद्यते तद्बिम्बम् तस्मात् बिम्बात् समुत्पद्यमानानि प्रथम तरङ्गादुत्पाद्यमाना इतराणि इव यानि अनेकानि चित्राणि अभिव्यज्यमानानि तान्येव ध्वनिरिति व्यपदेशार्हाणि । परन्तु नायं नियमो निरपवादो यतोहि कदाचिद् बिम्बं ध्वनितं स्यात् कदाचिद् बिम्बनिर्माणे ध्वनि बिम्बयोर्मध्ये यः साध्यसाधन-भावात्मकः सम्बन्धः स परिवृत्तिमाप्नोति । यदा बिम्बं ध्वनिं पोषयति तदा बिम्बं साधनं ध्वनिश्च साध्यमन्यथा तद् विपरीतम् । एतच्च काव्यबिम्बं द्विविधं शब्दप्रति-पादितं शब्दध्वनिप्रतिपादितञ्चेति ।

कालिदास कवितायां काव्यबिम्बम्—महाकविकालिदासस्य ध्वनिवादि कविषु स्थानवैशिष्ट्यम् । अस्य रसवतीसु रचनासु अल्पैः शब्दै विलक्षणमर्थगौरवं परिलक्ष्यते । डा० एस० के० डे महाभागेन कथितम्—But Kalidasa like Shakespeare suggests more than he expresses.[१]

उपमा कालिदासस्येति सूक्तिः महाकवि कालिदासस्योत्कर्षसूचिका । तस्य कृतिषु दृश्यमानासूपमासु तत्तत्स्थानेषु द्वे शब्दबिम्बे विनिर्मिते ।

सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥[२]

रघुवंशस्यास्मिन् श्लोके अजेन्दुमत्योः स्वयंवरस्य वर्णनम् । यदा इन्दुमती स्वहस्ते वरमालां गृहीत्वा एकस्य राज्ञः पुरस्तात् गच्छति तदा तस्य राज्ञो मुखे तादृशी एव दीप्तिर्यादृशी खलु सञ्चारिण्यो दीपशिखायाः प्रकाशे विद्यमानस्य राजमार्गस्य भवने दृश्यते । परन्तु यदा इन्दुमती तं विहाय अपरं राजानमभियाति तदा पूर्वो राजा विषण्णवदनो जायते । अस्मिन् श्लोके पूर्वं दीपशिखाया सौधतलवर्तिन्धकारस्य च काल्पनिकं चित्रं पाठकस्य मस्तिष्के आविर्भवति तदनन्तरमेव इन्दुमत्या निराशाग्रस्त नृपतीनां च द्वितीयं चित्रं समुपतिष्ठते ।

तं वीक्ष्यवेपथुमती सरसाङ्गयष्टि—
निक्षेपणाय पदमुद्धृ तमुद्वहन्ती ।
मन्थाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ।[३]

---

१. Dr. S. N. Dasgupta and Dr, S. K. De, vol. I Book II, chapt. III p. 154 (1947).

२. रघुवंश ६, ६७ ।

३. कुमार सम्भव पु, ८५ ।

इत्यस्मिन् श्लोकेऽपि काल्पनिकं चित्रद्वयमुपस्थितम् । पाठकस्य नयनयोः पुरस्तान् एकनः पर्वतेनावरुद्धा क्षोभवतीनदी बिम्बं समापतति अपरतश्च शिवेनावरुद्धायाः पार्वत्या बिम्वम् ।

तां चावश्यं दिवस गणना तत्परामेक पत्नी—
मव्यापन्नामविहतगति र्द्रक्ष्यसि भ्रातृ जायाम् ।[१]

इत्यत्र

आलोके ते निपतति पुरा सा बलि व्याकुला वा
मत्सादृश्यं विरहतनुना भावगम्यं लिखन्ती
पृच्छन्तीवा मधुरवचनं सारिकां पञ्जरस्थां
कच्चिद् भर्तुः स्मरसि रसिके त्वं हि तस्याः प्रियेति ।।[२]

इत्यत्र च पूर्वं कविनिबद्धं यक्षवर्णनानुकूल विरहिण्याः यक्षपत्न्या काल्पनिकं चित्रं सहृदयपाठकस्य हृदयपटले अङ्कितं भवति तदनन्तरमेव यक्षिण्या मुखसदृशानां सम्पूर्ण जन्तवोऽन्येषां तत्तद्भावाभिव्यञ्जकमुखानां स्मृतिः कल्पना वा जायते । आलोके ते निपतति इत्यत्र अलङ्कारविरहेऽपि रमणीया बिम्बसृष्टिर्विहिता ।

यास्य त्वद्य शकुन्तलेति हृदयं सस्पृष्टमुत्कण्ठया[३] इत्यत्र कविना बिम्बसृष्टिरनुभावमुखेन विहिता ।

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी
लीलाकमल पत्राणि गणयामास पार्वती ।।[४]

इत्यत्र चेदं बिम्ब निर्माणं लज्जाहर्षावहित्थाख्यव्यभिचारिभिर्विहिता । एवमन्येष्वपि स्थलेषु मेघदूतादिषु कालिदासेन सुललिता बिम्बसृष्टि विहिता ।

---

१. मेघदूत १, ६ ।

२. तत्रैव २, २५ ।

३. अभिज्ञान शाकु० ४, ६ ।

४. कुमारसम्भव ६, ८५ ।

# वेदान्तो विश्वविचारश्च

**विश्वनाथ मिश्रः**

वेदान्तो नामोपनिषत्प्रमाणं, तदुपकारीणि च शारीरिकसूत्रादीनि चेत्युक्त्या मन्त्रब्राह्मणारण्यकोपनिषत्सु वेदांगेष्वन्यतमप्रमाणको दार्शनिकः सिद्धान्तः। वेदाश्चानाद्यविच्छिन्न सम्प्रदायपरम्परयाप्राप्ताः अत एव पुंदोषशंकाकलंक पङ्कैर संस्पृष्टा अपौरुषेयाः सर्वानपेक्ष्य प्रामाण्यभूता मूर्धन्यायन्ते भारतीयवाङ्मयेषु। तत्र ऋग्वेदस्य नासदीयसूक्ते "नासदासीत् नो सदासीत् तदानीम्" "आनीदवातं स्वधया तदेकम्" इत्यादिरूपेण वेदान्तस्य रूपमुपलभ्यते। अर्थात् सृष्टेरादौ एकं वस्तुवायुमन्तराऽपि निजशक्त्या श्वासमाददाना अवर्तत। तत्राद्वैतविशिष्टाद्वैतविभेदेन बहुशाखो वेदान्तः, विश्वविचाराश्चापि नानाविचारकैरुपचितकलेवराः साकल्येनात्र वर्णयितुमशक्यास्तथापि अद्वैतवेदान्तेन साम्यमावहन्तः कतिपये प्रमुखा विश्वविचारा प्रस्तूयन्तेऽत्र।

तत्र वेदानां तात्पर्य विषयीभूते परमानन्दस्वरूपे भगवत्येव निखिलप्रपञ्चस्योत्पत्तिः स्थितिः, लयः, प्रतीतिश्च जायते। यथा तरंगस्यान्तः बहिर्मध्ये च जलमेव पूरितं भवति तथैव भोक्तृ भोग्यसकलप्रपञ्चस्यान्तः बहिर्मध्ये च परमानन्दरसात्मकं ब्रह्म एव विलसति। अत उक्तम्—"आनन्दादेव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति अभिसंविशन्ति"। "सर्वं खलु इदं ब्रह्म" तज्जलानिति शान्त उपासीत ॥ इति।

अन्य दर्शनानामिव कार्यकारणभावम्, सत्कार्यवादम्, आरम्भवादं वा अङ्गीकृत्य न प्रचलति वेदान्तशास्त्रम्, अपि तु विवर्तवादः, सत्कारणवादो वा अस्याधारशिला अस्ति। अर्थात् ब्रह्मण एवातात्त्विकोऽन्यथाभावो दृश्यते जगद्रूपेण। एतन्मतानुसारं ज्ञानस्वरूपमात्मा निर्विकारः। अन्तः करणचतुष्टयमात्मनः पृथक् प्राकृतिकं वर्तते। मनोबुद्धिचित्ताहंकारकर्मज्ञानेन्द्रियाणिसम्मेल्य पञ्चप्राणसहितं सूक्ष्मशरीरमुच्यते। सृष्टेरारभ्य प्रलयपर्यन्त भवति स्थितिः सूक्ष्मशरीरस्य। एतस्मात् भिन्न रजस्तमोलेशानुविद्धमतएवाविशुद्ध सत्वप्रधानम् अविद्यात्मकं कारणशरीरमपि स्वीकृत मास्ते यच्च नश्यति तत्त्वसाक्षात्कारानन्तरम्। ब्रह्मणि च सर्वप्रपञ्चोत्पादिनी शक्तिर्या चोच्यते मूलप्रकृतिरविद्यावा अनिर्वचनीया। कर्मानुसारिजन्ममरणमिव संसारस्यापि जायेते उत्पत्तिविनाशौ। कर्मणा सह संसारस्यासाधारणः सम्बन्धः। पुरुषार्थचतुष्टयोपलब्धिपुरः सरं

मोक्षोभगवत्प्राप्तिर्वा संसारस्य चरमलक्ष्यम् । ज्ञानकर्मोपासनादिभिः "तत्वमस्यादि-वेदान्तमहावाक्यजन्य ब्रह्माकाराकारितायां चित्तवृत्तौ चैतन्याभास एव मोक्षः । स ओतप्रोतश्च विभुः प्रजासु, "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्याद्युक्त्या तस्य सर्वव्यापकत्वेन सर्वभूतसमभावः सर्वोदयकामना च वेदान्तशास्त्रफलश्रुतिः ।

एषा वैदान्तिकी प्रक्रिया न केवलं दार्शनिक क्षेत्रे एवापितु भारतीय जीवनस्य सर्वविधासु शाखासु तथा गतानुगतिकतया विश्वस्य भूयसां देशानां जीवनधारास्वपि क्वचित् साकल्येन क्वचिच्चांशिकरूपेण व्याप्ता दरीदृश्यते । इदंप्रथमतया यूनानदेशस्य प्राचीनदार्शनिकानां विचारा आलोच्यन्ते चेत् प्रत्यक्षं प्रतीयते यन्मूलतत्त्वान्वेषणप्रसंगे थेलीज एनेक्सीमेण्डरप्रभृतिभिः जलं वायुं वा मौलिकं तत्त्वं प्रतिपादयद्भिः औपनिषद विचारप्रणाल्येवानुसृता । मतस्यास्य तुलना बृहदारण्यकोपनिषदि निर्दिष्टेनानेन मतेन शक्यते कर्त्तुम् आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त" तथा "वायु र्हि एवैतान् सर्वान् संवृङ्क्ते इति छान्दोग्योक्त्या सहास्यसमानता स्फुटैव । पाश्चात्य जगति हिरेक्लिटस्य विचारो यदग्निरेव जगन्मूलमिति कठोपनिषदः "अग्निर्यथैको भुवनं प्रविष्टः" इत्युक्त्या पूर्णप्रभावित इत्यत्रनास्ति विचिकित्सा ।[1] वेदान्तदर्शने यथा मौलिकं तत्त्वमेकं तथैव एतेषामपि मते मौलिकं तत्त्वमेकम् । यद्यपि वेदान्तीयं तत्त्वं चेतनमेतेषाञ्चाचेतनमिति पार्थक्यं वर्तते तथापि मौलिकस्यैकतायां नास्ति कश्चन विसंवादः । पीथागोरसमतानुयायिनो वदन्ति "आत्मा एकस्मात् शरीरात् शरीरान्तरं गच्छतीति[2] । कथनमिदं "तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देहीति गीतोक्तेः प्रतिच्छायामात्रमेव प्रतीयते । एतेनेदमपि शक्यते वक्तुं यथा वेदान्ते आत्म प्रवाहस्य नित्यत्वं शरीरस्य च विनाशित्वं तथैवेमेविचारका अपि आत्मप्रवाहस्य नित्यतामेवाङ्गीकुर्वते ।

इटलीनिवासिनो जेनोफेनीजस्य कथनमिदं यद् "विश्वमेकं एकञ्चतद्ब्रह्म" इति अद्वैतवादेनैकान्तं प्रभावितः पक्षः । विश्वस्यैकता च नान्तरा ब्रह्मसत्तां प्रकारान्तरेण शक्यते व्यवस्थापयितुम् । वेदान्तदर्शने व्यावहारिकप्रातिभासिकपारमार्थिकरूपेण सत्तात्रयमङ्गीकृत्य प्रख्याप्यते जगतो व्यावहारिकसत्यत्वं, प्रचाल्यते च ततो जगद्व्यवहारः । पाश्चात्य तत्त्वज्ञानिषुप्रसिद्धः प्लेटो अपि सत्ताद्वयमङ्गीकुरुते—व्यावहारिकीं, वास्तविकीं च । यत् जगत् पुरो दृश्यते यच्च भवति अस्माकं ज्ञानस्य विषयस्तत्तु परिवर्तनशीलम् । जगतो वास्तविकी सत्ता तु परिवर्तनरहिता एकाकारा तिष्ठति । मन्ये सत्ताया एकाकारत्वेन परिवर्तन रहितत्वेन च सर्वत्रानुस्यूता ब्रह्मणः पारमार्थिक सत्ता एवास्याभिमतास्यात् ।

"उपनिषदामध्ययनं ममजीवने शान्तिप्रदायकमिति स्वीकुर्वन् शोपेनहोरोऽपि

---

१. भारतीयदर्शन वलदेव उपाध्याय पृ० ६१५

२. पाश्चात्य दर्शनों का इतिहास, गुलावराय पृ० २७

जागतिकपदार्थानां मायिकसत्तां स्वीकरोति[१] । अन्यस्य कस्यापि वस्तुनो ज्ञानं स्यान्नवा, परन्तु आत्मनः सत्ता तु सर्वैः प्रतीयत एव । अहं कोऽस्मि इति प्रश्ने हेगेलः कथयति "चैतन्यस्य सारं बुद्धिरस्ति" । परन्तु शोपेनहोरः कथयति बुद्धिस्तु मानवचैतन्यस्याङ्ग-मात्रमस्ति । जीवनधारणस्य संकल्पात्मिका आकारहीना एका अपूर्वा शक्तिरेवास्ति यतो देशकालादिगतानि वस्तूनि उत्पद्यन्ते । व्यावहारिकं पारमार्थिकञ्चेत्यादर्शद्वयं मत्वा प्रकारान्तरेण वेदान्तप्रक्रियामेवायं ख्यापयति ।

अहमस्मि न वेति संशये डेकार्टः कथयति-यतोऽहं शोचामि' अतोऽहमस्मि । ईश्वरो नितान्तं सत्यं वस्तु । जगत् ईश्वरेण निर्मितमास्ते अतः स्वस्थित्यै जगत् ईश्वरोपरि आधृतं वर्तते[२] । डेकार्टस्य मतमिदं भगवतः शंकरस्य कथनेनानेन ।

> अहमित्यस्मिन्नर्थे न कस्यापि संशयः पुंसः ।
> अत्रापि संशयश्चेत् संशयिता यः स एव भवसि त्वम् ।।

तथा— ब्रह्मसूत्रोपोद्घाते-'सर्वो हि आत्मास्तित्वं प्रत्येति । न नाहमस्मीति । यदि नात्मास्तित्वप्रतीतिः सर्वो हि लोको नाहमस्मीति प्रतीयात् । इति कथनेनाविकलं साम्यमुपैति इति नात्र संशयः । सर्वंखलु इदं ब्रह्म इति प्रतिपाद्यते वेदान्ते । ब्रह्म च सर्वत्रव्यापकम् । मतमिदमनुसरता पाश्चात्येन विदुषा स्पिनोजा महाशयेन प्रोच्यते-जगतः सर्वाणि वस्तूनि अन्योन्याश्रितानि । परन्तु किमपि स्वतन्त्रतत्वमवश्यमेवास्ति यद् सर्वेषां पदार्थानां स्यादाधारः - स एव परमात्मा स्वयंभूः स्वाश्रितः । एतन्मतानुसारं "विश्वम् ईश्वरः, ईश्वरश्च विश्वम् । एतेन विश्वस्मिन् जगति ब्रह्मणः सत्तां प्रतिपाद्यानेन वैदान्तिकी प्रक्रिया स्पष्टमेवोररीकृता ।[३]

आत्मा अस्ति इति जानन्तोऽपिलोकाः सान्तोऽयमनन्तो वा, ज्ञानमिदं परमानन्दो वा एकाकी, आत्मसदृशेष्वन्यतरेष्वन्यतमः, साक्षिमात्रं भोक्ता वा, इत्येवं रूपेण विभागं कर्तुमशक्नुवन्त , अहं सुखी, दुःखी, काणः, श्वेतः कृष्णः" इत्यादिप्रतीत्या शरीरेन्द्रियादिभिरभेदं कल्पयन्ति आत्मनः । परन्तु एतद्व्यतिरिक्तः साक्षिमात्रमात्मा स्वप्रतिष्ठ इति वेदान्तराद्धान्तः । पाश्चात्यो विचारको डेस्कार्टोऽपि कथयति 'यदुच्यते मानवशरीरं, तदवयवानां पुञ्जोऽहं नास्मि । सूक्ष्मोऽन्तः प्रवेशशाली वायुरपि नास्मि । वाय्वग्निप्राणादिषु किमपि नास्म्यहं, यतो हि एतेषां कल्पनातः पूर्वमप्यहमासम् इदानीञ्चास्मीति ।[४]

एवमेवपाश्चात्य जगति काण्टमार्क्सडारविन प्रभृतयो भूयांसो विचारका जगन्मीमांसकाः समभूवन् । तत्र काण्टस्तु प्रत्ययवादसमर्थकः । एतस्मात् पूर्वं विचारबाह्य-

---

१. भारतीय दर्शन वलदेव उपाध्याय पृ० ६४८

२. वही पृ० ६२८

३. वही पृ० ६३०

४. भारतीयदर्शन राधाकृष्णन् पृ० ४७२

जगतो मध्ये एको महान् गर्तः आसीत् । दार्शनिकानां मुख्यं विचारक्षेत्रं विषयविषयिणो वैभिन्न्यमथवा बाह्याभ्यन्तरजगतोः पार्थक्यञ्च विश्वातीतस्य सिद्धान्तमुद्भाव्य शैथिल्यमानीतमनेन । भौतिक विज्ञानद्वारा बाह्यजगतः सत्तामिव ईश्वरस्य अमरतायाश्च प्रमाणं नैतिकतायाः स्वतन्त्रसत्तया कल्पयितुं शक्यते ।[1] मार्क्सस्तु चैतन्यं भूतानामेव परिणाम इति स्वीकृत्य जडाच्चैतन्योत्पत्तिं प्रतिपादयाम्बभूव । परन्तु अग्ने र्दाहकत्वं प्रकाशकत्वं वा यथा इन्धनादौ व्यक्तं सदपि नास्ति तस्यासाधारणो धर्मस्तथैव मनोमस्तिष्कबुद्धयादीनां समवधाने एव जातायामपि आत्मचैतन्याभिव्यक्तौ नास्ति चैतन्यं भूतानामसाधारणो धर्मः किन्तु एकं स्वतन्त्रं वस्तु । अत एव चेतनविहीनं शरीरादि जडत्वेन ख्याप्यते । डारविन महोदयो यत्र प्राणिनां क्रमिकं विकासं स्वीकुरुते तत्र वेदान्तदर्शनानुसारं विकाररहितस्य स्वप्रकाशस्यात्मनः परिवर्तनं सर्वथैव नेष्टम् । किञ्च अद्य वानरेभ्योमानवानामनुत्पत्तिं मानवेभ्यश्च कस्यापि अन्यस्य विकसिततमस्य चानुत्पत्तिं समवलोक्य विकाससिद्धान्तस्य चिन्तनीयतामेव प्रतीमः ।

इस्लाम सम्प्रदाये सूफीवादः अद्वैतवेदान्तेन सह पूर्णसाम्यमावहति । अद्वैत ब्रह्मणि अस्य विश्वासः । ईश्वर एको ज्योतिः स्वरूपः । तस्यैव प्रतिच्छायारूपमिदं जगत् । पुनर्जन्मनि अवतारवादे चैषां विश्वासः ।[2] बौद्धानां चतुर्षु आर्यसत्येषु दुःखस्य नान्तरीयकता अष्टांगिक मार्गेण तद्विमुक्त्युपायाश्च प्रदर्शिताः । वेदान्तदर्शनेऽपि तत्त्वज्ञानादेव मुक्तिरित्याम्नातः । वेदान्तमते-आत्मा अविद्यातत्कार्यात्मक निखिलप्रपञ्च व्यतिरिक्तो जाग्रत् स्वप्नसुषुप्तीनां परिद्रष्टा साक्षिमात्रं वर्तते । बौद्धाश्च रूपसंज्ञावेदनासंस्कारविज्ञानमिति पञ्चस्कन्दात्मकत्वं प्रतिपादयन्ति आत्मनः । अतो द्वयोरत्यन्तं भेदः । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च" इत्युक्त्या वेदान्तदर्शनस्य प्रच्छन्नबौद्धत्वं न भ्रमितव्यम् । बौद्धदर्शने यत्र विज्ञानस्य क्षणिकत्वं तत्र वेदान्ते तस्य नित्यत्वम् । बौद्धमते क्षणिकत्वेनैव विज्ञानस्य नानात्वम्, वेदान्ते तु एकमेवाद्वितीयमित्युक्त्या तस्यैकत्वम् । एवं जागरूकेषु सुमहत्सुभेदेषु तयोरैक्यमन्यतरप्रभावितत्वं वा वक्तुमयुक्तमेव । किञ्च मायावादमित्यादिश्लोके असच्छास्त्रमायावादोद्देश्येन प्रच्छन्नबौद्धत्वं विधीयते न तु मायावादोद्देश्येनासच्छास्त्रत्वं प्रच्छन्न बौद्धत्वञ्चेति स्वीकारेण तयोरत्यन्तं भेदः ।

इदानीं विश्वस्मिन् जगति राजनैतिक वैज्ञानिकविचारयोरेव प्रभावः सर्वत्र दृष्टिगोचरो भवति । तत्र वैज्ञानिका यथा सत्यान्वेषणपरायणा स्तथा वेदान्त शास्त्रमपि सत्यमेवान्विष्य प्रस्तौति पुरस्तात् विश्वस्य । वैज्ञानिक दृष्ट्या संसारेऽस्मिन् शक्तिः पदार्थश्चेति वस्तुद्वयम् । तत्र शक्तित एव वस्तूनां निर्माणं, तत्रैवान्ते लयश्चेति श्रूयते । वेदान्तशास्त्रेऽपि परास्य शक्तिः विविधैव श्रूयते" इत्युक्त्या शक्तेरेव विजृम्भणं जगत्, अन्ते च तत्रैव तल्लयश्चेति पूर्णवैज्ञानिकोऽयं सिद्धान्तः ।

---

१. भारतीयदर्शन वलदेव उपाध्याय पृष्ठ ३३८ ।

२. प्राच्य धर्म और पाश्चात्य विचार राधाकृष्णन् पृ० ३७३ ।

राजनैतिकविचारणायामद्य मार्क्सवादस्य बहुचर्चितः प्रभावः। किन्तु अध्यात्मवादमनङ्गीकृत्य शुष्कजडवादोपरि आधृतो मार्क्सवादो विश्वजनीनां समस्यां समाधातुं नालम्। भौतिकोपकरणानि न भवितुमर्हन्ति समानताया आधारभूतमौलिकतत्वानि। अद्वैत वेदान्त प्रक्रियायां समाश्रीयमाणायान्तु शरीरनिबन्धनं नानात्वं प्रविलीयते लोकानाम्। भिद्यन्तां नाम शरीराणि, न च भिद्यते शरीरी आत्मापि कदाचित्। अत ईर्ष्याद्वेषादीनां परिसमाप्तिः स्पष्टैव। भवत्युद्वेगः परस्मात्, न चात्र कश्चन परः। सर्वः शरीरी ममाव्यतिरिक्त इति समुदितायां मनीषायां कथंकारमहं स्वात्मानं द्वेष्मि। एवञ्च वेदान्त शास्त्रमात्मनः सार्वत्रिक सत्तां प्रतिपाद्य सर्वोदयभावनामुत्पादयति, भ्रातृभावं प्रचारयति कर्मण्यमापादयति वसुधैव कुटुम्बकमिति शिक्षयति, प्रकाशयति च जडवादतिमिराच्छन्नमन्तरालमात्म प्रकाशेन। अत एवेदानीमशान्ति मरुदान्दोलिते जगति यदपि विश्व साम्राज्यस्थापनाय, एकस्य कस्यचनविश्वधर्मस्य समुद्भावनाय, विश्वभाषायाश्च प्रचाराय ये ये विश्वजनीनाः प्रोद्भाव्यन्ते विचारास्ते सर्वेऽपि वेदान्तशास्त्र प्रभाविता इति ब्रूमः। अथ च तेषां वास्तविकी स्थितिः साफल्यञ्च तदैव भवेत् यदा सर्वेष्वेव मानवेषु एकस्यैव तत्त्वस्य दर्शनं स्यात्॥

# गोरक्षराष्टे नेपाले नाथसम्प्रदाय-परम्परा

योगी नरहरिनाथ:, नेपाल

यथा सेतुबन्धे रामनाथः मङ्गलापुरे मञ्जुनाथः सौराष्ट्रे सोमनाथः द्वारकायां द्वारकानाथः अमरकण्टकेऽमरनाथ. बदरिकाश्रमे बदरीनाथः केदारखण्डे केदारनाथः कूर्मादौ गणनाथनागनाथौ । परल्यां — वैद्यनाथः पुर्यां जगन्नाथः । ॐकारेश्वरे ॐकार-नाथः । उज्जयिन्यां महाकालनाथः । गोदावर्यां त्र्यम्बकनाथः । पण्डरपुरे पण्डरीनाथः । काश्यां विश्वनाथश्च विद्यन्ते ।

तथा गोरक्षराष्ट्रे नेपाले पशुपतिनाथः । स्पर्शनाथः । आदिनाथः । मत्स्येन्द्र-नाथ. ।गोरक्षनाथः । स्वयम्भूनाथः । नागार्जुननाथः । मुक्तिनाथः । मल्लिकानाथः । चतुर्भुजनाथः । वनखण्डिनाथः । वैद्यनाथः । रत्ननाथः । चन्दननाथः । तारानाथः । खेचरनाथः । खार्पूनाथः । भगवन्तनाथः । इत्यादिनाथसम्प्रदाय-परम्परा प्राचीन-कालादद्यावधि निरन्तरा निर्विरामा च विद्यते । अत्र—

कैलासः प्रथमः शिवस्य वसतिः शैली यतः संस्कृतिः
स्तूपा मण्डप-लिङ्ग-टोपि-पटका घण्टा च कण्ठालकाः ।
मानी प्रस्थक-पञ्चकादि निखिलं लोके प्रवृत्तं यतः
सोऽयं मानवता-विकास-महितो वर्वर्त्ति लोकोत्तरः ॥

शिवगोरक्ष इति महामन्त्रः । शिव एव गोरक्षः । गोरक्ष एव शिवः । गोरक्ष एव गोरक्षनाथः । कल्पद्रुमे 'गोरक्षनाथः को देवः ?' इति देवैः पृष्ठः शिव आह-

'अहमेवास्मि गोरक्षो मद्रूपं तं निबोधत ।
योगमार्गप्रचाराय मया रूपमिदं धृतम् ॥'

योगः कर्मसु कौशलम् । विशेषतो धेनुरूपागोरक्षार्थं, धरारूपाया गोरक्षार्थं, वैदिक संस्कृत-वाणी-रूपायाश्च गोरक्षार्थं शिवो गोरक्षतां प्राप्तो विष्णुर्गोपालतां गतः । शिव एव आदिनाथः । पार्वती उदयनाथः । आदिनाथस्य शिष्यो मत्स्यावतारो मत्स्येन्द्र-

नाथः। मत्स्येन्द्रनाथस्य शिष्यो गोरक्षनाथः। इत्थं नव नाथाः। द्वादश पन्थानः। चतुरशीतिः सिद्धाः प्रसिद्धा गोपीचन्द्र-भर्तृहरि- गहनी-ज्ञानेश्वर-प्रभृतयः। अत्र—

'गुरुः शिष्यपदे स्थित्वा स्वयं देवो निरञ्जनः।
प्रश्नोत्तरमुखैर्वाक्यैस्तन्त्रं समवतारयत् ॥'
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

चतुष्षष्टिकोटिप्रमाणागमो यो गिरीन्द्रात्मजाशर्वसंवादरूपः। महादेव-वामदेव-शुकदेव-मार्कण्डेय-नारद-नचिकेतो-घेरण्ड दुर्वासो याज्ञवल्क्य-गार्गी-जनक-सनकादि-सेवितं निगमागम-सङ्गमरूपं योगमार्गं प्रवर्त्तयन्नित्थं कथयति शिवगोरक्षनाथः—

द्विजसेवितशाखस्य श्रुतिकल्पतरोः फलम्।
शमनं भवतापस्य योगं भजत सत्तमाः ॥
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥

इति मुख्यानि षडङ्गानि। अहिंसा-सत्याऽस्तेय-ब्रह्मचर्याऽपरिग्रहाः पञ्च यमाः।
२ १
शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः पञ्च। दशधा सर्वसाधारणो मानवो धर्मः—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

इतिवत् सर्वैर्मानवैः सर्वदा सर्वथा प्रतिपालनीयः। यतो हि—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्माद् धर्मो न हन्तव्यो मा नो धर्मो हतोवधीत्।

यथा स्थिरसुखमासनं तथा—

धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः।
यत् स्याद् धारणसंयुक्तं स धर्म इतिनिश्चयः ॥

अत्र पातञ्जलोऽष्टाङ्गयोगः संवादी—यमनियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि। योगश्चित्तवृत्तिनिरोध इति च गोरक्षयोगेन संवादी विद्यते—

यश्चित्त-सन्तत-लयः स लयः प्रदिष्टो
यस्तु प्रभञ्जन-विधान-रतो हठः सः ।
यो मन्त्र-मूर्ति-वशगः स तु मन्त्रयोगो
यश्चित्तवृत्तिरहितः स हि राजयोगः ।।

कापिलः सांख्ययोगश्च गोरक्षयोगसंवादी—

सांख्य-योगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।
यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते ।।
गोरक्षस्य क्रियायोगो ज्ञानयोगश्च कापिलः ।
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।।

श्रुतिश्च – कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः । तथाहि गोरक्षनाथस्यापि क्रियाशील. सिद्धान्तः आरम्भोऽथ घटस्ततः परिचयो निष्पत्तिरित्थं चतुर्धायं योग उदीरित. शिवगुरोरष्टाङ्गयोगस्तथा । तारकयोगः । बिन्दुयोगः । शिवयोगः । शिवजीव-योगः । सूर्याचन्द्रमसोर्योगः । गङ्गायमुनयोर्योगः । इडापिङ्गलयोर्योगः । प्राणापानयो-र्योगः । हंसयोगश्च योगः—

हकारेण बहिर्याति सकारेण विशेत् पुनः ।
हंस हंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ।।

हंसः सोहं भवति । सोहं ओहं भवति । ओहं ॐ भवति ।

ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।
मुद्रेयं शाम्भवी चित्तमन्तश्चक्षुर्बहिः स्मृतम् ।।
सिद्धासने समासीनो मुद्रां दद्याच्च शाम्भवीम् ।
उन्मेषः प्रतिपच्चक्षुरमावास्यास्तलोचनम् ।
अर्धावलोकनं यत् स्यात् पौर्णमासीं वदन्तिताम् ।।

अमादृष्टिः पूर्णिमादृष्टिः प्रतिपद्दृष्टिरिति गोरक्षनाथयोगसिद्धान्ते योगदृष्टि-स्त्रिधा मता । पौर्णमास्यां निमेषोन्मेषयोः प्रचारो भिद्यते, दृष्टौ स्थिरायां मनःस्थिर-त्वम् । मनः स्थिरत्वे पवनस्थिरत्वम् । प्राणो मनो द्वयमिदं विलयं नयेद्यो मोक्षं स गच्छति जनो न कथञ्चिदन्यः । दृष्टिस्थैर्ये जाग्रदवस्थालयः । मनः स्थिरत्वे स्वप्ना-वस्थालयः । पवनस्थिरत्वे सुषुप्तिलयः । मरुद्दृष्टिमनोनाशास्तुर्यमुत्पादयन्ति । तुर्यस्तु राजयोगः स्याद्यत्र कालो न विद्यते ।

आरम्भश्च घटश्चैव ततः परिचयस्तथा ।
निष्पत्तिः सर्वयोगेषु योगावस्था चतुर्विधा ।।

योगी परित्यज्य समस्त-वासनां धृतासनो यः कुरुते मरुत्क्रियाम् ।
अतन्द्रितश्चान्तरकर्म सम्यगारम्भ एष प्रथितोऽत्र सिद्धैः ।।

हंसेति जीवः खलु षट्शताधिकं सदा जपत्येकसहस्त्रविंशतिम् ।
जपस्य सर्वस्य च वैपरीत्यमारम्भभूमिं प्रवदन्ति सिद्धाः ।।

कायेषु कान्तिर्वदने प्रसादोनेत्रे च नैर्मल्यमतीव रूपम् ।
गन्धः शुभो मूत्रमलञ्च किञ्चिदारम्भभूमेः प्रवदन्ति चिह्नम् ।।

आदौ मृदङ्गध्वनि-मेघ-भेरी- नादो विचित्र-क्वणनस्त्वनाहतः ।
आनन्दलब्धिस्तु तथैव ब्रह्मग्रन्थेर्विभेदेन च शून्यसम्भवः ।।

ततो मिलित्वैव मरुन्मनश्च विभेद्य बन्धद्वयमेति सुस्थिरः ।
आपूर्य कामं गगनेषु पूर्णां घटाख्यभूमिं प्रवदन्ति सिद्धाः ।।

मनो मरुत् प्राप्य विनैव घोषात् तथैव कुम्भेन तु सर्वकायम् ।
आपूर्य सम्यक् पवनः प्रयाति तुर्यं पदं निश्चलभाववृत्तिम् ।।

यस्य चित्तं निजे ध्येये मनसा मरुता सह ।
लीनं भवति नादेन लययोगी स एव हि ।।

भवेदष्टाङ्गमार्गेण मुद्राकरणबन्धनैः ।
यथा केवलकुम्भेन हठयोगी वशानिलः ।।

त्रिषु लक्ष्येषु यो ब्रह्मसाक्षात्कारो भविष्यति ।
ज्ञानेनाथ मनोवृत्तिरहितो राजयोगवित् ।।

योगस्त्रिधा भवेत् सांख्यस्तारकश्चामना इति ।
अन्तर्मुद्रापरिज्ञानादमनस्कं तदुच्यते ।।

शब्दद्वारे स्फुटे यत्र गन्धद्वारे तथैव च ।
समयोगे चतुष्पीठं शृङ्गाटकमिति स्मृतम् ।।

तस्य त्रिकूटनामापि त्रिवेणीसङ्गमस्थलम् ।
शृङ्गाटकं चतुष्पीठं नामान्येकस्थलस्य तु ।।

अत एव महाश्चर्यं चन्द्रसूर्याग्निसद्मनि ।
निबध्नाति मनो योगी प्रणवध्यानतोऽनिशम् ।।

गुरोर्यस्य प्रभावेण सिद्धे केवलकुम्भके ।
यदि किं करणैर्मुद्राबन्धनैरेषमादिभिः ।।

विशदे केवले कुम्भे प्राप्ते शिवपदेऽनिले ।
तदा खलु तयोरैक्यं जीवात्मपरमात्मनोः ।।
बन्धत्रयमिदं गुप्तं संसारबन्धनाशकम् ।
योऽपानसूर्यमथ वायुनिरोधनेन प्राणेन्दुना सह तदूर्ध्वगतिः प्रकृत्या ।
योगैकसिद्धिमनिशं कुरुते समस्तं बन्धेषु गोपित इतीह स मूलबन्धः ।।
अधश्चोर्ध्वञ्च नाभेर्यो बन्धनं कुरुते बलात् ।
उड्डियानाभिधो बन्धो जरामृत्युविनाशकः ।।
कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम् ।
एष जालन्धरो बन्ध ऊर्ध्वामृतनिरोधकः ।।
बन्धत्रयेणासनबन्धनेन मन्त्रेण नादश्रवणेन योगी ।
भवेत्तथा केवलकुम्भकेन ध्यानेन चित्ताष्टविधावधानी ।।
नेत्रे निमीलिते किञ्चिदुन्मीलिते सती ।
यो मनश्चक्षुषा ब्रह्मपश्यतीति स योगिराट् ।।
निराकारं पश्यन् गुणरहितमाकाशमथवा
तमोरूपं तारानिभमिह पराकाशमथवा ।
सदाकाशं कालानलनिभमथात्यन्तरुचिरम् ।
परं तत्त्वाकाशं रविशतनिभं सूर्यरवमपि ।।
व्योमपञ्चकमेतादृग् बाह्याभ्यन्तरसंस्थितम् ।
यः पश्यति नरो लक्ष्यं स व्योमसदृशो भवेत् ।।
फलमेकं द्विधाचारो यथार्थं सांख्ययोगयोः ।
उपाधिरहितं सांख्यं योगः सोपाधिकः स्वयम् ।।
नान्तस्थं न बहिर्व्याप्तमपरोक्षस्वरूपकम् ।
आकाशाभ्यन्तराकाशमन्तर्लक्ष्यं तदेव हि ।।
लक्षलीनमनसाऽनिलेन यो वर्त्ततेऽचलिततारको महान् ।
खेचरीयमिति सैव शाम्भवी मुद्रिका स तु तया जगद्गुरुः ।।
नासाग्रदत्तनिमिषोन्मिषबाह्यदृष्टया
ज्योतिःस्वरूपममलं हृदि बाह्यहीनम् ।
स्वानन्दमद्वयमनादिमनन्ततत्त्वं
पश्यन्त एव इह संयमिनः कृतार्थाः ।।

यदा तज्ज्योतिरोङ्कारं ब्रह्मविष्णुशिवात्मकम् ।
पश्यन्ति योगिनः शान्तास्तच्छम्भोः परमं पदम् ॥
शिवयोगमिमं पुण्यं जीवन्मुक्तिकरं नृणाम् ।
दृग्दृश्यभावसम्बन्धानुन्मथ्नन्तं विचिन्तयेत् ॥
सर्वेन्द्रिय-गुणरहिता रूपातीता निरञ्जना शान्ता ।
भावाभावविदूरा सहजावस्थितिः सा कथिता ॥
स्वं पदमखिलं लोकं पश्यन् शरदिन्दुरूपमिव चित्रे ।
तिष्ठति समाजमध्ये स्वप्नावस्थान्वितो महायोगी ॥

मुद्रा—

मुद-मोदे तु रा-दाने जीवात्मपरमात्मनोः ।
उभयोरैक्यसंवित्तिर्मुद्रेति परिकीर्तिता ॥
मोदन्ते देवसंघाश्च द्रवन्ते ह्यसुरादयः ।
मुद्रेति कथिता साक्षात् सदा भद्रार्थदायिनी ॥

आदेशः—

आत्मेति परमात्मेति जीवात्मेति विचारतः ।
त्रयाणामैक्यसम्भूतिरादेशः परिकीर्तितः ॥

अजपागायत्री—

अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
अस्याः सङ्कल्पमात्रेण नरो मोक्षमवाप्नुयात् ॥

अजपासंख्याऽहोरात्रे—

षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिम् ।
हंस हंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ॥

आसनादिफलम् —

आसनेन रुजो हन्ति प्राणायामेन पातकम् ।
विकारं मानसं योगी प्रत्याहारेण मुञ्चति ॥

द्विधा देहिनः—

अपक्वाः परिपक्वाश्च द्विविधा देहिनो भुवि ।
अपक्वा योगहीनास्तु पक्वा योगेन देहिनः ॥

कथं सिध्यन्ति योगिनः—

षट्चक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ।
स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः ?
पिण्डब्रह्माण्डयोरैक्यं श्रीगोरक्षमते स्थितम् ।
ब्रह्माण्डे यत्तच्च पिण्डे, इति विश्वात्मदर्शनम् ।।
शिवस्याभ्यन्तरे शक्तिः शक्तेरभ्यन्तरे शिवः ।
अन्तरं नैव जानीयाच्चन्द्रचन्द्रिकयोरिव ।।

अयं सामरस्यसिद्धान्तः—

जगति क्वचिन्मातृसत्ताप्रधानता । क्वचित् पितृसत्ताप्रधानता । शिवगोरक्षनाथसम्प्रदाये मातापित्रोः समाना सत्ता, समानं मानम्, समानं महत्वम् । तथा हि यथास्थानं, यथाकालं, यथापात्रं च कमल कोमल-मानस-योगिनः —

काष्ठं शिला कुलिशमस्ति कठोरवर्ग —
स्तेभ्योऽपि गाढमधिकं किल योगिचेतः ।
वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ।।

नाथसम्प्रदाये सेवाधर्मस्य महिमा—

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे वसति च सदा दूरतश्चाप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।।

न केवलं मानवसेवा । अपितु स्थावरजङ्गमजीव जातसेवा धर्मः स्वयमहिंस्यतया सहजास्थितिः । अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः । शिवगोरक्षनाथस्य भिक्षाकृते शिक्षा —

स्वयं दत्ता सुधातुल्या जलतुल्या च याचिता ।
रक्ततुल्या च कलहैः सा भिक्षा नैव भक्ष्यताम् ।।

अस्यानुवादः —

आप दिया सो दूध बराबर मांग लिया तो पानी ।
रगड़-झगड़ कर रक्तबराबर सो भिक्षा नहि खानी ।।

गवां रक्षणाद् गोरक्षो लोकधिया देशिकदृष्ट्या महेश्वरानन्दः कथयति शास्त्रविषये —

ऊर्ध्वं ज्वलति प्रकाशो विमर्शविच्छुरितनिश्छलोद्योतः ।
संज्ञाविशेषनिर्णय मात्रप्रवृत्तानि यत्र शास्त्राणि ।।

आत्मा—

आत्मा खलु विश्वमूलं तत्र प्रमाणं न कोऽप्यर्थयते ।
कस्य वा भवति पिपासा गङ्गास्रोतसि निमग्नस्य ॥

आत्मनः स्फुटता—

माणिक्य-प्रवेक इव निचोलितो निजमयूखलेखया ।
प्रतिभाति लौकिकानामत्यन्तस्फुटोऽप्यस्फुट आत्मा ॥

शिवशक्तिविभाग-कल्पना—

आलेख्य-विशेष इव गज-वृषभयोर्द्वयोः प्रतिभासम् ।
एकस्मिन्नेवार्थे शिवशक्ति-विभाग-कल्पनां कुर्मः ॥

योगिनो लोकयात्रा—

उल्लोकानन्दसुधा-शीधुरसोद्वेजितेन हृदयेन ।
अभिलषति लोकयात्रा-तिन्तिणीचर्वणरसान्तरं योगी ॥

योगिनः पर्वपरिपाटी—

योगी जागर-स्वप्न-सौषुप्त-तुरीय-पर्व-परिपाटीम् ।
चित्रामिव मणिमालां विमर्शसूत्रैकगुम्फितामुद्वहति ॥

देवता-बुद्धिः—

चित्रं न लिखति चित्रं चित्रकरो लिखति पश्यत चित्रम् ।
तद् भणत कुत्र योग्या कर्त्तुं द्वयोरपि देवता-बुद्धिः ॥

भावयोगः मूर्तिपूजा—

यो यस्य भावयोग स्तस्य खलु स एव देवता भवति ।
तद्भाव-भाविता अभिलषितं तथा फलन्ति प्रतिमाः ॥

यामली सिद्धिः—

अहो ! संसारसुखातिशयः ! अहो ! सुलभं मोक्षमार्गसौभाग्यम् ।
त्रुटितातङ्ककलङ्का अहो ! शिवयोगिनां यामली सिद्धिः ॥

शिवगोरक्षगीता-सिद्धान्त-समन्वयः—

एनमेव महार्थं युद्धारम्भे पाण्डुपुत्रस्य ।
षोडशसहस्रशक्तिरुपदिशति माधव इति शिवम् ॥

पाशुपतमार्ग एव माहेश्वरमार्गः—

वर्धतां देशिकः श्रीमान् संविन्मार्गश्च वर्धताम् ।
माहेश्वराश्च वर्धन्तां वर्धतां च महेश्वरः ।।

श्यामैव रामा कविरेव विद्वान् विद्यैव बन्धुर्धनुरेव शस्त्रम् ।
आत्मैव तीर्थं हर एव धन्वी मार्गेषु माहेश्वर एव मार्गः ।।

माहेश्वरमार्ग एव पशुपतिमतम्—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिल नानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।।

इत्थं नाथसम्प्रदायस्य गोरक्षराष्ट्रे नेपाले समन्वयः
ज्योतिर्लिङ्गस्वरूपः पञ्चाननः पशुपतिनाथः स्थितः ।
यस्यात्मा हिमशैलजा गणपतिः सूर्यो हि विष्णुर्हरः
पञ्चास्यैः सुविभूषितः पशुपतिस्तेषाञ्च पञ्चात्मकैः ।
त्रैलोक्यं सचराचरं त्रिगुणजं पञ्चात्मभिः सन्दधे
योऽजस्रं हि रसादिभिश्च भगवांस्तस्मै नमः शम्भवे ।।

अतीतकलिवर्षेषु शून्यद्वन्द्वरसाग्निषु ।
नेपाले जयति श्रीमानार्यावलोकितेश्वरः ।।

आर्यावलोकितेश्वरो मत्स्येन्द्रनाथ. ।
गोरक्षराष्ट्रनेपालसिद्धाचलमृगस्थली ।
यत्र गोरक्षनाथेन मेघमालाऽऽसनीकृता ।।

द्रव्ये गोरसभिक्षुता विजयते गोरक्षराज्यप्रदा । शिवगोरक्षनाथस्य नाम्ना गोरक्षाचलः । गोरक्षा (गोरखा) राजधानी । गोरक्षा (गोरखा) राज्यम् । गोरखा भाषा । गोरखापत्रम् । वीरगोरखाजातिश्च जगति प्रख्याताः । गोरक्षके गोरक्षराष्ट्रे नेपाले स्वर्ण-रजतादि-मुद्रासु गोरक्षनाथस्य नामधेयमित्थं स्थितम्—

'श्रीश्रीश्री गोरषनाथ' 'श्रीभवानी'

अथ गोरक्षनाथस्य कृपयार्जितसद्बलः ।
पृथ्वीनारायणः सम्राड् दिग्जयेषु-मर्ति व्यधात् ।।

वरदीकृतगोरक्षः करदीकृत भूपतिः ।

पृथ्वीनारायणो राजा पृथ्वीनारायणोऽभवत् ।।

गुरुदेवप्रसादेन मातृमातुलशिक्षया ।

नरभूपालजो राजा नरभूपालकोऽभवत् ।।

पृथ्वीनारायणराजगुरुः सिद्धो भगवन्तनाथस्तथा शतशः सिद्धाः परे प्रसिद्धा इतिहासे । मृगस्थली स्थली पुण्या भालं नेपालमण्डले गोरक्षनाथसिद्धपीठं प्रतिष्ठितं पाशुपतक्षेत्रे । ललितपत्तने कण्ठमण्डपे च मत्स्येन्द्रनाथस्य मन्दिराणि सन्ति । चोभारे कच्छपाद्रौ आदिनाथस्यादीश्वरे स्थाने स्थिते । ऐतिहासिकराजधान्यां गोरक्षायां कैलासकूटभवने गोरक्षनाथप्रकटीभावगुहा महिता । नारायणीतरङ्गिणीतटे स्पर्शनाथस्थानं स्थितम् । त्रयस्त्रिंशत्कोटित्रिदशप्रतीकानां शालग्रामाणां जनन्या गण्डक्या नद्या उद्गमे मुक्तिक्षेत्रे मुक्तिनाथः स्थितः । सपादलक्षे झारखण्डे ववैवाहिनीतीरे रत्नपुरे दाङ्गे सिद्धो रत्ननाथः स्थितः । तत्रैव श्रीग्रामे सिद्धो भगवन्तनाथः स्थितः । ऐरावती-तीरे प्रतिष्ठानपुरे सिद्धाः संसार-फलाहार-मेलनाथः स्थिताः । जगज्ज्येष्ठाराज-धान्यां यमलायां तिलानदीतीरे सिद्धश्चन्दननाथः स्थितः । कर्णालीसरयूसरितस्तीरे हिमवत्तुङ्गे श्रृङ्गे सिद्धस्तारानाथः स्थितः । होमलायां कर्णालीकूले तप्त कूण्ड गुहायां सिद्धः खार्पूनाथः स्थितः । अथ खारिप्रदेशस्थो यो जावेश्वरतामगात् । तेन श्रीनाम-राजेन शिञ्जापुर्यां स्थितिः कृता । तत्रैव खारिपरिसरे सरयूतीरे सिद्धः खेचरनाथः स्थितः । बृहतीमालिका पादमूले वृद्धगङ्गापश्चिमकूले—संसारव्याधिविध्वंसपटीयान् यत्र विश्रुतः । श्रीवैद्यनाथगिरिशस्तस्मिन् श्रीकोटसत्पुरे । पातालभुवनेश्वरगङ्गोल-पूर्वस्यां श्वेतायाः सरितः पश्चिमायां हिमशैलमौलौ मल्लिकानाथः स्थितः । इत्थं स्थाने स्थाने नाथसिद्धाः प्रसिद्धाः । रत्ननाथ-भगवन्तनाथसिद्धयोर्मध्ये दाङ्गमण्डले 'नेपाल-संस्कृत-विश्व विद्यालये' स्वर्गीयश्री ५ महेन्द्रेण स्थापिते प्रधानसञ्चालकपदे नियुक्तो योगी नरहरि नाथः साम्प्रतं नाथपरम्परां प्रतिपालयति संस्कृत-संस्कृति-संरक्षणा-त्मिकाम् ।

यथा भारते प्रतिराज्यं गोरक्षपुर-गोरक्षटिल्ला-गोरक्षमठी-गोरक्षकूट-गोरक्ष-गुहा-गोरक्षकूपादीनि तीर्थानि सन्ति तथा तानि गोरक्षराष्ट्रे नेपालेऽपि स्थले स्थले सन्ति ।

'आदिनाथ गुरु सकल सिद्धांचा । मछिन्द्र तयाचा मुख्य शिष्य' इत्यादि महाराष्ट्रे यथा, तथा गोरक्षराष्ट्रे नाथसम्प्रदायसिद्धान्तः काश्मीरे राजस्थाने स्थानान्तरेषु च प्रसिच्द्धः । विश्वस्य विभिन्नेषु भागेषु च प्रसिद्धः । अखिल-भारत-वर्षीय-योग-प्रचारिणी-महासभाद्वारा ग्रथितायां गोरक्षग्रन्थमालायां शताधिका ग्रन्थाः प्रकाशं गताः । सहस्रशो ग्रन्थाः प्राचीना हस्तलिखिता नीलपत्र-ताल-पत्र-शिलापत्र-कनकपत्र-ताम्रपत्र-पाण्डुपत्र-श्वेतपत्र-भुर्जपत्राऽभ्रकपत्रादिषु दृश्यन्ते । तत्र प्राधान्यं योगागमायुर्वेदादीनाम् । इदञ्च किञ्चिद्दिग्दर्शनम्—

तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः ।
उन्मनी कल्पलतिका सद्य एवोद्भविष्यति ।।

अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ।
जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति ।।

उत्साहो निश्चयो धैर्यं तत्त्वज्ञानार्थदर्शने ।
जनसङ्गपरित्यागः षड्भिर्योगः प्रसिध्यति ।।

हठं विना राजयोगो राजयोगं विना हठः ।
न सिध्यति ततो युग्मं मनीषी तत् समभ्यसेत् ।।

न दृष्टिलक्षाणि न चित्तबन्धो न देशकालौ न च वायुरोधः ।
न धारणा-ध्यान-परिश्रमो वा समेधमाने सति राजयोगे ।।

तारकाग्रस्थितं तेजस्तद्बिन्दुस्यूतितं यदि ।
योगं तारकमित्याहुर्योगिनो ब्रह्मवादिनः ।।

द्वादशाङ्गुलदूरेऽस्मिन् शिरोदेशे महाप्रभे ।
प्रादेशमात्रव्यायामं ज्योतिःपुञ्जं महाद्भुतम् ।।

तद्दर्शनेन सततममृतत्वं भविष्यति ।
तारकं दुर्भराम्भोधेस्तारकं मोक्षकारकम् ।।

जपयोगानभिज्ञस्य मनःस्थैर्यं न जायते ।
गुरुणा शाम्भवी मुद्रा दत्ता चेल्लभते ध्रुवम् ।।

अश्रु-सम्पात-पर्यन्तमाचार्यैस्त्राटकं स्मृतम् ।
व्यापारशून्ये मनसि स्थिरयोस्तारयोर्बहिः ।
चान्द्री कला चिदाकाशादाविर्भवति योगिनः ।।

समदृष्टिरवाग्दृष्टिरूर्ध्वदृष्टिरिति त्रिधा ।
काकाक्षिन्यायतस्तत्र सम्यक् स्याद् बिन्दुदर्शनम् ।।

मनःपवनयोगेन यावच्छक्तिप्रधानकम् ।
तावन्मात्रन्तु विश्राम्य चिदाकाशं तु लक्षयेत् ।।

आकाशे तिष्ठते (ति) सूर्यः सर्वयोगेषु गोपितः ।
लक्षैकलग्ने मनसि ह्यमनस्कं प्रजायते ।।

अमनस्के तु सञ्जाते स्वरूपं सम्प्रजायते ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ।।

छित्त्वाष्टकमथो जित्वा षट्कं भित्त्वा त्रिकं तथा ।।
हित्वा द्विकं श्रयेदेकमिति सिद्धान्तडिण्डिमः ।

न दिवा जागरितव्यं सुप्तव्यं नैव रात्रिभागेऽपि ।
रात्रावहनि च सततं शयितव्यं योगिना नित्यम् ।।

निर्मले सहजस्थिते पूरुषे न दिवारात्रिभेदोऽस्ति ।
जागरणशयनवर्जितचिन्मात्रानन्दावस्थानात् ।।

वामदेव-महादेव-संवादोक्ति-निबन्धनः ।
अमनस्क-महायोगो गोरक्षेण प्रकाशितः ।।

प्रसह्य सङ्कल्प-परम्पराणामुच्छेदनात्सन्तत-सावधाना ।
आलम्बनाशादपचीयमाना शनैः शनैः शान्तिमुपैति दृष्टिः ।।

सदाशिवोक्तानि सपादलक्षं लयावधानानि भवन्ति भूमौ ।
नादानुसन्धान-समाधिमेकं मन्यामहे मान्यतमं लयानाम् ।।

नेत्रे यदोन्मेषनिमेषशून्ये वायुर्यदा वर्जितरेचपूरः ।
मनश्च सङ्कल्पविकल्पशून्यं मनोन्मनी सा मम सन्निधत्ताम् ।।

निवर्तयन्तीनिखिलेन्द्रियाणि प्रवर्त्तयन्ती परमात्मयोगम् ।
संविन्मयत्वात् सहजामवस्थां निश्शेषनिर्मूलिततर्कजाले ।।

निरन्तराभ्यासिनि नित्यभद्रे विजृम्भते योगिनि योगनिद्रा ।
प्रकाशमाने परमात्मभावे नश्यत्यविद्यातिमिरं समस्तम् ।।

दृश्यं पश्यति यन्न पश्यति शनैराघ्रेयमाजिघ्रति
भक्ष्यं भक्षयति श्रुतिप्रियकरं श्रव्यं शृणोत्यादरात् ।
स्पर्शं स्पर्शयते गिरिं घनशिखाप्रख्यं मनोज्ञक्रमाऽ-
द्वैताख्यस्य पदस्य तत्त्वपदवीं प्राप्तस्य सद्योगिनः ।।

निष्पन्नाखिलभावशून्यनिभृतस्वात्मस्थितिस्तत्क्षणा-
न्निश्चेष्टः शवपादपाणिकरणोऽतीवाविकारस्थितिः ।
निर्मूलप्रविनष्टमारुततया निर्जीवकाष्ठोपमो
निर्वातस्थितदीपवत् सहजवान् पार्श्वस्थितैर्दृश्यते ।।

निःक्षिप्ते कतके विहाय कलुषं यद्वद्भवेन्निर्मलं
निर्वातस्थितनिस्तरङ्गमुदकं स्वस्थस्वभावं परम् ।
तद्वत्सर्वमिदं विहाय कलहं देदीप्यते निष्कलं
तत्त्वं तत्सहजस्वभावममलं जातेऽमनस्के ध्रुवम् ॥

कदलीव महामाया समनस्केन्द्रियच्छदा ।
अमनस्कं फलं सूत्वा सर्वथैव विनश्यति ॥

इन्द्रियग्रामपदयोः श्वासनिश्वासपक्षयोः ।
सञ्छिन्नयोर्मनः पक्षी स्थिरः सन्नवसीदति ॥

श्वाससूत्रसमोपेतमिन्द्रियालयसङ्कुलम् ।
त्रोटयित्वा मनोजालं मीनवज्जायते सुखी ॥

प्रशान्तेन्द्रियसङ्घातः शुद्धबुद्धिसमन्वितः ।
प्राणापानौ ततो जित्वा मनःशत्रुं सुखी भवेत् ॥

गुणत्रयमयीं रज्जुं सुदृढामात्मबन्धनीम् ।
अमनस्कक्षुरेणैव छित्वा मोक्षमवाप्नुयात् ॥

यथा संक्षियते सर्वमस्तं गच्छति भास्करे ।
कर्मजालं तथा सर्वममनस्के विलीयते ॥

इन्द्रियग्राहनिर्मुक्ते निर्धूते निर्मलामृते ।
अमनस्कह्रदे स्नातः परामृतमुपाश्नुते ॥

इत्युक्तमेतत् सहजामनस्कं शिष्यप्रबोधाय शिवेन साक्षात् ।
इत्यन्ततो निष्कलनिष्प्रपञ्चं वाचामवाच्यं स्वयमेव वेद्यम् ॥

ॐकारत्रिविधैर्विचित्रकरणैः प्राप्यश्च वायोर्जय-
स्तेजश्चिन्तनमन्तरालकलना शून्याम्बरालम्बनम् ।
त्यक्त्वा सर्वमिदं कलेवरगतं मत्वा मनोविभ्रमं
देहातीतमवाचमेकममनस्कत्वं बुधैः सेव्यताम् ।

(शिवम्)

# साहित्यस्य शास्त्रत्वम्

**वी० एच० सुब्रह्मण्य शास्त्री**

सहृदयतमाः सभ्याः सभापतयश्च, विशेषज्ञ विभासितायां अस्यां विश्वपरिषदि साहित्यस्य शास्त्रत्व मधिकृत्य किमपि लघुपत्रं वाचयितुं प्रदत्तावकाशोऽहं प्रथमत कृतज्ञतां निवेदयामि भवद्भ्यः ।

अनुशासनार्थकात् शास् धातोः औणादिके ष्ट्रन् प्रत्यये (सर्वधातुभ्यः ष्ट्रन्) निष्पद्यते शास्त्र शब्दः । ततः शासकं शास्त्रं इति पर्यवस्यति । मनुष्य कृत श्लोकमयस्य ग्रन्थ विशेषस्य साहित्य शब्द वाच्यत्वं वदति शब्द कल्प द्रुमः । ततश्च वाल्मीकि व्यास कालिदासादीनां ग्रन्थानां साहित्यत्वं, तेषां च रामादिवद्वर्तितव्यं न रावणादिवत् इत्यनुशासनकर्तृत्वाच्च शास्त्रत्वं सिद्ध्यति इति अकामैरपि अभ्युपगन्तव्यम् ।

सत्यप्येवं बहवः परिणत प्रज्ञा अपि साहित्यस्य शास्त्रत्वं विप्रतिपद्यन्ते । सुनिपुणं निरूपयन्तोऽपि तत्र अप्रतिक्षेप्यं हेतुं नोपलभामहे । अन्यत्प्रतिपाद्यं तर्क-व्याकरणवेदान्तादिशास्त्रेषु अन्यच्च काव्येषु इत्येवं प्रमेय भेदात् साहित्यापरपर्यायानां काव्यानां अशास्त्रत्वं इत्यास्थीयेत, हन्त ते परिशीलयन्तु अभियुक्तानां उक्तीः । तेह्यभि-प्रयन्ति, यथा शास्त्रेषु काव्येषु वा परमं बोधनीयं नभिद्यते, किन्तु बोधन प्रकाराः परं विभिद्यन्ते, बोध्याश्च बुद्धि गुणतारतम्येन इति ।

तथाहि शासनार्हा अधिकारिणः त्रैविध्यं भजन्ते उत्तममध्यमाधमभेदेन । उत्तमा हि स्वयं ऊहापोह निष्णाताः निगूढमप्यर्थं उपदिष्ट आत्मनोऽव्यवधानेन निस्सन्देहं प्रति-पद्यमानाः प्रभुसम्मितोक्त्यैव चरितार्थास्सम्पद्यन्ते । मध्यमाः सहेतु दृष्टान्तं सुहृत्सम्मि-तया सरण्या प्रतिबोधिताः अर्थावगत्यै कल्पन्ते । अधमास्तु न बुद्ध्या निहीनाः । तेऽपि उत्तमा इव प्रतिभा प्रतानशालिन एव । किन्तु अक्लेशसहाः सुखिनः राजपुत्र प्रभृतयः । तेहि न स्वयं व्यवस्यन्तः तत्वमवगन्तुं प्रवर्तन्ते । बौद्धः शारीरो वा परिक्लेशः तेषां अनभिमतः तेषु हि अवगत तत्वेषु विहितेषु प्रजा सुखं समेधेरन् । अतस्तेषां उपदेशाय प्रवृत्तंसरसं साहितीवर्त्म । तद्धि कान्तासम्मितया सरण्या सुगमं अवगमयति अवगमनीयम् । पञ्च तन्त्रस्य प्रवृत्तिः एतादृश्येव अभूदिति तदानुगुण्य परिशीलिनां नैवतिरोहितम् । अतएवविद्यानाथ प्रभृतिभिः अर्वाचीनैः तत्प्राक्तनैरपि—

यद्वेदात् प्रभुसम्मितादधिगतं शब्द प्रधानाच्चिरं
यच्चार्थप्रवणात् पुराण वचनादिष्टं सुहृसम्मितात् ।
कान्ता सम्मितया यया सरसतामापाद्य काव्यश्रिया
कर्तव्ये कुतुकी बुधो विरचितस्तस्यै स्पृहां कुर्महे ।।

इत्यभिधाय शास्त्र साहित्ययोः बोध्यान् प्रति परमे बोधनीये नास्ति द्वैधी भावः, किन्तु बोधन प्रकारे एवेति स्वीकृतम् । एवं च उत्तम मध्यमयो रप्यधिकारिणोः स्वारसिकी सकौतुकी च प्रवृतिः जायेत साहित्य सरण्यां अपरिश्रमसाध्यायां इत्येतद-विवादम् । अतएव यायावरीयः स्वस्यां काव्यमीमांसायां पञ्चमी साहित्य विद्ये-त्युद्घोषयति ।

प्रभुसम्मितया पद्धत्या उपदेष्टुं प्रवृत्तोऽपि भगवान् वेदः अलङ्कारादिभिः उपस्करणैः उपस्कृतां सहृदय हृदयङ्गमां साहितीसरणिं नैव नस्वीकरोति तत्र तत्र । ऋग्वेदगतं साहित्य सर्वस्वनिधानं असंख्याकैः संख्यावद्भिः विवृतमिति नाद्य तत्प्रथने प्रयत्यते । ततोऽन्यत्र च पश्यामः, तथाहि यजुर्ब्राह्मणे 'पूर्वापरं चरतो माययैतौ' शिशूक्रीडन्तौ परियातो अध्वरम् इति समासोक्त्या अप्रस्तुत प्रशंसया वा सूर्या चन्द्र-मसोर्गतिः विदग्ध निषेव्यया शैल्या वर्ण्यते । एवं नारयणोपनिषदि, 'यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति ।' इति पुण्यस्य कर्मण. परार्ध्यतां उपमया रसिक श्लाध्यया विशदयति । तथा अन्यस्यां उपनिषदि सहृदय हृदय हारि रूपक मास्थाय तत्व प्रतिपादनं प्रेक्षामहे यथा 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' इति । कठोपनिषदि आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रह मेव च' इत्यादिना प्रतिपादितं समस्तवस्तु-विषयं सावयवरूपकं भगवान् बादरायणः स्वीये शारीरकसूत्रे निर्दिशति 'आनुमानिक-मप्येकेषामिति चेन्नशरीररूपक विन्यस्त गृहीतेः दर्शयति च' इति । तत्रैवचोपनिषदि पश्यामः 'द्वासुपर्णासयुजा सखाया' इत्यादि मन्त्रेण रूपकातिशयोक्ति समलंकृतया काव्यशैल्या जीवपरमात्मनोः प्रत्यायनम् ।

शास्त्र ग्रन्थेष्वपि विनेयानुन्मुखीकर्तुं सुखमवबोधयितुं च बोध्यं, साहित्य सरणिं समाद्रियमाणां समुपलभामहे ।

सुहृत्सम्मितायाः सरण्या अनुरुन्धानत्वेन प्रसिद्धानपि पुराणेतिहासादीन् तत्रत्य साहित्यशैलीं प्रायशः प्रचुरां आलक्षयन्तः तान् अपि साहित्ये अन्तर्भावयन्ति विशेषज्ञाः । अतएव तत्र भवान् ध्वनिकारिकाकारः 'वाल्मीकि व्यासमुख्याश्चये प्रख्याताः कवीश्वराः इति पुराणेतिहास प्रणेतॄन् अपि कवीश्वरत्वेन विशिनष्टि । भारते अनुक्रमणिकायां वर्तमानं भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातन इति पद्यार्धं, महाभारतमिदं अखिलस्य प्रपञ्चस्य अनित्यतां, भगवतो वासुदेवस्य सत्यतां संसेव्यतां च प्रतिपादयति व्यञ्जना व्यापारेण इति ब्रुवन् पूर्वोक्तं व्यवस्थापयति च । अन्यत्र च कवीश्वरो व्यासः विनेयो-न्मुखीकरण पूर्वकं तत्वमवबोधयितुं काव्यशैलीं परिशीलयन् विलोक्यते 'सत्यं मनोरमा

रामाः सत्यं रम्या विभूतयः । किन्तु मत्ताङ्गनापाङ्ग भङ्ग लोलं हि जीवितं इत्यादिषु । तदिदं इतिहासात्मकं काव्यरत्नं भारतं एतादृशैः विदग्धजनवल्लभैः पद्यैः प्रचुरमेवेति नेदं दवीयः तत्परिशीलनावताम् ।

तदेतत् साहित्य रत्नं भारतं पञ्चमोवेदः इति प्रथमानं कथमशास्त्रं भवितु-मर्हति । तथा रामायणं 'वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना' इति वदत् स्वस्य शास्त्रादनतिरिक्ततां आवेदयति । एवं 'तदुक्तं शाकुन्तल स्मृतौ' इत्यभिदधानः कुमारिल भट्टः, श्रीमद्रामानुजाचार्यश्च कालिदासीयनाटकस्य स्मृतित्वं ततश्च शास्त्रा-दव्यतिरेकं च स्फोरयति ।

किञ्च शास्त्राणां हि विषयः परिमितः एव । [illegible] तु सर्वोऽपि प्रपञ्चो विषयो भवति । 'न तत् ज्ञानं न तत् शिल्पं नसा कला । नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते इत्यादि नाटच विषयतया प्रतिपादितस्य साहित्य विषयतया नयनेऽपि नासम्बद्धं किमपि भाति । काव्ये हि वयं पश्यामः क्वचित् मीमांसां, क्वचित् वेदान्तं, क्वापि तर्कं, कुत्रचित् योगं, कुहचित् साङ्ख्यं इत्यादि । सर्वं शास्त्र जातं आत्मसात् आधाय प्रवृत्तं साहित्यं आत्मनः सर्वशास्त्र मयतां [illegible] ।

आत्मानुभव प्रख्यापनं तदुपाय प्रतिपादनं वा समस्यापि शास्त्र प्रपञ्चस्य परमः पर्यन्तः । एवं चसति परनिर्वृत्यात्मकं विगलित वेद्यान्तर रसो वैस इत्यौपनिषद वाक्येन विवृतं मग्नावरचिदात्मकं आत्मानं सद्योऽनुभावयत् साहित्य शास्त्र कथम-शास्त्रं भवितुमर्हतीति प्रेक्षावन्तः प्रेक्षन्ताम् । स्वमहिम्ना एतादृशं सविकल्पसमाधि सध्रीचीनं अनुभवमादधानं साहित्यं सांख्य योगवेदान्तादि शास्त्र विवृतस्य अद्वैतस्य आत्मनः प्रपञ्चस्य च स्वरूपनिरूपणे नाकृतव्यवसायं लक्ष्यते । तथा नीलकण्ठ दीक्षिताः कवितायाः महेशे चित्तस्य निभृतं निधानाय सुलभ साधानतां आचक्षते । तथाहि तेषां वचनं,, अनायतप्राणमसंयताक्षं अब्रह्मचर्यानशनादि खेदम् । चित्तं महेशे निभृतं निधातुं सिद्धः कवीनां कवितैव योग. । इति ।

राजशेखरस्तु शास्त्रेभ्योऽपि परार्घ्यं पदं कल्पयति कवितायाः, यतो वदति, 'शास्त्र पूर्वकत्वात् काव्यानां, पूर्वं शास्त्रेषु अभिनिविशेत । इति । भामहोऽपि अकवेः शास्त्र चिन्तनं परिहसति । किञ्च अद्वैतिभिः यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इत्यादि श्रुत्यर्थं प्रमाणयतां अखण्डं आत्मतत्वं अवबोधयितुं व्यवस्यतां लक्षणा कक्षीकारेण परमं प्रयत्नं विदधतां साहित्यशास्त्र जीवितायितस्य व्यञ्जनाभिध व्यापारस्य स्वीकारे कियदिव सौकर्यं स्यादिति विदित वेदितव्या [illegible] तदेवं क्रान्तदर्शिनः कवय प्रपञ्चगत पदार्थं वर्णयन्तोऽपि तदर्थान् [illegible] सरसया च शैल्या अस्मान् आबोधयन्त. चकासन्ते । तत्कथं तेषां कृते [illegible] अनाशास्यता च भवेदिति विशेषज्ञाः पर्यालोचयन्तु । ततसिद्धं [illegible] साहित्यस्य शास्त्रत्वमिति शम् ।।

# वैदिक साहित्ये इतिहास पुराण परम्परा

डा० धर्मेन्द्रनाथ शास्त्री

वेदानां संहितासु 'इतिहास' शब्दस्य प्रयोगः केवलम् अथर्ववेदसंहितायामेव दृश्यते। अस्याः संहितायाः संकलनम् अन्याभ्यः संहिताभ्यः अनन्तरमेव समपद्यत विदुषां मतेन। अतः खलु सम्भाव्यते, यदस्याः संकलनकाल पर्यन्तं साहित्यस्य एको वर्गः 'इतिहास' इति नाम्ना प्रसिद्धिमगच्छत् यत्र अतीतयुगसम्बद्धानां व्यक्तीनां चरितानि आख्यानानि वा निबद्धानि आसन्।

'पुराण' शब्दस्य प्रयोगः सर्वासु वैदिक-संहितासु प्राचुर्येण उपलभ्यते। किन्तु तत्र सर्वत्रापि 'प्राचीन' इति अर्थे एव अस्य शब्दस्य प्रयोगः वर्तते।

अथर्ववेद संहितायाम् (१५।६।११-१२) इतिहास पुराण शब्दयोः सहप्रयोगः एव दृश्यते—

तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन्
इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च
प्रियं धाम भवति य एवं वेद।

अनयोः मन्त्रयोः अत्र पुराण शब्दस्य प्रयोगेण इदं अनुमीयते यदेष शब्दः वाङ्मयस्य वर्ग विशेषं संकेतयति। अनयोः मन्त्रयोः सायणस्य भाष्यन्तु न उपलभ्यते, परन्तु ह्विटने महोदयः स्वकीये अनुवादे 'प्राचीनाख्यानमिति' अर्थं करोति।

पुराकाले वेदानां संहिता इव 'पुराण' नाम्ना प्रसिद्धा काचन संहिताऽपि सम्भाव्यते यस्यां प्राचीनानाम् आख्यानानां संग्रहः आसीत्। वैदिक संहितानां मन्त्रान् विवेचयितुम् अपि 'पुराण' संहितायाः साहाय्यम् आवश्यकरूपेण ग्राह्यं मन्यते स्म—

इतिहास पुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति॥

संहितोत्तरवैदिकसाहित्ये इतिहास-पुराण शब्दयोः प्रयोगः प्रायः सहैव उपलभ्यन्ते । यथा शांखायन ब्राह्मणे (८,११) शतपथ ब्राह्मणे (११, ५, ६, ८; ११, ५, ७,९), गोपथब्राह्मणे (१, १, २१) । एवं विधेषु स्थलेषु उभयोः अन्तरं न स्पष्टतया परिलक्ष्यते ।

उभौ अपि शब्दौ प्राचीनान् वृत्तान्तान् चरितानि च अभिलक्षयतः । परन्तु वैदिकसाहित्ये इतिहासपुराणशब्दाभ्याम् अभिप्रेतस्य आख्यानसाहित्यस्य महत्त्वपूर्णं स्थानमासीत् । अतएव छान्दोग्योपनिषदि इतिहासःपुराणञ्च 'पञ्चमोवेदः' इतिरूपेण संज्ञितौ—

ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणं पञ्चमो वेदानां वेदः । स होवाच ऋग्वेदं भगवोऽध्यैमि, यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् इतिहास पुराणं पञ्चमं वेदानां वेदम् ।

विज्ञानेन वा ऋग्वेदं विजानाति, यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम् ।

अनेन इदमायाति यत् ऋग्वेदः यजुर्वेदः, सामवेदः चतुर्थश्च अथर्ववेदः अस्ति । ऐभ्यः चतुर्भ्यः व्यतिरिक्तश्च 'इतिहास पुराण' नामा पञ्चमो वेदः ।

छान्दोग्योपनिषदि उपरिदत्तेषु उद्धरणेषु इतिहासपुराण शब्दयोः समवेतः प्रयोगः एकवचने दृश्यते । इतिहासपुराणनामधेयस्य साहित्यस्य इतिवृत्तात्मकत्वात् आख्यानात्मकत्वाद् वा अभेदेन एकवचने प्रयोगः । अत्र 'इतिहास पुराणं पञ्चमं वेदानां वेदम्' इति यदुक्तम्, तत्तु एतादृशस्य साहित्यस्य महत्त्वं द्योतयितुं एव । अस्मिन् काले चतुर्णां वेदानां महत्त्वन्तु निर्विवादरूपेण स्वीकृतमेव आसीत् । वैदिकसंहितानां रचनायाः दीर्घकालानन्तरं यदा मन्त्रार्थबोधे काठिन्यमन्वभूयत तदा कतिपये आचार्याः इतिवृत्तात्मकानाम् आख्यानात्मकानां च संकलनानां साहाय्येन मन्त्रान् व्याख्यातुं प्रायतन्त । दिने दिने च एतादृशस्य साहित्यस्य महत्त्वं ववृधे । मन्ये तेनैव महत्त्वेन अस्य वर्गस्य पञ्चमवेदता स्वीकृता भवेत् । अथर्ववेदे एकस्मिन् स्थले (११, ७, २४) सर्वेषां वेदानां रचना निर्देशेन समम् अस्य वर्गस्य रचनोल्लेखः वर्तते—

ऋचः सामानि छन्दान्सि पुराणं यजुषा सह ।
उच्छिष्टान् जज्ञिरे सर्वे देवा दिविश्रितः ।।

एतेन अथर्ववेद- मन्त्रेण इदं स्पष्टं भवति यत् अथर्ववेद संहितायाः संकलनकाले न केवलं पुराणसंहितायाः रचनैव जाता अपितु तया वैदिक साहित्ये स्पृहणीयं स्थानम् अपि लब्धम् आसीत् । अन्यथा चतुर्भिः वेदैः समं तस्याः उल्लेखो नाभविष्यत् । अन्यैः वेदैः समं पुराणोल्लेखः तस्मिन् युगे पुराणानां महत्त्वं प्रमाणयति । एतेन इदमपि अनुमीयते यत् पुराणसंहिता अपि ऋग्-यजुस्सामाथर्वणां संहिताभ्यः अन्यूनाकारा

आसीत् । यथा विपुलकायतया विषयाणां वैविध्येन च महाभारतं 'पञ्चमोवेदः' मन्यते । तथैव पुराणविषयेऽपि इदं सम्भाव्यते ।

कौटल्यार्थशास्त्रमपि (१, २) इतिहासं वेदं स्वीकुरुतेसामर्ग्यजुर्वेदास्त्रयस्त्रयी । अथर्ववेदेतिहासवेदौ च वेदाः ।।

अत्र प्रयुक्तः इतिहास शब्दः पुराणमेवाभिप्रैति । उक्तश्च पूर्वम्, उभावपि शब्दौ समानार्थौ इति । उभावपि शब्दौ वैदिक साहित्ये पर्यायवाचिनौ इव अन्योन्यार्थाभिधाने क्वचन पृथक्-पृथक् क्वचिच्च सममेव प्रयुक्तौ दृश्येते । अत्र कौटल्य सूत्रे वेदत्रय्याः पृथङ्निर्देशः अथर्वणा च इतिहासवेदस्य निर्देशः अस्य अथर्ववेदेन सम्बन्धविशेषं द्योतयति । छान्दोग्येऽपि अथर्ववेदेन सह इतिहास-पुराण सम्बन्ध-वैशिष्ट्यं निर्दिश्यते—

अथ येऽस्योदंचो रश्यस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ।

ते वा एतेऽथर्वाङ्गिरस एतदितिहास-पुराणमभ्यतपँस्त तस्याभितप्तस्य यशस्तेज-इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ।

उभयोरपि उद्धरणयोः इतिहास पुराणाभ्यां समं नान्यस्य कस्यापि वेदस्योल्लेखः । केवलं अथर्वणा एव तदीयः सम्बन्धः अभिव्यञ्जितः ।

ब्राह्मणेषु आरण्यकेषु च पुराण शब्द-प्रयोगं उपरिनिर्दिष्टे अर्थे अष्टत्रिंशत्सु स्थलेषु उपलभामहे इतिहास-शब्दन्तु केवलं त्रयोदशसु एव स्थलेषु । शतपथ-ब्राह्मणे इतिहासशब्दस्य एकः प्रयोगः विशेषेण अवधानमर्हति । अत्र इतिहासस्य वेदता प्रतिपादिता —

मत्स्याश्च मत्स्यहतश्चोपसमेताः भवन्ति तानुपदशति । इतिहासो वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैव मैवाध्वर्युः सम्प्रेक्ष्यति, न प्रक्रमान् जुहोति । (शत० ब्रा० १३-४.३.१२) परं विद्या रूपेण वेदैः सह इति हास पुराण शब्द प्रयोगः अन्यत्रापि एकस्मिन् स्थले उपलभ्यते । तथाहि—

अस्य महतो भूतस्य निःश्वसितमेतद् यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराण विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । (शत. ब्रा. १४.५.४.११) तथैव बृहदारण्यकेऽपि इतिहास-पुराणशब्दयोः समवेतः एकवचन प्रयोगः अन्यैश्चतुर्भिः वेदैः सह अस्ति ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम् (बृहदारण्यक. ४.४.१०) ।

शतपथब्राह्मणस्य प्रथममुद्धरणं तद्रचनाकालें इतिहासः (सम्भवतः इतिवृत्तात्मकमाख्यानसाहित्यम्) लब्धप्रतिष्ठः आसीदिति स्पष्टयति । द्वितीये तृतीये च

उद्धरणे वाङ्मयस्य महत्त्वपूर्णैः अङ्गैः सह इतिहास पुराणोल्लेखः तत्समकक्षतां प्रदर्शयति ।

उद्धरणान्येतानि स्पष्टं सङ्केतयन्ति यत् वैदिकसंहितानां रचनाकाले 'इतिहास पुराण' नाम्ना व्यवहृता वाङ्मयशाखा वैदिकसंहिताः इव लब्धगौरवा आसीत् । अनेन पुराण साहित्यसमृद्धिरनुमीयते ।

एवं प्रतीयते यत् वेदरचनाकाले द्विविधं साहित्यमासीत् । एकं उच्चश्रेणिकैः कविभिः ऋषिभिश्च प्रणीतम्, अपरञ्च जनकविभिः लोकभाषायां गीतं स्यात् । गद्यपद्यमयं वीरपुरुषाणां चरितम् । नैतद् सम्भवति यत् मनीषिणः ऋषयः वैदिकसूक्तानि अरचयन् परं अन्ये लोकभाषा कवयः सर्वेऽपि मौनमातिष्ठन्त । अतिप्राचीने काले लोकगायकैः गीतानि, वर्णितानि च चरितानि अंशतः वैदिक साहित्ये पश्यामः । शुनः शेपप्रभृतीनामाख्यानानि एतादृशान्येव । परमेषां विकसितं रूप रामायणे महाभारते पुराणेषु उपलभ्यते ।

इतिहास पुराण संहितासु वैदिकयुगस्य ततोऽपि च पूर्वकालिकानां आख्यानानां संकलनं सम्भवति । एतदपि सम्भवति यत् तद्युगीनानां ऐतिहासिकीनां कथानां संग्रहः इतिहास शब्देन, प्रागैतिहासिकानां वृत्तानां च संग्रहः पुराणशब्देन निर्दिष्टः, अनन्तरं च दीर्घकालव्यवधानेन उभयोर्विवेकाऽसम्भवात् समानार्थ. प्रयोगः अजायत । सृष्टिसमारम्भ विषयिण्यः मानवीकृत भौतिकतत्त्वविषयिण्यश्च कथा कोविदग्रामवृद्धेभ्यः साहित्य परम्परया च लब्धा. कथाः पुराणनाम्ना व्यवहृताः अभूवन् ।

प्रसिद्धो भाष्यकारः आचार्य सायणः सर्वत्रापि स्ववेदभाष्ये कथोल्लेख प्रसङ्गे "अत्रेयमितिहासमाचक्षते—" इत्याह । एतेन स्पष्टं भवति यत् सायणकाले वैयक्तिकानि आख्यानानि इतिहासपदेन व्यवह्रियन्ते स्म । अतः सायणात्पूर्वं वैदिके साहित्ये इतिहास शब्द प्रयोगः चरितकथाः अभिप्रेत्य अक्रियत ।

वेदसंहितासु चरिताख्यानानि स्वीकुर्वाणा, तानि उपजीव्य च वेदमन्त्राणां व्याख्यातारः ये नाम वृत्रादीन् असुरादीन् स्वीकुर्वते स्म, ते यास्कमतेन इतिहासज्ञा आसन्, अपरे तु वृत्रादिपदानां मेघादिरूपेण व्याख्यातारः नैरुक्ताः आसन् । इत्थं यास्कस्य काले भिन्न दृष्टि युक्तौ द्वौ वर्गौ आस्तामिति स्पष्टं भवति । इतिहास-पुराण-परम्परा वैदिके वाङ्मये अतिप्राचीनतमेति च सिद्ध्यति ।

# वर्णाश्रमव्यवस्था

के० आर० श्यामला, एम० ए०

भारतवर्षस्य संस्कृति अनपायिनीशक्तिसम्पन्ना, दिव्यादर्शसनाथा, पारलौकिकैहलौकिकानां रम्यसामञ्जस्यकर्त्री, सार्वकालिकसार्वदेशिकस्वीकृतसिद्धान्तयुक्ता च वर्तते। संस्कृतिस्तु सम्+कृ+क्तिन् इति त्रिपदैः निर्मितास्ति। एतस्याः तात्पर्यं च मानवमात्रस्य सर्वाधिकपरिष्कृतस्य सर्वाधिकसुसंस्कृतस्य सुव्यवहारस्य दिग्दर्शनमेवास्ति। संस्कृतिश्च मानवहृत्सु अनवरतरूपेण विद्यमाना सा भावनास्ति या पूर्णतः नैसर्गिकी स्वाभाविका च भवति। सा च अस्माकं व्यवहारविशेषस्य नियामिकास्ति। सभ्यता च एतद्विधायाः नैसर्गिकभावनायाः बहिर्दिग्दर्शनरूपेण प्रकटी भवति। भारतीय संस्कृतिस्तु कालान्तरस्य सततविघ्नैः बाध्यमानापि स्व-स्वरूपेण तथैव प्रोज्ज्वला वर्तते यथा प्रारम्भकाले आसीत्। स्वभावजन्यत्वात् संस्कृतिः कदापि क्षीणा न भवति इति सिद्धमेव। इदमेव वेदेष्वपि कथितम्—

"एतद् वाचो जरितार मापि मृष्ठा।
आ यत् ते घोषान् उत्तरा युगानि॥"

भारतवर्षस्य संस्कृतेः प्राचीनतमं स्वरूपं वर्णाश्रमव्यवस्थायां दृश्यते। वर्णं च आश्रमं च इति वर्णाश्रमे, तयोरधिकृत्य कृता व्यवस्था या सा वर्णाश्रमव्यवस्था कथ्यते। वर्णा आश्रमाश्च भारतवर्षस्य पुरातनसामाजिकसंस्थाः सन्ति। ताश्च प्राचीनसमाजस्य मूलाधाररूपेण सन्ति।

मानवस्तु सामाजिकजनो भवति। तस्य तु कतिपयाः कर्त्तव्या अधिकाराश्च वर्तन्ते समाजे। अद्यापि मानवस्य समाजस्य मध्ये विषमपरिस्थितियुक्तः संघर्षो वर्तते किं वर्णनेन पुनश्च पुरातनकालस्य विषये ?

समाजे सुव्यवस्थाकृते वर्णानां जातीनां वा, आश्रमाणां च व्यवस्थाभवत्। वर्णाश्चत्वारः सन्ति, ब्राह्मण क्षत्रियवैश्यशूद्राश्च। ते च समाजस्यानुशासनस्य आधाररूपेण सन्ति। वर्णव्यवस्थाया आधारस्तम्भः समाजोऽभवत्। अपि चाश्रमव्यवस्थाया

आधारो मानवोऽभूत् । मानवसमाजसम्बन्धस्य सुचारुसम्पन्नार्थमियं व्यवस्था कृता समाजमनीषिभिः । भगवद्गीतायामपि कथितं श्रीकृष्णभगवता—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः"

भगवद्गीतायामुक्तानि जातिकर्माणि व्यवसायमेवाधारं कृत्वा निश्चितान्यासन् ।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्म निरतः सिद्धिं यथा विन्दति तच्छृणु ॥

प्रत्येकंव्यवस्था सुचारुरूपेण कार्यं करोति स्म पूर्वं परं कालान्तरे तु सा सुव्यवस्था कालदोषैः परिवर्तिता भूत्वा विनाशगतं अगच्छत् ।

वर्णव्यवस्था मानवशरीरवर्णेष्वाधारितास्ति । वर्णमाध्यमेनमानवानां विभाजनमभूत् । ऋग्वेदोऽपि गौरवर्णार्याणां चित्रणं करोति, अपि च ऋग्वेदे यत्र तत्र श्यामवर्णयुक्तदस्युदास्यादीनामपि वर्णनं दृश्यते । अत एव वयं ज्ञातुं शक्नुमः यत् वर्णविभाजनम् अतीव प्राचीनतमकालस्याविष्कारोऽस्ति । ऋग्वेदस्तु मानवसमाजस्य सकलजगतश्च प्राचीनतमप्रामाण्यग्रन्थोऽस्ति । अस्मिन् च प्रत्यक्षाप्रत्यक्षरूपेण च यत्र तत्र बहुमन्त्रेषु वर्णवर्णनमस्ति, वर्णव्यवस्थायाश्च स्थितिः प्रकटीभवति । भारतवर्षे द्विवारमनेकजना आगतवन्तः पश्चिमोत्तरीयभागेभ्यः एतेषु पूर्वकालिकार्येषु चतुर्विभाजनमस्ति-पुरोहितसुभट-कृषकवलाकाराश्च । एतेन जनाः कालान्तरे ब्राह्मणक्षत्रियवैश्य-शूद्ररूपेण च अभिधीयन्ते । आर्या इव प्राचीनेरानदेशजना अपि चतुर्विधविभाजने विभक्ता आसन् । श्रमिकवर्गाश्चैतस्मिन् काले शूद्रवर्गा इत्यभिधीयन्ते । सिद्धमिदं यत् वर्णविभाजनव्यवस्था भारतवर्षस्यैव पुरातनव्यवस्था नास्ति परं सा व्यवस्था प्राचीनेरानदेशीयजनैः भारतागतैः प्रारब्धा । एषु पुरोहितवर्गाश्चान्तर्जातीयविवाहं नाङ्गीकृतवन्तः । जातिप्रथा चास्मिन् समये प्रधानरूपेण विवाहव्यवसाययोरेव परिसीमिता दृश्यते ।

कालान्तरे यदा ईरानदेशीयजनाः भारतवर्षमागतवन्तस्तदान्तर्जातीयविवाहं स्वीकृतं तैश्च जनैः ।

ऋग्वेदे रूपवर्णभेदेष्ववलम्बितं द्विप्रकारविभाजनं दृश्यते । आर्याश्च, अनार्याश्च इति । आर्येषु पुनश्च त्रिविधा व्यवस्थासीत् । ब्राह्मणा येऽत्र ब्रह्म इति कथ्यन्ते । राजन्या इति क्षत्रिया अभिधीयन्तेऽत्र । वैश्याश्च विश इति नामधेयेन वर्णिताः सन्ति । ये जनाः बुद्ध्या प्रकाशितास्ते विप्रा ये च रक्षणकार्ये निपुणास्ते क्षत्रियाः, ये च धनार्जने कुशलास्ते विशः सन्ति । ऋग्वेदे च पुरुषसूक्तात्पूर्वं कस्मिन्नपि स्थले शूद्रवर्णनं नास्ति । पुरुषसूक्ते तूक्तम्—

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ।।

एवमेव समाजरूपशरीरस्य ब्राह्मणक्षत्रियवैश्यशूद्राश्च अङ्ग प्रत्यङ्गानि सन्ति ।

पूर्वकाले प्रधानरूपेण द्विविधं विभाजनमभूत् । एकस्मिन् च त्रिवर्णाः ब्राह्मण-क्षत्रियवैश्याश्चासन् । अपरस्मिन् च शूद्राः । एतावत्कालपर्यन्तमेकजन्माः बहुजन्माश्च न दृश्यन्ते । शूद्राश्चैतेषां त्रिवर्णानां साहाय्यं कर्तुं निर्वाचिता अभवन् । यद्यपि तेऽत्र अस्पृश्याः नासन् तदापि निम्नस्तरासन् एव । जातिप्रथायाश्च कर्मस्वेव प्रमुखरूपेणा-धारिताभूत् । एवमियं प्रथा क्षुद्रा नासीत् पुरा । अन्तर्जातीयगमनं कठिनं नासीत् । कर्मभिः क्षत्रियाः ब्राह्मणाः भवितुंसुखेन समर्थाः बभूवुः ।

कारूरहम् इत्यादिपद्यैश्च जाति प्रथायाः सुलभशमनगुणाः प्रकटीभवन्ति । महाभारतेऽप्युल्लिखितम्—

"त्रिषु वर्णेषु जातो हि, ब्राह्मणात्ब्राह्मणो भवेत् ।
स्मृताश्च वर्णा चत्वारः, पञ्चमो नाधिगम्यते ।।

अपि चोक्तमिदमपि—

"भार्या चतस्रो विप्रस्य, द्वयोरात्मास्य जायते ।
आनुपूर्व्या द्वयोर्हीनैः, मातृजात्यः प्रसूयतः ।।

एवं वयं पश्यामो यत् जातिप्रथा स्वोच्चस्वरूपात् शनै. शनैः परिभ्रष्टा भवति कालान्तरे अतीव भेदाश्च अभवन् ।

ऋग्वेदानन्तरमियं प्रथा क्रमिकविकासेन कटुतराभवत् । विप्राश्च ब्रह्मणो मुखादुत्पन्ना, इति ज्ञात्वा सर्ववर्णानामुपरि अधिष्ठापिताः । क्षत्रियाश्चैतत् सोढुं नाशक्नुवन् । एतत् सत्यमस्माभिश्च विश्वामित्रवशिष्ठयोः कथाभिः, नहुषराज्ञः कथा-भिश्च ज्ञातुं शक्यते ।

मनुस्मृत्या ज्ञायते यत् ब्राह्मणाः भारतवर्षस्य समस्तविश्वेऽपि प्रसिद्धाः बभूवुः । मनुस्मृत्यामुल्लिखितमस्ति मनुना—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।

एवम् अग्रजन्मा द्विजन्मा विप्रा इति अनेकनामभिः ब्राह्मणा अभिधीयन्ते । मनुस्मृतौ चैतेषां चतुर्णां कर्त्तव्य धर्माश्च स्पष्टमुक्ताः—"अध्यापनमध्ययनं यजनं याजनं तथा, दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्" ।

अपि च तेषां महत्ताविषयेऽपि प्रोक्तम्—

"भूतानां प्राणिनः श्रेष्ठाः, प्राणिनां बुद्धि जीविनः ।
बुद्धिमत्सु नरा श्रेष्ठाः, नरेषु ब्राह्मणाः स्मृताः ।"

अपि च—

"उत्पत्तिरेव विप्रस्य मूर्ति धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्म भूयाय कल्पते ।।"

"ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ।।"

एवं स्मृतिकाले विप्राणाम् अतीवोच्चतमपदमस्ति एवमेव क्षत्रियधर्माश्चापि निर्णीताः सन्ति ।

"प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रसक्तश्च क्षत्रियश्च समासतः ।।"

क्षत्रियाणां नामकरणचूडाकर्मादयः संस्काराः समुचितरूपेण निश्चितकालेष्वेव कर्त्तव्याः । तेषां प्रधान धर्मश्च जनानां रक्षणमस्ति । वैश्यस्यापि धर्मा निर्धारिता एव । यथोक्तंमनुना—

"धर्मेण च द्रव्य वृद्धावातिष्ठेद्यत्नमुत्तमम् ।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ।।"

'मनुस्मृतौ' शूद्राणां पदम् अतीव निम्नस्तरं वर्तते ।

उक्तञ्चात्र—

"एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ।।"

महाभारते रामायणे चाप्यनेकश्लोकेषु जातिव्यवस्था चित्रिता दृश्यते । इयञ्च व्यवस्था स्पृश्यभावना क्षुद्रगर्तेन बाधिता नासीत् परं कालान्तरे इयं व्यवस्था समाज

सभ्यताया. परिवर्तनपूर्णप्रभावैराक्रान्ता: भूत्वा स्व-सुव्यवस्थितादर्शैः वंचिताभूत् । फलतो वयं पश्यामो यत् मध्यमकाले भारतवर्षस्येयम् आदर्श पूर्णव्यवस्था परिच्छिन्ना बभूव । अस्पृश्यभावैश्च परिपीडिता । राजाराममोहनमहोदयैः महाजनै अस्या अस्पृश्यतायाः निवारणाय बहवः प्रयासाः कृताः । परं ब्रिटिशकाले जातिप्रथा अतीव दूषिता या चाद्यापि भारतवासिनोऽतीव क्षुद्र भावैः पीड़यति । अवश्यमेव चेमां दूषितजातिप्रथा-मङ्गीकृत्य बहवः उच्चकोटिजनाः निर्धनजनान् दुःखी कुर्वन्ति । यद्यपि स्वतन्त्रताप्राप्त्यनन्तरं भारतशासनेनानेकानेकसंशोधनपूर्णोपायाः स्वीकृत्य देश कल्याणार्थमतीव महत्कार्यं कृतम् परं ग्रामीणभारतीयजनेष्वद्यापीयं प्रथोग्ररूपेणैव विराजते ।

एवं वयं जानीमो यत् समाजस्य सुव्यवस्थार्थं प्रारब्धा क्रियान्विता चेयं वर्ण-व्यवस्था, कालान्तरे च दोषैराक्रान्ता बभूव फलरूपेण वरदानमिव मन्यमानेयं प्रथाद्यत्वे शापस्वरूपैव न तु कोऽपि संशयोऽस्त्यस्मिन् विषये ।

आश्रमव्यवस्था पूर्व समाजे ब्रह्मचर्य गृहस्थवानप्रस्थ सन्यासरूपेण समाजस्य जन विशेषस्य च जीवनोत्कर्षार्थमेवारब्धा प्राचीनमनीषिभिः । वेदेषु चास्माभि ब्रह्मचर्यस्य साक्षात्प्रतीतिः क्रियते, एवमेव वेदानां व्याख्याकर्तृ ब्राह्मणग्रन्थेषु गृहस्थाश्रमस्य सजीवचित्रणं कृतमस्ति, एवमेव वानप्रस्थाश्रमस्य सर्वाधिकचित्रणमारण्यकेष्वस्ति । अपि चोपनिषत्सु मोक्षमार्गस्य सन्यासाश्रमस्यवा पूर्णचित्रमङ्कितमस्ति ।

वैदिकयुगे मानवाः शतायुष्मन्त आसन् । जीवनस्य शतेषुवर्षेषु, पञ्चविंशति वर्षाणि विद्याया आर्जने ज्ञान प्रकाशस्य प्रापणे च व्यतीतानि भवन्ति स्म । पञ्चाशत वर्षाणि च गृहस्थ कार्येषु व्यतीतानि भवन्ति स्म । पञ्चसप्तति वर्ष पर्यन्तञ्च वान-प्रस्थाश्रमे वसतः जनस्य कालो गच्छति । अवसाने शतवर्षपर्यन्तं सः सन्यासी भूत्वा मोक्षप्राप्त्यर्थमयतत ।

ब्रह्मचर्यस्य प्रशंसानिर्वचनीयास्ति । यथोक्तञ्च —

"यथा प्रासादस्य विनिर्माणे मूलभित्तिरपेक्ष्यते ।
तथा जीवनस्य निर्माणे ब्रह्मचर्यमपेक्ष्यते ।।"

एवञ्च ब्रह्मचर्याश्रमस्य प्रमुख लक्षणं धर्मार्जनमस्ति । धर्मार्थं काममोक्षाश्चैतेषां चतुर्णाम्—आश्रमाणामादर्शाः सन्ति । महाभारतेऽप्युक्तम्—

"धर्मादर्थकामाः सममेव सेव्या, हि एकभक्तः सः नरो जघन्यः,
तयोरस्तु दाक्ष्यं प्रवदन्ति मध्यं सउत्तमोयो अभिरतस्त्रिवर्गे ।।"

एतेषामाश्रमाणामादर्शाः सर्वत्र सर्वेषु काव्येषु दृश्यन्ते । आदिकालात्प्रभृति प्रतिदिनं रच्यमानासु काव्य-कृतिषु चैते दृश्यन्ते । ऋग्वेदेऽप्येतेषां धर्मार्थ काममोक्षाणां यत्र तत्र प्रकीर्णा विचाराः सन्ति ।

कालिदासोऽप्युक्तवान् रघुवंशे—

''त्यागाय संभृतार्थानां सत्याय मितभाषिणां,
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ।
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणां,
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥

एवं ब्रह्मचर्याश्रमस्याश्रमेषु प्रथमं पदमस्ति । एतस्मिन् काले विद्यार्थिनो गुरुकुलेपु वसन्त गुरुसकाशात् ब्रह्मवेदविद्याः शिक्षन्ते । पञ्चविंशतिवर्षानन्तरं ते ब्रह्मचर्यज्योतिषोज्ज्वलाः भूत्वा गृहस्थाश्रमं प्रति गच्छन्ति तेषां पाणिग्रहणसंस्कारश्च भवति । परं ब्रह्मचर्यजीवने चूड़ाकर्मोपनयनादिसंस्काराः गुरुणा क्रियन्ते । अस्मिन्नाश्रमे च ब्रह्मचारिणामादर्शोऽस्ति—

''ब्राह्मे मुहूर्ते बुध्येत् धर्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥''

ब्रह्मचारिणः सदाचारयुक्ताः भूत्वा सत्यं वद, धर्मं चर, इत्यादिशाश्वतादर्शं स्वीकुर्वन्ति । मनुना चोक्तमस्मिन् विषये—

''वेदमेव सदाभ्यसेत्तपस्तप्स्यन्द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥

ब्रह्मचारिणो जितेन्द्रिया अपि भवेयुः—

''श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा सो विज्ञेयो जितेन्द्रियः ॥

ब्रह्मचारिभिश्च मातापितरौ गुरवश्च अतीव श्रद्धया पूजयितव्याः । कथितञ्च मनुना—

''इमं लोकं मातृभक्त्या, पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥''

ब्रह्मचर्यानन्तरं मानवः पञ्चाशतवर्षाणि गृहस्थाश्रमे वसति । गृहस्थेन तेनानेक-नैमित्तकनित्या धर्माश्च क्रियन्ते । एतस्मिन् कालेऽपि गृहस्थेन मातापितरौ गुरुश्च पूजनीयाः । यथा स्पष्टमुक्तं मनुना—

''त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकान्विजयेद् गृही ।
दीप्यमानः स्ववपुषा देववद् दिवि मोदते ॥''

एवमतिथियज्ञाः, पितृयज्ञा, देवयज्ञाः, पञ्चमहायज्ञाश्च गृहस्थैः क्रियन्ते। एतत्कृते तैः धनार्जनमपि क्रियते यतो धनं विना यज्ञो न सम्भवति। गृहस्थैश्च धर्मार्थावादर्शौ ग्रहीतव्यौ। एतेषां स्पष्टमुदाहरणं ब्राह्मणग्रन्थेष्वस्माभिः लभ्यते।

गृहस्थसम्बन्धिकर्माणि कुर्वता गृहस्थेन लिप्तो न भवितव्यः। निर्लिप्तभावनयैव तेन कर्माणि कर्त्तव्यानि।

पुनश्च यदास्माभिः अस्मिन्नाश्रमेऽङ्गीकृता आदर्शाः दृश्यन्ते तर्हि कामस्यादर्शोऽपि लभ्यतेऽत्र। कामस्य तिरस्कारो न पूर्णरूपेण भवति यथोक्तञ्च मनुना—

"यद् यद् हि किञ्चित्तत्तत्कामस्य चेष्टितम्।"

"संकल्पमूलो हि कामः। एषः कामः सम्यग्रूपेणाङ्गीक्रियते गृहस्थैः मनीषिभिः।

वयमधुना वानप्रस्थाश्रमविषये विचारयामः। पञ्चसप्ततिवर्षाणि जीवनस्य परमपुनीतानुष्ठानेषु व्यतीतानि भवन्ति। वानप्रस्थाश्रमे मानवः भगवद्सम्बन्धिकर्मसु तल्लीनो भवति स च चिन्तयति—

"श्रेयश्च प्रेयश्च मनुष्यमेतः, तौ सम्परीत्य विविनक्ति धीरः।
श्रेयो हि धीरो अभिप्रेयसो वृणीते, प्रेयो मन्दो योगक्षेमात् बृणीते॥

(कठोपनिषद्)

सः वानप्रस्थः इहलौकिकपदार्थेषु परतत्त्वं द्रष्टुं ज्ञातुं जिज्ञासुः भवति—स औपनिषदिकतत्त्वं विचारयति पुनः पुनः—

"नृषद् वरसद्तसद् व्योमसदब्जा गोजा,
ऋतजा अद्रिजा ऋतं बृहत्।" (कठोपनिषद्)

वानप्रस्थाश्रमस्य चित्रणमप्रत्यक्षरूपेण आरण्यकग्रन्थेषु दृश्यते।

पञ्चसप्ततिवर्षेषु गतेषु मानवः पूर्णरूपेण मोक्षप्राप्त्यर्थं सन्यासाश्रमे वसति। सन्यासस्तु मोक्षाय भवति। मोक्षस्तु निवृत्तिमार्गोऽस्ति। एतमनुसृत्य मानवो जीवनस्य परमं लक्ष्यमाप्नोति मोक्षश्च सर्वेषामन्याश्रमाणां सारोऽस्ति। सन्यासाश्रमं गत्वा तु मानवः सम्पूर्णमुक्तिमधिगच्छति। उक्तञ्च गीतायामपि—

"अनाश्रितः कर्मफलं कार्यं कर्म करोतियः।
सः सन्यासी च योगी च न निरग्निर्न चाक्रियः॥"

एवं वयं जानीमो भारतवर्षस्यैकताभावस्याधाररूपेण वर्णाश्रमव्यवस्था प्रादुर्बभूव। परं कालान्तरे परिवर्तनैश्च सा दूषिताभूत्, समाजस्य नित्योत्थाप्यमानैः परिवर्तन-

पूर्णविचारैश्च सा विशीर्णा विदीर्णा जीर्णा चाभूत् । परमद्यत्वेऽपि चेदस्माभिः देशस्य पुनरुत्कर्षार्थं पुरातनपुनीतादर्शव्यवस्थैषा स्वीक्रियते तर्हि ध्रुवमेव भारतवर्षस्य[illegible]-संस्कृतिः पुनः नूतनस्वरूपमधिगम्य भूतलस्य सम्पूर्णदेशान् तत्त्वं शिक्षयितुं समर्था भविष्यति । मानवमात्रस्यादर्शाणाञ्च सा शिक्षिका भविष्यति । भारतवर्षस्यैक्यविषये सत्यमिदमुक्तं कविना—

"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैवदक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥"

एवमस्माकं वर्णाश्रमव्यवस्थायाः मूलमन्त्रमेवेदमस्ति—

"सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग्भवेद् ॥

परिष्कृता वर्णाश्रमव्यवस्थास्माभिः श्रद्धया स्वीकरणीया यतोऽस्यां व्यवस्थायामेवास्माकं परमं कल्याणं निहितमस्ति ।

# मम्मटीय काव्यलक्षण रक्षणम्

आनन्द झा, लखनऊ

प्रथितं काव्य महत्त्वं प्रथितानिच काव्यलक्षणानि सुबहूनि ।
मम्मट-लक्षण-रक्षण-पुण्यप्राप्ति-प्रयासवान् भवन्नस्मि ।।

किं नाम लक्षणमुचितं काव्यस्येति जिज्ञासायामुक्तं महता ननु काव्यालोचकेन मम्मटेन काव्यलक्षणमिदम्—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति । तत्रादोषौ सगुणौ क्वापि पुनरनलंकृती शब्दार्थौ तत् इत्यन्वय । तदन्तर्गतस्यादोषावित्यस्य दुःश्रवत्वादिभिः काव्यदोषैः रहितावित्यर्थः । सगुणावित्यस्य च ओज प्रसादमाधुर्यैः काव्य गुणैस्सहितावित्यर्थः । अनलंकृतीत्यस्यतु अस्फुटालकृतीत्यर्थः । तथाचानलंकृती पुनः क्वापीत्यस्यास्फुटालंकारावपीत्यर्थः । एतेन शब्दार्थयोः काव्यतायै तयोस्सालंकारतावश्यकी । स्फुटत्वमलंकारे तत्र भवतु मा वा भवत्वित्यभिप्रेतोऽर्थः । एवं च दुःश्रवत्वादिभिः काव्य दोषैस्सर्वथा रहितौ ओजः प्रसादमाधुर्याख्यानां काव्यगुणानामन्यतमेन सहितौ, अनुप्रास यमकादीनां शाब्दानां उपमादीनां चार्थानां काव्यालङ्काराणामन्यतमेन युक्तौ शब्दार्थौ काव्यमिति "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीत्यस्य काव्यप्रकाशीयस्य मम्मटीय काव्यलक्षणवाक्यस्य प्राप्यते सरलोऽर्थः । तथा च रसास्वादापकर्षकत्वधर्मानवच्छिन्न तादृशरसास्वादापकर्षकत्वावच्छिन्न-स्वरूप सम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वावच्छि न स्वरूप सम्बन्धावच्छिन्न निरूपकता निरूपिताधिकरणता निरूपित-स्वरूप सम्बन्धावच्छिन्न वृत्तितावदोजः प्रसाद माधुर्यान्यतमत्वावच्छिन्न स्वरूप सम्बन्धावच्छिन्न निरूपकता निरूपिताधिकरणता निरूपित स्वरूप सम्बन्धावच्छिन्नवृत्तितावदनुप्रासादिशाब्दोपमाद्यार्थान्यतमालङ्कारत्वा वच्छिन्न स्वरूपसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरण तावच्छब्दार्थोभयत्वं काव्यत्वमिति प्रोक्त मम्मटीय वाक्यानुसारि काव्यलक्षणं सम्पद्यते ।

यद्यपि मम्मट परवर्तिभ्यां महद्भ्यां संस्कृत साहित्यालोचकाभ्यां कविराज विश्वनाथ पण्डितराजजगन्नाथाभ्यांस्वकीययो स्साहित्यदर्पण-रसगंगाधरयोः काव्यलक्षणस्यास्योपरि विहितोऽस्ति महान् प्रहारः स्वस्वबुद्धिवैभव विचार प्रौढ्योः प्रदर्श-

नार्थम् । तथापि लक्षणमिदं काव्यस्य काव्यप्रकाशीयं वैज्ञानिकतया हि स्वगतया प्रमहति झञ्झावातेष्यप्रकम्पमाना रत्नदीपशिखेव विद्योततेतरां सुमनोमन्दिरेषु विदुषां सचेतसां कालाय तावदनन्ताय निरन्तराय । काव्यलक्षणस्यास्य काव्य प्रकाशीयस्य कथं नाम वैज्ञानिकता तादृशीति जिज्ञासाचेच्छ्रूयताम् —

यद्धि अदोषावित्यनेन काव्यप्रकाशीय काव्यलक्षणगतेन शब्दार्थविशेषणतया विवक्षितस्यादोषत्वस्य खण्डनाय महदूहापोह पूर्वकमुक्तमिदं साहित्यदर्पणे विश्वनाथेन "प्रविरल विषयं निर्विषयं वा स्यादिति" तत्र प्रविरलविषतात्विष्टैव सर्वथा काव्य प्रमहत्त्वमाकलयताम् । यतो हि प्रमहत्त्वशीलं किमपि प्रविरलमेव भवति नाविरलम् । यतोह्यन्यथा प्रमहत्त्वमेव स्यात्तस्य विलुप्तम् । दोषाणां दोषत्वरक्षणाय निर्विषयताया आपत्तिस्तु दातुमेव न शक्यते । यतो हि शब्दार्थयोरदोषत्वविशेषण दाने निर्विषयता काव्ये तदैव भवितु मर्हति यदा काव्यत्वे दोषा बिना भावो मन्येत । परन्तु तदा काव्य-दोषाणां दोषतैवावलुप्येत । तथाविधाविनाभावबलेन यतस्तथासति दोषत्वेना-भिमतानां स्यात्काव्यताप्रयोजकत्वापातः । न कदाचिदपि भवितु मर्हन्ति काव्यत्व प्रयोजका काव्यदोषतया शक्या व्यपदेष्टुम् ।

यच्च कीटदष्टरत्न दृष्टान्तमाश्रित्य दुष्टेष्वपि काव्यत्वव्यवस्थापनं तदपि सकलालंकारिकपद्धतिविरुद्धमेव । यतो हि काव्य-काव्याभासयोः पार्थक्यानाकलने रसरसाभासः भावभावाभासादि-भेदसिद्धान्तोऽपि भज्येत सर्वथा निखिलालंकारिका-भिमतस्तुल्यया युक्त्या । दुष्टं काव्यमितिप्रतीतिव्यवहारौतु काव्याभासविषयकौ वस्तुतः ।

यत्पुनश्शौर्यादीनामात्मधर्मत्वमिव ओजः प्रसादमाधुर्याणां गुणानामपि रसैक धर्मत्वस्य युक्तिसिद्धतया सगुणाविति विशेणपदेन काव्यप्रकाशीयकाव्यलक्षणगतेन विवक्षितस्य सगुणत्वस्य शब्दार्थयोरनुपपत्त्या काव्यप्रकाशीय काव्यलक्षणासम्भवोद्भावनं तदपि वस्तुतो वस्तुस्थित्यनवबोध निबन्धनत्वादकिञ्चित्करमेव । नहि प्रकृतलक्षणोक्ते शब्दार्थावित्यत्रार्थपदं केवलवाच्यार्थपरमिति प्रकृत काव्यलक्षणपक्षपातिना केनाप्युक्तं न वा शासनाज्ञा काचित्तथा विधा । तथा च तददोषौ शब्दार्थावित्यत्रार्थ पदेन वाच्यार्थ प्रतीयमानार्थयोरुभयोरसंकोचेन ग्रहणात् रसस्यापिच प्रतीयमानार्थतया सगुणौ शब्दार्था विति प्रकृतलक्षण वाक्य घटकाभ्यां पदाभ्यामपि काव्यगुणानामोजः प्रसादमाधुर्या-दीनां रसधर्मत्व-प्राप्त्या प्रोक्तासम्भवोद्भावनस्य निराधारत्वात् ।

यदपिच "अनलंकृती पुनः क्वापीत्यस्यालंकारास्फुटत्वेऽपि काव्यत्वस्थापकस्य खण्डनाय "यः कौमारहरः स एवहिवरः" इत्यादि काव्यप्रकाशोदाहरणे विभावनादेर-लंकारस्य स्फुटत्व प्रतिपादनं तदप्यभिप्रायानवबोधनिबन्धनमेव । तत्रास्फुटत्वकथन-स्यावाच्यत्वाभिप्रायकत्वात् । नहि 'कमलमिव मुखं मनोज्ञमेतत्" इत्यादेरुप-मादिवाचकत्वमिव "यः कौमार हर इत्यादि पद्ये पदस्य कस्यचनास्ति विभावनादि वाचकत्वं येन स्फुटत्वमापादयितुं शक्येत विभावनादौ ।

यदथ "काव्यमुच्चैः पठ्यते" "काव्यं शृणोमि," "काव्यं श्रुतमर्थो न ज्ञातः" इत्यादि प्रतीति व्यहारानुसारं न भवितुमर्हत्यर्थस्य काव्यतेति प्रतिपादनं तदपि "रमणीयार्थ प्रतिपादकः शब्दः काव्यमिति स्वाभिमते काव्यलक्षणेऽर्थ एव रमणीयत्व विशेषणदानेन, वाक्यं रसात्मकं काव्यमिति काव्यलक्षणस्थलेच "वाक्यं स्याद्योग्यताकांक्षासत्तियुक्तः पदोच्चय" इति वाक्य लक्षणेऽर्थसम्बन्धबाधाभाव रूपाया योग्यताया निवेशेन च काव्य घटकतया स्वस्वविहितादर्थादरात् सर्वथा विरुद्धतया सर्वथैवामनोरमम् । लक्षणयोस्तयोः रसगंगाधरीय साहित्यदर्पणीययोरर्थस्य विशेषणतया प्रवेशो न विशेष्यतयेति न प्राधान्यं तावदर्थस्य किन्तु शब्दस्यैव, प्रोक्ते काव्यप्रकाशीये च काव्यलक्षणे शब्दार्थयोरुभयोः विशेष्यतया प्रवेश इति कथनमपि न युज्यते । उभयत्वस्यापि फलतः एकविशिष्टा-परत्व रूपत्वात्, विशेष्य विशेषण भावस्य च विवक्षाधीनत्वात् । अन्यथा "भग्नावरण चिद्विशिष्टो रत्यादिः, रत्याद्यवच्छिन्ना भग्नावरणा चिदेव वा रसः इति, एकस्यैव च "रमणीयार्थं प्रतिपादकः शब्दः काव्यमिति" काव्यलक्षणस्य "चमत्कार जनक भावना विषयार्थ प्रतिपादक शब्दत्वम् यदर्थं विषयक भावनात्वं चमत्कार जनकतावच्छेदकं भवेत्तत्वं, स्वविशिष्टार्थं प्रतिपादकता संसर्गेण चमत्कारत्ववत्वमेव वा काव्यत्वमिति त्रिधा काव्य लक्षणस्वरूप प्रतिपादनं च रसगंगाधरीयमसंगतिमीयात्सर्वथा । मम्मटेनापि शब्दार्थयोरुभयोः काव्यत्वं प्रतिपादयता सर्वत्र काव्यस्थले प्रकृतयोश्शब्दार्थयोः विनिगमनाविरहात्परस्परं विशेष्य विशेषण भावः स्वीकृत एवेत्युक्त प्रायम् । काव्यं शृणोमि, काव्यमुच्चैः पठ्यते, काव्यं श्रुतमर्थो न ज्ञातः इत्यादौ काव्य पदं काव्यांश शब्द मात्र मादाय प्रयुज्यत इतिनासंगतिः । वेदपुराणादि प्रतीति व्यवहारादिस्थले-पीयमेवगतिराश्रयणीयेति तत्र तत्रापि शब्दार्थयोरुभयोरेव वेदत्वपुराणत्वादिकं मन्तव्यम् ।

एतेन काव्यत्वं शब्दार्थयोर्व्यासक्तं प्रत्येक पर्यवसितं वा ? आद्ये एकोनद्वावि-तिवत् श्लोक वाक्यं न काव्यमिति प्रतीत्ति व्यवहारयोरापत्तिः द्वितीये चैकस्य काव्यस्य काव्यद्वयतापत्तिरित्यादि कथनमपि परास्तं वेदितव्यम् । उभयत्वस्यैकविशिष्टापरत्व रूपता पक्षे प्रोक्तस्य विकल्पस्यैव निरवकाशत्वात् । उभयत्वस्य स्वतन्त्र संख्या विशेषत्व पक्षेपिच पर्याप्ति सम्बन्धेनैव द्वित्वत्रित्वादीनां व्यासज्यवृत्तित्वं न समवाय-सम्बन्धेन । समवाय सम्बन्धेनतु प्रत्येक निष्ठतापि द्वित्वादीनाम् । अतएवैकोद्वित्ववा-निति समवाय सम्बन्धावच्छिन्न द्वित्वत्वावच्छिन्न निरुपकतानिरुपितैकत्वावच्छिन्न विशेष्यतामवगाहमाना एकोद्वित्ववानिति यथार्था प्रतीति स्तदनुरूपश्च व्यवहारोपीष्यत एवेत्यस्य तर्कसिद्धतया शब्दात्मके श्लोक वाक्ये समवाय सम्बन्धेनोभयत्वात्मकस्य काव्यत्वस्याक्षुण्णतया समवाय सम्बन्धावच्छिन्न तादृश काव्यत्वावच्छिन्न प्रतियोगिता-काभावस्यापादयितु मशक्यत्वात् । एकोनद्वाविति प्रतीतेस्तु पर्याप्ति सम्बन्धावच्छिन्न द्वित्वत्वावच्छिन्न प्रतियोगिता काभावविषयकत्वेन दृष्टान्तासिद्धेः ।

वस्तुतस्त्वेतदधिकमत्रानुसन्धेयं यत् "वाक्यं रसात्मकं काव्यमिति साहित्य-दर्पणीयस्य काव्यलक्षणस्याकाव्यभूते लौकिकगेयवाक्येऽतिव्याप्तिः रागरसमादाय

रसात्मकत्वस्य वाक्यत्वस्य च तत्र सत्वात् । काव्यरागरसयोरभेदस्य गान्धर्वं सिद्धत्वात् । रमणीयार्थ प्रतिपादकः शब्दः काव्यमिति रसगंगाधरीये काव्यलक्षणेऽतिव्याप्त्याद्यभावेऽपि रमणीयत्वस्यार्थ मात्रेनिवेशात् यमकानुप्रासादि प्रयुक्त शब्दरमणीयत्वासंग्रह प्रयुक्ता न्यूनता दुर्वारैव । न च तथा काव्य प्रकाशीये काव्य लक्षण इत्यलमिदानीमधिकेन ।

तन्मम्मटीयलक्षण मेवहि काव्यस्य सर्वथा युक्तम् ।

अत्रहि विहितं खण्डन खण्डनमालोच्यतां विशेषज्ञैः ॥

# वेदान्तो विश्व विचारश्च

**श्री दशरथ शर्मा**

संसारेऽस्मिन् मानवः सुखेच्छया विविधेषु कार्यक्षेत्रेषु प्रगतिं प्रति अग्रेसरो भवति परं ययाकयाचित् सुखानुभूत्या सह दुःखमेवानुभवति यत्र परमं दुःखन्तु अवश्यमापततो मृत्योरेव। वैज्ञानिकयुगेऽस्मिन् मानव जीवनस्य सर्वेषु क्षेत्रेषु सिद्धौ प्राप्तायां सत्यां प्राप्नुवत्यां वा मृत्योः भयस्यैव महद्दुःखस्यापहरणे भौतिक विज्ञानं असमर्थं दृश्यते। अतीतकालादारभ्य एव दर्शनशास्त्र-ज्ञातृभिः महाविचारकमनीषिभिः सुखदु खादिद्वन्द्वेभ्यः मुक्तिहेत्वर्थं सफलाः प्रयत्नाः कृताः। यज्जन्ममृत्यु-सुखदुःखादिद्वन्द्वेभ्यः मुक्तिरेव जीवस्य परमं लक्ष्यं तदेव दर्शनशास्त्रस्याप्यस्ति। सुकरात-प्लेटोऽरस्तू बैकन-डेकार्ड विलियमजेम्स-जान डुईत्यादीनां पश्चिम-दार्शनिकानां विचाराः यद्यपि परमोक्त-लक्ष्यप्राप्तौ साधनानीव परं चैन भारतीयादिपूर्वीयदार्शनिकैरपि प्राचीनकालादेव सुमार्गाः प्रशस्तीकृताः। भारतीयचार्वाकजैन-बौद्ध-न्याय-वैशेषिकमीमांसा-सांख्य-योगादिदर्शनेषु वेदान्तदर्शनं तेषां परिष्कृततथ्यानां मीमांसां प्रस्तौति।

वेदान्तो नाम उपनिषद् प्रामाणिकं शास्त्रं वेदानां चरमसिद्धान्त-निदर्शनं वा वेदस्य शीर्षभागानां ब्राह्मणारण्यकोपनिषदां सूक्ष्मतत्वानां दिग्दर्शनाद् हेतोरेव वेदान्त इति कथ्यते। पौराणिकवेदव्यासैः एव महर्षिवादरायणैः रचिते ब्रह्मसूत्रे वेदान्तसूत्रे वा आदर्शवादिविचाराणां संक्षेपेण स्थापनं वेदान्तदर्शनस्य वर्णनमिति, यत्र ५६० ब्रह्मसूत्राणि चतुर्षु अध्यायेषु प्रत्यध्यायं च चतुष्पादेषु विभक्तानि सन्ति। प्रथमे समन्वय इति नामाध्याये उपनिषदां भिन्नानां परस्परविरोधिनां वा वाक्यानां सुसंगतव्याख्यया जगतानेन मानवजीवनेन च ब्रह्मसम्बन्धं निरूपयितुं प्रयत्नः कृतः, द्वितीये तु प्रथमाध्याये प्रस्तुतव्याख्यां परम्परागतानामृषीणां शिक्षायाः पूर्णतस्तदनुरूपं साधयितुं प्रयत्नः कृतः। तृतीयाध्याये ब्रह्मप्राप्तेः उपायनं नाम ब्रह्मविद्यायाः निरूपणमेव। चतुर्थाध्याये आत्मनोऽमरत्वस्य ब्रह्मप्राप्तेः लाभानां च विशदवर्णनमस्ति। डा० राधाकृष्णन्-महोदयानां मतानुसारेण प्रारंभिकगद्योपनिषत्सु आत्मा वैयक्तिक-चेतनायाः तत्वं, ब्रह्मचास्य ब्रह्माण्डस्यातिवैयक्तिकाधारमस्ति। यथाशीघ्रं द्वयोः भेदे लुप्ते समेकिते क्रियेते। ईश्वरोऽनुभवातीतः दैवीतत्वादन्य एव न अपितु ईदृक् ब्रह्माण्डी-

यात्मापि अस्ति यन्मानवव्यक्तित्वस्याधारः निरंतरं नवबलप्रदायिनी शक्तिश्चापि। ब्रह्माण्डस्य प्रथमतत्त्वंब्रह्म मानवान्तरात्मरूपात्मना ज्ञायते ।

आत्मैव स्वयं परमात्मा । इदं ब्रह्माण्डं तस्मादेव ब्रह्मणः प्रभवति । अतः ब्रह्मैव ब्रह्माण्डस्य भौतिकं सूक्ष्मं च कारणं कथ्यते । वादरायणानुसारेण सृष्टिः सृष्टिकर्ता द्वावप्येकः । ब्रह्मैव प्रकृतिः । स्वसम्बन्धितक्रियया तेन स्वरूपं परिवर्त्यते ब्रह्माण्डञ्च क्रियते । भौतिकतत्वेषु तस्यैव रूपान्तरणमस्ति । सर्वजीवेषु एक एवेश्वरः सर्वव्यापि-रूपेण सर्वान्तःकरणेषु निवसति, यः सर्वेषां कर्मणां नियन्ता, सर्वरक्षिता, सर्वद्रष्टा, चेतनः, अद्वैतः, निर्गणश्चास्ति । परं यदि ब्रह्मैव प्रकृतिः ब्रह्माण्डस्य मूलकारणं वा यदि च वाह्यजगत्परमात्मा एक एव तदानेन "अस्माज्जातः परो द्वितीयचेतनो नास्ति" इत्यर्थोऽपि भवति । इत्थं वादरायणस्य वेदान्तोऽस्य जगतः याथार्थ्यं स्वीकरोति, मिथ्यात्वं माया वेति सिद्धान्तप्रतिपादकानां परवेदान्तिनां सदृशं पूर्णतः तन्न निबोधयति । "इदं वैचित्र्ययुक्त जगन्मायामात्रमेव, जाग्रद्व्यक्तिः आत्मानः परितः यत्किञ्चित् पश्यति तत्तस्य भ्रममात्रमेव, प्रतिसंवेदनशीलवस्तु अवास्तविकमेव, सर्वमपि एक दृश्य-भ्रममात्रमेव चेति वेदान्तस्य मूलसिद्धान्तो न प्रतीयते" इति कोलब्रूक नाम दार्शनिकः ।

उपनिषत्सु आदर्शवादि-भौतिकवादिसम्बन्धिन्योऽनेकाः धारणाः सन्ति याः परस्परं विरोधिन्यः सन्ति । वादरायणाः एतान् अन्तर्विरोधान् शमयितुं न प्रयतते परमुपनिषत्सु यत्र तत्र कथितादर्शवादिप्रवृत्तिभिः सुसम्बद्धदर्शनस्य निर्माणं करोति स्म । एलबर्ट स्वाइतजरेणोक्तम्—" वादरायणस्य ब्रह्मसूत्रं ब्राह्मणवादिपाण्डित्यस्य आरम्भविन्दुमात्रमासीत् । पाण्डित्यस्यास्य पल्लवितेन पुष्पितेन च शंकर-रामानुज-माधवाचार्यादीनां प्रसिद्धदार्शनिकानां सिद्धान्ताः प्रतन्यन्ते । मोनियर विलियम्सेनोक्तम्-शंकराचार्यकृत-मायावादस्य यः सिद्धान्तः भारतीयदार्शनिकेषु अतिलोकप्रियोऽस्ति स उपनिषद्भिः समर्थितो नास्ति एव यतः तद्बौद्धधर्माद् गृहीत एव ।" वस्तुतः वादराय-णस्य वेदान्तस्तु जगतोऽस्य याथार्थ्यं समर्थयति । बाह्यवस्तूनि अस्तित्वमयानि यतः लोकाः प्रतिक्षणं तेषामस्तित्वमनुभवन्ति, नेत्रैः तानि पश्यन्ति । वयं कथमिदं स्वीकुमः यद् अपवित्रं जगद् आध्यात्मिकशुद्धतत्त्वस्याभिव्यक्तिः भवति । अतः इदं बाह्यजगद्, व्यक्तीनां पृथक् जीवात्मनः तेषां व्यक्तिक ईश्वरश्च एतानि सर्वाणि तादृक् सत्यता कृतानि सन्ति यामेव शंकराचार्यादयः वेदान्तिनः अन्यसमाधानोत्तमस्याभावे अविद्येति कथयन्ति ।

भास्कराचार्यानुसारेण जगतोऽस्तित्वं मायाहेतुत्वान्नास्ति अपितु इदं ब्रह्मणो वास्तविकमेकं रूपान्तरणमेव यद् ब्रह्माण्डस्य केवलं भौतिकमुपकरणात्मकं न कारणम् । रामानुजकृतविशिष्टाद्वैतानुसारेण ब्रह्म जीवात्मानः जगच्च सर्वाणि यथार्थानि परस्परं भिन्नानि च । जीवात्मनां पार्थिव जगतश्च ब्रह्मैवात्मास्ति । इत्थं ब्रह्मभिन्नत्वेपि चिदचितौ तस्मात् स्वतन्त्रौ न स्तः । तौ तेन पोषितौ नियन्त्रितौ

च तस्य अभिन्नांङ्गाविव स्तः । द्वैताद्वैतवादिनिम्बार्कमतानुसारेण ब्रह्म चिदचिच्च त्रयः सिद्धान्ताः । ते सांख्यरीत्या प्रकृतेः ब्रह्माण्डस्योद्भवं तस्याः त्रिगुणानां फलं मन्यन्ते परं प्रकृतिः ब्रह्मपरतन्त्रैव, न च स्वतन्त्रास्ति । चिदेव मानवात्मनः सारतत्वमभौतिकं शरीरादभिन्नं चास्ति । ब्रह्मैव सर्वोच्चयाथार्थ्यं सगुणम् आनन्ददातृ सौन्दर्य-दयादिगुणैः युक्तं च । तदेव जगतो निमित्तं भौतिकं च कारणमस्ति । शुद्धाद्वैतवादिवल्लभाचार्यानुसारेण आत्मपदार्थश्च ब्रह्मणो वास्तविकाभिव्यक्तिः । ब्रह्म सच्चिदानन्दरूप-त्रिगुणात्मक सार-तत्वानि प्रकटीकरोति परमीश्वरे विकारो न भवति । अग्नेः स्फुलिंङ्गानीव ब्रह्मणः इदं ब्रह्माण्डं प्रभवति । जगद् ब्रह्मणो वास्तविकी अभिव्यक्तिः परं जन्ममृत्योः चक्रम् अज्ञानहेतुत्वात्, अज्ञानस्यदूरीभवने संसारोऽपि तिरोहितोभवति ब्रह्मणो वास्तविकाभिव्यक्तिरूपेण केवलं जगतोऽस्तित्वं तिष्ठति ।

रामानुजस्य विशिष्टाद्वैतवादः, माध्वस्यद्वैतवादः, निम्बार्कस्य द्वैताद्वैतवादः वल्लभाचार्यस्य शुद्धाद्वैतवादश्चेति विविधाः वेदान्त-प्रणाल्यः ब्रह्मैव जगतोऽस्य चरमकारणं मन्यन्ते । परं सर्वा एताः आदर्शवादिन्यः प्रणाल्यः शंकराचार्येण प्रतिपादिताया दर्शनशास्त्रस्य आदर्शवादिन्यः प्रणाल्यः ताभ्यः मूलतः भिन्नाः सन्ति । सर्वासामेतासामुदयो ब्रह्मैव यथार्थमामानितस्य शांकराद्वैतवेदान्तस्य विरोधेनैवाभवत् । यत्र शांकराद्वैतवेदान्ते मनोवादी-आदर्शवादः विद्यते तत्र सर्वासु अन्यासु प्रणालिषु वस्तुवादी-आदर्शवाद एव दृश्यते । बादरायणकृत ब्रह्मसूत्रेषु कुत्रापि प्रकृतेः मानवस्य च याथार्थ्यस्य अस्तित्वसम्बन्धे शंका नैव कृतासीत् ।

भारतवर्षे इस्लामधर्मप्रसारेण सहैव सूफीमतस्य प्रसारोऽपि वेगेनैवाभवत् । यस्य अत्तारसादी-जलालुद्दीन-रूमी-हाफिजादयः दार्शनिकाः भारतीया द्वैतवेदा तस्यात्यन्तं निकटं वर्तन्ते । तत् प्रागेव बौद्धधर्म हिन्दूविचारयोः सुपरिचितमासीत् । अत्र मुस्लिमादर्शवादेन तस्य बहवः योगाभ्यासाः स्वीकृताः । तस्योपनिषदाम् आदर्शवादिवेदान्तस्य प्रभावे विकासोऽभवत् । जीवात्मनः ईश्वरमेलनस्य फनेति सिद्धान्तस्य सूफीशिक्षासु सुमहत्स्थानमासीत् । निकोलसानुसारेण नैतिकैकावस्थारूपेण फनापरिभाषा सर्वाविगेच्छानां निश्चयः "फना" इत्यस्य सर्वेश्वरवादिपक्षः वेदान्तादिपद्धत्यनुसारेणैव । सूफीमतावलम्बिनो वेदान्तिनश्चेत्यद्वैतवादयोः शाब्दिकभेद एव नान्यथा । सरसैयद-अहमदानुसारेण "कुरान" इतीश्वरस्यवाणी प्रकृत्यनुरूपा च यस्य स्रष्टा परमात्मास्ति । समस्ता सृष्टिः यस्यां मानवोऽपि विद्यते ईश्वरेणैव कृता धर्मश्च ईश्वरवाण्येव अतः द्वयोरपि कोऽपि अन्तर्विरोधो न विद्यते ।

अद्वैतदर्शनसमर्थको लोकमान्यतिलको वस्तुगतयाथार्थ्यं स्वीकुर्वन् जगद्भ्रमरूपेण नामन्यत । तदनुसारेण एकैवामरनिर्गुणात्मतत्वं शरीरब्रह्माण्डयोः द्वयोरपि पूर्णतः शाश्वतरूपेण च व्याप्तमस्ति । स वेदान्तदर्शनस्य मानुषेषु निराशाजनकभावानां विस्तारिकानां सर्वव्याख्यानां विरोधकर्त्तानासीत् । सोऽकथयत्-वेदान्तः जीवनात् पलायित्वा अन्तर्दर्शनस्य शरणाय सक्रियजीवनात् पृथक्करणाय मार्गंन दर्शयति अपितु मानव

जीवनस्य सुदृढ़क्रियाशीलतां प्रत्यग्रेसारयति भगवद्गीतायाः सर्वशिक्षानां सारतत्वं कर्मयोग एव व्यावहारिको वेदान्तः ।

वेदान्तस्य एकोऽन्यः प्रतिपादकः चक्रवर्ती-राजगोपालाचार्यः स्वीकरोति यत्-मानवः ईश्वरेच्छां तस्य योजनां वा तत्स्वभावमपि वा ज्ञातुं नासमर्थोऽस्ति । यदि वयं तं न स्वीकुर्मः तदा सभ्यतामपि न स्वीकरिष्यामहे यत. इयं भौतिकप्रगतौ न, अपितु आध्यात्मिकप्रयासे आत्मनियन्त्रणे निःस्वार्थसहयोगे चाधारितास्ति परं तानि सर्वाणि परमसत्तायाः आस्थायां निर्भराणि सन्ति । "मानवस्याचरण जीवने सद्व्यवहारस्य शश्वन्नियमान् मा उल्लंघेयेयुः" इति परमात्मन्यास्थायाः अर्थः । निजसम्पत्तेः पवित्र-तायाः स्वीकरणं सद्व्यवहारस्य प्रमुखतत्वमेकमस्ति ।

यूनानीदार्शनिक-पामेनाइडिसानुसारेण दृष्टं जगत् सद्भावयोः अंशं बिना असद्भासमात्रं माया मात्रं च । सच्च भूतवर्तमानभविष्यद्भेदरहितं नित्यमविभाज्यं वा यतः तदन्यो नास्ति कोऽपि पदार्थः यस्तं विभक्तुं शक्नुयात् । सत् परिवर्तनरहित-मस्ति, परिवर्तनं तु असतो लक्षणम् । भासमानं दृष्टं जगद् इन्द्रियाणां विषयमेव । यः परमात्मेति कथ्यते स प्लेटोदार्शनिकानुसारेण सर्वश्रेष्ठः सर्वरचयिता भद्रस्य प्रत्यय एव । तन्मते गणितप्रमाणितसत्येभ्योऽपि उच्चस्तरं तत्वज्ञानमेव यस्मिन् सत्साक्षाद् दृश्यते । तत्त्वज्ञानमेव वस्तुतः ज्ञानं भवितुं योग्यम् । तस्य मूलप्रकृतिः सांख्योक्तेन अव्यक्तेन समा । यथा मानवशरीरे जीवात्मास्ति तथा खिल जगति विश्वात्मा क्रिया-मुक्तः । जगदपि मानव इव जीवति । अरस्तू दार्शनिकानुसारेण जगति प्रतिपदार्थं गतिप्रदाता तत्त्वरूपेण वर्तमानोऽपि दृष्टजगतो बहिरेका सत्ता वर्तते यत्र प्रकृतिलेशोऽपि नास्ति । प्रथमगतिजन्मदाता परमात्मा सर्वस्य कारणं परं कस्याप्यन्यस्य कारणस्य कार्यं नास्ति । स जीवात्मानम् आकृतिरूपेणापश्यत् या प्राकृतसामग्रया मनुष्यशरीररूपं यच्छति । यदेदं संघटनं छिद्यते तदा जीवात्मनः स्वतन्त्रा सत्ताऽपि नावशिष्यते ।

ईसाईमतानुसारेण परमात्मा आदर्शशरीरे श्वासमस्फूर्जयत् तच्च श्वसनं जीवात्मैव । इटली निवासी टामस-एक्विनसानुसारं जीवात्मा निराकारोऽमरश्चास्ति । मानवजीवने शरीरमुक्तमेकं द्रव्यं जीवः परं निराकारत्वेन शरीरात् पृथग् अपि भवितुं शक्नोति । ईश्वरस्य साक्षाद्दर्शनमेवान्तिमं लक्ष्यम् । तथ्यज्ञानम् ईश्वरप्रसादफलमेव । (१) परिवर्तनम् अन्तिमपरिवर्तनकारणं प्रति लक्ष्यं करोति, (२) अनित्यास्थिरयोः मूलं नित्या स्थिरा च सत्ता भवति, (३) श्रेष्ठाश्रेष्ठयोः भेदः श्रेष्ठतमस्यास्तित्वस्य स्वीकरणे सत्येव सार्थकः प्रतीयते, (४) जगत्प्रवाहे नियमसहकारिते दृश्येते ते नियमस्य नियामकं परिलक्षयन्ति चेति तेनोक्तपंच हेतुनां सारांशो येनेश्वरसत्तास्वीकरणे संकेतः क्रियते ।

पुर्तगाली-स्पिनोजा मतेन यत्किंचिद्भवति तत्सर्वं प्राकृतिकनियमाधीनमेव । अतः मानवः प्रकृतेराह्वानं पूरयेत् । आत्मरक्षैव परमोधर्मः । मानवः परस्परमित्येवं

वर्तेत यत्तेषां मनांस्येकमेव तेषां शरीराणि चैकमेव । यो मानवः सर्वप्राणिनः आत्मनि आत्मानं च सर्वप्राणिषु पश्यति स कस्मैचिद् घृणां न करोति ।

आयरलैंडवासीवर्कले दार्शनिकोऽद्वैतवादसमर्थकः आसीत् । लांकः यच्चिन्तनमात्मनः प्रक्रियामकथयत् तदेव वर्कले आत्मनस्तत्वमवदच्च । दृश्यपदार्थानांतत्त्वं ज्ञायते परम् आत्मतत्त्वं ज्ञाता भवत्येव । तदनुसारेण (१) वाह्यपदार्थस्थितिज्ञानं स्पर्शेण भवति तद्दृष्टिविषयोनास्ति, (२) अस्माकं ज्ञानं विशेषपदार्थज्ञानमेव सामान्यस्थितिस्तु नाममात्रमेव, (३) अखिलसत्ता चेतनात्मनः तद्बोधानां चास्ति ।

जर्मनी-जार्जविलयम-फ्रेडिक हेगल-मतानुसारेण "नोशन" मूलतत्वं वा प्रथमप्रकाशने जगत् (प्रकृति) रूपं ग्रह्णाति । इदं जगद् नियमानुसारेण चलति परं तदेतस्य स्थितिबोधो न भवति । प्रकृतौ बुद्धिः सुषुप्तावस्थायामेव भवति, मानवमनोरूपे व्यक्तं (जागरितं वा) तृतीयान्तिमावस्थायां "नोशने" ति निरपेक्षतत्त्वं प्रत्ययरूपं धारयति। वस्तुतः "निरपेक्षः" प्रारम्भेणैव भवति । सः विकासावस्थायाः अन्तेऽपि स्वविशुद्धरूपं प्राप्नोति । निरपेक्षात्मनि पूर्णबोधो वर्तते । भावेऽभावो विद्यते । प्रथममव्यक्तं भवति पश्चाच्च व्यक्तं भवति । पुनः तयोः मेलनेन पदार्थानामस्तित्वं जायते ।

हर्बर्ट-स्पेन्सरानुसारेण प्रकृतेः जीवनं जीवने च चेतनोद्भवति । यत्किञ्चित् प्रथममव्यक्तं तदनु व्यक्तं भवति, विविधता प्रकटीभवति, कथञ्चिच्च न्यूनता नागच्छति । हेनरी-वर्गसांनुसारेण नूतनतैव विकासस्यमौलिकम् चिन्हम् । मूलसत्ता च स्वविस्तरणे वृक्षैकस्य तिस्रः शाखा इव प्रकृति-जीवन-चेतनरूपेषु व्यवतं भवति। प्रकृति-जीवन-चेतनेषु वय चेतनं निकटतमं पश्यामः ।

अमरीकीदार्शनिक-डुई-मतानुसारेण दर्शनशास्त्रं परलोकचिन्तनं विहाय इहलोकं प्रति समग्ररूपेण ध्यायेत् । लोकसम्बन्धेऽपि वर्तमानस्य विशेषमहत्वमस्ति । दूरातिदूरे स्थितादर्शेभ्यः ध्यानं हित्वा परिवर्तितस्थितेः परिष्कारायैव दार्शनिक-विवेचनस्य कार्यम् ।

मार्क्सवादिदर्शनं भौतिकवादित्वेऽवलम्बितं येनानुसारेण गतिशीलपदार्थमेव ब्रह्माण्डस्य मूलभूतसंघटकमस्ति । परं परमयाथार्थ्यसम्बन्धेऽनीश्वरवादिनी अवधारणा अनिवार्यतः आध्यात्मिकमूल्यानि नाम मानवव्यक्तित्वस्य पवित्रतायाः अस्वीकरणमिति नास्ति । वस्तुतः मार्क्सवादे समाजवादिकार्य-क्रमः मानवतायाः वास्तविकावश्यकताभिः आधुनिकतकनीकीसाधनैश्च उत्पादनानुभरणाय अत्युपयुक्तः । अतः समाजवादस्थापनस्याह्वानं नैतिकांगमेकमेव ।

इहलोके मानव जीवने टेक्नालाजी-विज्ञानयोः महत्वमस्ति परं ते नवसभ्यतायाः आधारे भवितुं नार्हतः । एकं सुदृढमूलं नो स्थापयतः । अतः विज्ञानेन सम्भाव्यस्य विनाशस्य दूरीकरणाय आध्यात्मिकतायाः अन्वेषणमावश्यकम् । विज्ञानस्य विकासोऽपि

तेषां बुद्धिप्रकाश एव येषु ज्ञानकौशलं मूल्यबोधश्चास्ति। मानवः परमाणुं विभाजयितु-मर्हति तेनैव स ब्रह्माण्डस्य ईश्वरो न भवति अपितु परमाणुभंजनेन तदन्तः परमाणुतः किमपि ज्यायोवर्तते। भौतिकोपलब्धिभिः "मानव-चेतना किं किमपि प्राप्तुं शक्यते" इति तथ्यमिदं सिध्यति। तदतिरिक्तं चैता उपलब्धयः मानवस्य मानसिकनैतिक दृढानुशासनस्य पक्षपातहीनायाः सत्यनिष्ठायाः समर्पणभावनायाः रचनात्मककल्पना-शीलतायाश्च सुपरिणामाः सन्ति। सर्वप्राणिषु पदार्थेषु च मनोवाक्कायानां सर्ववृत्तिभिः ब्रह्मभावस्य प्राप्तिकरणेन शुद्धान्तःकरणपुरुषः आकाशमिव अन्तर्वहिः परिपूर्णमावरण-शून्यं ब्रह्मैव सर्वप्राणिषु आत्मनि च पश्यति। शीतातपे सुखदुःखे जन्ममृत्यू लाभालाभा इत्यादि द्वन्द्वानि समेकृत्वा सहिष्णुता-स्वभावसौम्यतेन्द्रियसंयमादिभिः आध्यात्मिक-मानवः समाहितः भवति परमानन्दं चलभते। यत्र विज्ञानं प्रकृतेः तथ्यानामन्वेषणं कृत्वा तेन मानव जीवने सरलतां क्षणिकसुखभावना चोपस्थापयति तेषां विनाशस्य सम्भावनामपि च तत्राध्यात्म एव प्रकृतौ परमात्मनः सत्ता स्वीकृत्य त्यागवैराग्ययोः भावंप्रदाय मानवजीवने साम्यवादस्य प्रेरणां दत्वा जागत्कर्मक्षेत्रे प्रकृतेरधिकाधिकोप-योगिता विश्वबन्धुत्वभावेन परमानन्दप्राप्तिप्रति प्रेरयति। भारतदेशः धर्मनिरपेक्ष-प्रजातन्त्रीयराज्यस्थापनं साम्यवादिसमाजवादं प्रति चाग्रेसरन् अन्यायस्य विरोधितया शरणागतवत्सलताभावेन अभूतपूर्वकाले संसारेऽस्मिन् यदुदाहरणं प्रास्तौत् तदध्यात्मा-श्रितविज्ञानेनैव। अध्यात्मरहितविज्ञानं तु मानवविनाशाय एवभविष्यति।

अतः स्मरणीयम्—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।<br>
सर्वे भद्राणि पश्यन्तु, न कश्चिद् दुःखमाप्नुयात्॥

# संस्कृतं त्रयी विद्या च

श्री रामस्वरूप गांधी

## मङ्गलाचरण

शब्दात्मिका सुविमलर्ग, यजुषां निधानम्
उद्गीथरम्य पद पाठ, वतां च साम्नाम् ।
देवीत्रयी भगवती; भवभावनाय
वार्ता च सर्व जगतां; परमार्ति हन्त्री ।। १ ।।

समस्त सम्पत सुविराज माना, समस्त तेजश्चय भास माना ।
विष्णु प्रिये त्वंभवदीपमाना, वाग्देवता मेनयने प्रसन्ना ।। २ ।।

अशेष वाग्जाडचमलाप हन्त्री, नवं नवस्पष्ट सुवाक् प्रदायिनी ।
ममेह जिह्वाग्र सुरङ्ग नर्त्तकी, भव प्रसन्ना वदने च मे श्री: ।। ३ ।।

सहस्र शीर्षा सुमनाः सहस्र पात्, सहस्र चक्षुर्वदनः सहस्रकृत् ।
सहस्रबाहु प्रथम प्रजापतिस्, त्रयीमयोऽयं पुरुषो निरुच्यते ।। ४ ।।

आदित्यवर्णभुवनानि गोप्ता, एकोह्यमूर्त्त प्रथमस्त्वसो विराट् ।
हिरण्यगर्भः पुरुषो महात्मा, सम्पद्यतेवै मनसः पुरस्तात् ।। ५ ।।

कल्पादौ रजसोद्रिक्तो, ब्रह्मा भूत्वाऽसृजत्प्रजा ।
कल्पान्ते तमसोद्रिक्त, कालोभूत्वा ग्रसत्पुनः ।। ६ ।।

स वै नारायणो भूत्वा, सत्त्वोद्रिक्तो जलाशये ।
त्रिधा विभज्य चात्मानं, त्रैलोक्ये सम्प्रवर्तते ।। ७ ।।

**अधिकार परीक्षणम्** (Educate Selected Only)

विद्या हवै ब्राह्मणमाजगाम, गोपाय मा शेवधिष्टेहमस्मि ।
असूयकायानृजवेऽयताय, न मा ब्रूया वीर्यवतीतथा स्याम् ॥ १ ॥

य आतृणात्यवितथेन कर्ण, ऽवदुःखं कुर्यन्नमृतं संभवच्छन् ।
तं मन्येत पितरं मातरंच, तस्मै न द्रुह्येत् कतमच्च नाह ॥ २ ॥

अध्यापिता ये गुरुं नाद्रियंते, विप्रा वाचा मनसा कर्मणा वा ।
यथैवते न गुरोर्भोजनीयाः, तथैव तान्नभुनक्ति श्रुतं तत् ॥ ३ ॥

यमेव विद्याः शुचिमप्रमत्तँ, मेधाविन ब्रह्मचर्योपपन्नम् ।
यस्तेन द्रुह्येत्कतमच्चनाह, तस्मै मा ब्रूयानिधिपाय ब्रह्मन् ॥ ४ ॥

तस्योपदेशत पुण्यं-पापां वाकुरुते जनः ।
नतद्भागी भवेन्मर्त्य, इतिशास्त्रेषु निर्णयः ॥ ५ ॥

विद्या विवादायधनम्मदाय, शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतद्, ज्ञानायदानाय च रक्षणाय ॥ ६ ॥

त्रयीविद्या (Terio)

(शतपथब्राह्मण १४, ८, १५)

**भूमिरन्तरिक्षं द्यौरिति ।** अष्टावक्षराण्यष्टाक्षरँ ह्वाएकांगायत्र्यैवपदमेतदुहा-स्तथाएतत्सपादेषुलोकेषुतावद्ध जपति षोडस्या एतदेवम्पदं वेद ॥ १ ॥

**ऋचो यजूँषि सामानीति ।** अष्टावक्षराण्यष्टाक्षरँह्वा एकाङ्गायत्र्यै पदमेतदुहैवास्याएतत्स यावतीयं "त्रयी विद्या" तावदुह जपतियोऽस्याएतदेवम्पदं वेद ॥ २ ॥

**प्राणोऽपानोव्यान इति ।** अष्टावक्षराण्यष्टाक्षरँहवाएकङ् गायत्र्यै पदमेतदु हैवास्याएतत्स यावतीयं "त्रयी विद्या तावदुह जपति योऽस्याएतदेवम्पदं वेद ॥ ३ ॥

**सय इमां स्त्रीँल्लोकान् ।** पूर्णान् प्रतिगृह्णीयात् सोऽस्याऽएतत् प्रथममाप्नु-यादथ यावतीयं "त्रयीविद्या" यस्तावत्प्रतिगृह्णीयात्...... ॥ ५ ॥

स्मृतिः (मनु० १.२४)

अग्निर्वायु रविभ्यस्तु, त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञ सिद्ध्यर्थं, ऋग्यजुस्साम लक्षणम् ॥ १ ॥

पुराण (मार्कण्डेय १०१-१०२-१०३ अध्यायाः)

(मार्कण्डेय उवाच क्रोष्टाय)

विस्पष्टा परमा विद्या, ज्योतिर्भा शश्वती स्फुटा ।
कैवल्यं ज्ञानमाविर्भूः, प्राकाम्यं संविदेव च ।। १८ ।।
निष्प्रभेऽस्मिन् निरालोके, सर्वतस्तमसा वृते ।
बृहदण्डमभूदेकं, अक्षरं कारणं परम् ।। २१ ।।
तद्विभेद तदन्तःस्थो, भगवान् प्रपितामहः ।
पद्मयोनिः स्वयंब्रह्मा, यो स्रष्टा जगतां प्रभुः ।। २२ ।।
तन्मुखाद् "ओऽम्" इतिमहान्, अभूच्छब्दो महामुने ।
ततोभूस्तु भुवस्तस्मात्, ततश्च स्वरनन्तरम् ।। २३ ।।
एताव्याहृतयस्तिस्रः स्वरूपं तद् विवस्वतः ।
"ओम्" इत्यतस्तस्मात्स्वरूपात्, "सूक्ष्मरूपं खेः परम् ।। २४ ।।
ततो महर् इति स्थूलं, जनः स्थूलतरं ततः ।
ततस्तपस्ततः सत्यं, इति मूर्तानि सप्तधाः ।। २५ ।।
आद्यन्तं यत्परं सूक्ष्मं, "अरूपं" परमं स्थितम् ।
"ओमित्युक्तं मया विप्र !, तत्परं ब्रह्मतद्वपुः ।। २७ ।।

(अध्याय १०२)

तस्मादण्डाद्विभिन्नात्तु, ब्रह्मणोऽव्यक्त जन्मनः ।
ऋचो बभूवुः प्रथमं, पथमाद्वदनान्मुने ।। १ ।।
जपा पुष्प निभाः सद्यस्, तेजो रूपा ह्यसंहता ।
पृथग् पृथग् विभिन्नाश्च, रजोरूप वहास्ततः ।। २ ।।
यजूंषि दक्षिणाद् वक्त्राद्, अनिच्छदानि काञ्चनम् ।
यादृग्वर्णा तथा वर्णान्, य संहति धराणि च ।। ३ ।।
पश्चिमं यद्विभोर्वक्त्रं, ब्रह्मणःपरमेष्ठिनः ।
आविर्भूतानि सामानि, ततप छन्दांसि तान्यथा ।। ४ ।।
ऋचोरजो गुणः सत्यं, यजुषां च गुणा मुने ।
तमो गुणानि सामानि, तमःसत्वमथर्वसु ।। ५ ।।[1]

---

१ प्रसंगवशादथर्व कथिता त्रयी विद्याऽतिरिक्तः ।

यथा यजुर्मयस्तेजस्, तद्वत्साम्नां महामुने ।
एकत्वमुपयातानि, पदं तेजसि संश्रये ।। १० ।।

ऋगादिषु लयं ब्रह्मन्, त्रितयं त्रिष्वथा गमन् ।
शांतिकं पौष्टिकं चैव, तथा चैवाभिचारिकम् ।। ११ ।।

ततस्तन्मण्डली भूतं, छन्दसं तेज उत्तमम् ।
परेण तेजसा ब्रह्मन्, एकत्वमुपयातितम् ।। १३ ।।

[1]आदित्यं संज्ञामगमद्, आदावेवद्यतो भवेत् ।
विश्वस्यास्य महाभाग ! कारणं चास्य यदात्मकम् ।। १४ ।।

प्रातर्मध्यन्दिने चैव, तथा चैवापराह्णके ।
त्रयी तपति सा काले, ऋग् यजुस्साम संज्ञिता ।। १५ ।।

ऋचस्तपन्ति पूर्वाह्णे, मध्याह्ने च यजूंषि वै ।
सामानि चापराह्णे वै, तपन्ति मुनि सत्तम ।। १८ ।।

विसृष्टौ ऋङ्मयो ब्रह्मा, स्थितौ विष्णुर्यजुर्मयः ।
रुद्र साममयोऽन्तेच, तस्मात्तस्याशुचिर्ध्वनिः ।। १९ ।।[2]

सर्ग स्थित्यन्त हेतुश्च, रजः सत्वादिकान् गुणान् ।
आश्रित्य ब्रह्म विष्णु रुद्रान्, संज्ञामम्येति शाश्वतः ।। २१ ।।

(अध्याय १०३)

यऋङ्मयो यो यजुषान्निधान, साम्नाश्रयो योनिरचिन्त्य शक्तिः ।
त्रयीमय स्थूल तयार्धमात्रा, परं स्वरूपोऽणुतया त्रयोग्न्यः ।। ६ ।।[3]

तं सर्वहेतुं परमेड्य वेद्यं, आदौ परं ज्योतिर वाच रूपम् ।
स्थूलं च देवात्म तथा नमस्ये, भास्वन्त माद्ये परमे परेभ्यः ।। ७ ।।

---

१. आदित्यः (Solar globe) सौर गोलः, आदिमः नतुव्यक्तित्वमैकमपि द्वादशादित्यान्मध्ये, ये वसन्ति सौर मण्डले तु पृथग् राशिगतानां ।

२. अशुचिः (Non solar) नोपस्थिते सौर शक्ते प्रवर्ते यस्मिन् काले सौर अग्नि (Solar energy) त्यक्त्वा तयेतरे, पावकः पवमानोवा, यथा कर्म विचारेन गृह्णीयात् न तु शुद्धयशुद्धि विवेकात् ।

३. त्रयोऽग्नयः (Three Energies) १. पावकः २. पवमान ३. शुचिः ।

४. अहङ्कारः (Strong psychic power and burning desire) but not pride.

सृष्टिं करोमि यदहं तव शक्तिराद्या,
तत्प्रेरितो जलमही, पावनाग्नि रूपाम् ।
तद्देवतादि विषयान् परमाद्येषा,
नात्येच्छया स्थितिलयावपितद्वदेव ।। ८ ।।

## Aum the Essence of the Esoterism Theory of Production

### त्रयी विद्या सारः ओङ्कारः उत्पत्ति सिद्धान्तः

कार्यं यत्त्वत्र विभाव्यते किमपितत्, स्पन्देन स व्यापकम्,
स्पन्दश्चापि तथाजगत्सुविदितः, शब्दान्वयी सर्वदा ।
सृष्टिश्चापि तथादिमाकृति विशेषत्वादभूत्स्पन्दिनी,
शब्दश्चोद्भवत्तदा प्रणव इति, ओङ्कार रूपः शिवः ।। १ ।।

साम्यस्य प्रकृतेर्यथैवविदितः, शब्दो महानोमिति,
ब्रह्मादि त्रितयात्मकस्य परमं, रूपं शिवं ब्रह्मणः ।
वैषम्यो प्रकृतेस्तथैव वहुधा शब्दाः श्रुताः कालतः,
ते मन्त्राः समुपासनार्थमभवन्, बीजानि नाम्ना तथा ।। २ ।।

### उच्चारणं मूर्तिरूपञ्च (Pronunciation and figure)

तदा समभवत् तत्र, नादोवै शब्द लक्षणः ।
ओमोमिति सुर श्रेष्ठः, सुव्यवतः प्लुत लक्षणः ।। ३ ।।
लिङ्गस्य दक्षिणे भागे, तथाऽपश्यत् सनातन ।
आद्यो वर्णं अकारं तु, उकारं चोत्तरे ततः ।। ४ ।।
मकारं मध्यतश्चैव, नादान्तं तस्य चोमिति ।
सूर्यं मण्डलवद् दृष्ट्वा, वर्णमाद्यं तु दक्षिणे ।। ५ ।।
उत्तरे पावक प्रख्यम्, उकारं पुरुषर्षभः ।
शीतांशु मण्डल प्रख्यं, अकारं मध्यमं तथा ।। ६ ।।
तस्योपरि तथा तदाऽपश्यन्, शुद्ध स्फटिक वत् प्रभुम् ।
ओङ्कारं प्रभवं मन्त्रं, कला पञ्चक संयुतम् ।। ७ ।।
प्रणवं सर्व मन्त्राणां, श्रेष्ठः सेतुनिभः स्मृतः ।
मन्त्र शक्तिरनेनैव, शब्द ब्रह्मात्मकं च सा ।। ८ ।।

## उद्गीथ रूपी शब्द रसायनम्
## (Word Udgeeta as a Chemical)
### (छान्दोग्योपनिषद् १ १.१)

ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्यु्द्गायत् तस्योप व्याख्यानम् ॥ १ ॥

एषां भूतानां पृथिवी रस, पृथिव्यामापो रसोऽपामोषधयो रस, ओषधीनां पुरुषो रस, पुरुषस्य वाग् रसो, वाचां ऋग्रसः, ऋचः साम रसः, साम्न उद्गीथो रसः ॥ २ ॥

स एषः रसानां रस तमः परमः पराध्यर्यो यद् एतद् उद्गीथः ॥ ३ ॥

कतमा कतमर्क्‌कतमा साम कतमः कतम उद्गीथ इति विमृष्ट भवति ॥ ४ ॥

वागेवर्क् प्राणः साम, येएतदक्षरमुद्गीथस्तद्वा एतन् मिथुनं यदर्क् च प्राणञ्चर्क च साम च ॥ ५ ॥

तदेतस्मिन् मिथुनमोम् इत्येतस्मिन्नक्षरे संसृज्यते परा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्माकामम् ॥ ६ ॥

आपयिता हवै कामानां भवति, स एतदेवं विद्वान् अक्षरम् उद्गीथम् उपासते ॥ ७ ॥

तद्वा एतदमृताक्षरं यद्धि किञ्चानुजानाति "ओम्" इत्येव तदाहैषा एव समृद्धिर्यदनुज्ञा समृद्धयिताह वै कामानां भवति य एतदेवं विद्वान् अक्षरमुद्गीथ-मुपासते ॥ ८ ॥

तेनेयं त्रयी विद्या, वर्तते "ओम्" इत्याश्रावयति ओम् इति शंसत्योमिति उद्गायत्येतस्यैवाक्षरस्यापिचित्यै महिमा रसेन ॥ ९ ॥

## सत्य तथा वाग्विद्युत् प्रसवन यन्त्रम् शरीरम्
## Truth and Vocal Electricity Generator Bodily Machine
### (Mechanico-Physical Aspects of Truth and Sound)

(यजुर्वेद ४-१८ । वत्सः । वाग्विद्युत् । स्वराडार्षी बृहती । मध्यमः)

तस्यास्ते सत्य स वसः प्रसवे [1]तन्वो यन्त्रमशीय स्वाहा ।
शुक्रमसि चन्द्रमसि [2]अमृतमसि वैश्वदेवमसि ॥ १८ ॥

---

१. Radio- activity=वैष्णवीशक्तिः, सत्य नारायणी And Truth.

२. Shukra and saum are meant for the male and female respectively.

As a fact your body, is a Radio-Station.
For the welfare of, the universal creation. (a)
Through vocal electricity, and Truth generating.
Through this your machine in state of awakening. (b)
Being this your machine, you are power generator
Light Amrita generator, saum Shukra creator (c)
Universal energies, are in your structure
Having this machine, you are all things owner (d)
Conserving the body, remember Truth activity
Which will save you, when ever necessity (e)
Every part of the machine, is useful for life
Neglecting its parts, death comes have strife (f) 18

यन्त्र का प्रत्यक्ष रूपक, विश्व का पालक पवन ।
यह देह वास्तव में तुम्हारा, शब्द सञ्चालक भवन ।। (क)
शुक्र यह और चन्द्र यह है, अमृत है और वैश्व देव ।
सब का ही कल्याण कारक, रहता है आवश्य मेव ।। (ख)
जागते जीते जी इस की, शब्द शक्ति कर प्रयोग ।
सत्य के संस्कार से, व्यवहार में हो न वियोग ।। (ग) ।। १८ ।।
शक्ति सविता और प्रकाशक, रचता अमृत को यही ।
विश्व की है पूरी शक्ति, आपके देह में कही ।। (घ)
इसलिए इस देह रूपी, यन्त्र को सर्वस्व जान ।
इसके द्वारा शक्तियों के आप अभिमानी महान् ।। (ङ)
इस की रक्षा के लिए, लो वैष्णवी शक्ति को प्रेर ।
फैल कर सारी दिशाओं, से तुम्हें लेगी वह घेर ।। (च)
मन्त्र की शक्ति बुला, लेती है इस शक्ति को भी ।
यह है सब से पूर्व की भी, शक्ति की प्रतिमा कही ।। (छ)
इस देह रूपी यन्त्र की, सब शक्तियों का ज्ञान कर ।
संसार भर की शक्तियों का, मन के द्वारा ध्यान कर ।। (ज)

काम लेना इस से जब, कभी आप को आजाएगा ।
तब आपको इस अपने तन का, सारथि कहना भाएगा ।। (झ)

इस मन्त्र पर तुम यन्त्र की, रक्षा करोगे हो जो ध्यान ।
इसके पुर्जे पुर्जे की, रक्षा में समझो अपना मान ।। (ञ)

सब शक्तियां तनु यन्त्र की, जीवन में ही काम आएंगी ।
जब बिगाड़ा तुमने इनको, मृत्युसंज्ञा लाएंगी ।। (ट) ।। (२८)

Refilling the energies of Bodily Machine Through esoterism

(त्रयी विद्या द्वारा शारीर यन्त्रे पुनः आवश्यक शक्ति संभरणम्)

(यजुर्वेद ४.१५ । आङ्गिरसः । अग्निः । भुरिग् ब्राह्मी बृहती । मध्यमः)

पुनर्मनः पुनरायुर्म आगन्, पुनः प्राणः पुनरात्मा म आगन् ।
पुनश्चक्षुः पुनः श्रोत्रम्म आगन्, वैश्वानरोऽदब्धस्तनूपा ।।
अग्निर्नः पातु दुरितादवद्यात् ।। १५ ।।

Our mind and life, may return us again
Pranas and Soul, may revert to the brain. (a)

Energy to observe, and to listen as such
We see and listen, better more much (b)

Solar energy may, give bodily heat.
May save from sins without defeat. (c)

To control over, the organs of senses
The sins are occurred, on their expenses (d). 15.

लौट आए मुड़के फिर से मन हमारा आयुफिर ।
प्राण फिर आए तथा, लौट आएं चक्षु फिर ।। (क)

श्रोत्र भी आजाएं मुड़कर वैश्वानराग्नि दुख तमाएं ।
करतनूपा अग्नि रक्षा, सब कुकर्मों से बचाएं ।। (ख) १५ ।।

सत्य शक्तिः (Truth-Energy)[1]

(ऋग्वेद १०.६७.११ । अङ्गिरसः बृहस्पतिः । त्रिष्टुप् । धैवतः)

सत्यामाशिष कृणुता वयोधै, कीरिं चिद्ध्यवथ स्वेभिरेवैः ।
पश्चामृधो अयभवन्तु विश्वास, तद्रोदसी शृणुतं विश्वमिन्वे ।। ११ ।।

---

१. Gravity of (Newton) आकर्षणो हि विख्यातः, सूर्यसिद्धान्त ज्योतिषे ।
न्यूटन ज्योतिर्विद्दत्तं, ग्रैविटी संज्ञको हि सः ।। १ ।।

Truthful be the benediction for age.
With mental and physical, health a sage. (a)
Which is heartily given, by poets in praising.
In presence of fire, at the time of blazing. (b)
Beyond of thought, in a plentious supply.
Of all the wants, from heavens fly. (c)
After putting in motion all wants in space.
God sends his consent, as mark of grace (d). 11.

सत्य हों आशिष गुरू की, मन तन के स्वास्थ्य आयु की ।
हृत्पूर्त्त प्रार्थित को उन्होंने, अग्नि की साक्षी में दी ।। (क)
पीछे स्वर्गाकाश से, आती चलीं समृद्धियां ।
हों सद्गुरु की स्वीकृति से, प्राप्त सारी सिद्धियां ।। (ख) ११ ।।

सत्यञ्च ऋतम् (Truth and Right)

(ऋग्वेद १०.८५.१ । सूर्या । सत्यादयः । अनुष्टुप् । गान्धारः)

सत्येनोत्तभिता भूमि, सूर्येणोत्तभिता द्यौः ।
ऋतेनादित्यास्तिष्ठन्ति, दिविसोमोअधिश्रितः ।। १ ।।

Truth energy, has her hold on Earth globe.
As the sun, on the solar probe (a)
Adityas stay, on the right and gravity.
Saum depends, on the solar paucity (b) 1.

सत्य ने आकाश में, रोका हुआ है भूमिगोल ।
ऋत ने स्तम्भित है किया, कक्षा वृत पर सूर्य पोल (क)
कक्ष के राशि सीमा पर, आदित्य हैं ठहरे हुए ।
सत्य के आधार पर हैं, सोम के प्रहरी हुए (ख) ।। १ ।।

Austerity the Generator of Right and Truth (ऋत सत्योत्पादक तपः)

(ऋग्वेद १०.१९०.१ । मधुच्छन्दस् अघमर्षणः । भावभृथः ।
विराडनुष्टुप् । गांधारः)

ऋतं च सत्यं चाभिद्धात्, तपसोऽध्यजायत ।
ततो रात्र्यजायत, ततः समुद्रो अर्णवः ।। १ ।।

Right and truth, a pair of energy.

Have produced, by the austerity. (a)

Again the night, became in existence.

And again the ocean, in an accordance. (b) 1.

ऋत और सत्य शक्ति का जोड़ा, तपसे हुआ उत्पन्न तथा ।

उससे हुई उत्पन्न रात्रि, उससे समुद्र अर्णव हुआ ।।

ऋतस्य रश्मि (Ray of Right)

(ऋग्वेद १.१२३ । दीर्घतमसः पुरूकक्षीवान् । उषा । विराट्त्रिष्टुप् । धैवतः)

ऋतस्य रश्मिमनुयच्छमाना, भद्रम्भद्रं क्रतुमस्यासु धेहि ।

इषो नो अद्य सुहवा व्युच्छ, अस्मासु रायो मघवत्सु चस्युः ।। १३ ।।

Respectable, the Ray of Right.

May give us auspicious, the yajnic plight. (a)

Today the usha, may give in Havis.

Bestower of INDRA'S, wealth may be. (b). 3.

जो ऋत की रश्मि, है पूज्यमाना हमें कृपा कर, केदे वह शक्ति ।

तथा उषा दे हमें आज हवि में इन्द्र के द्रव्यर्थ, इन्द्र भक्ति ।। १३ ।।

वाग्विद्युद् (Vocal Electricity)

शब्द विज्ञानम् (Sound physics)

शब्द तथा छन्द लहरि सञ्चालनम् आकाशे गति रक्षकाश्च

Emission of Sound and Chanting : waves and the Guards of their velocity

(यजुर्वेद ५.११ । गोतमः । वाक् । निचृत् त्रिष्टुम् । धैवतः)

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु, प्रचेतास्त्वा रुद्रैः पश्चात्पातु ।

मनोजवास्त्वा पितृभिर्दक्षिणतः पातु, विश्वकर्मा त्वादित्यैरुत्तरतः पातु ।।

इदमहंतप्त वार्षहिधा, यज्ञान्निसृजामि ।। ११ ।।

O' Voice I exit you in the running force.

Withhold its beyond, the Yajnas Source. (a)

Vasus may guard you, through Indraghosh by east.
Rudras through pracheta, by the direction west (b)

Manojava may guard you, though pitras in South side.
protect by north through vishvedevas and Adityas
provide (c)

Iradiate around, from yajnic laboratory.
Bring heated o' voice, the vapour voluntarily. (d) 11.

हे वाग् वाणी जग की राणी, शीघ्र धर्मोद्वाहका ।
यज्ञ के इस द्वार से, करता विसर्जन आप का ।। (क)

करें इन्द्र के ही घोष द्वारा, पूर्व से रक्षा वसु ।
रुद्र पश्चिम से करें, रक्षा प्रचेता द्वार तु ।। (ख)

मनोजवा पितरों के द्वारा, रक्षा दक्षिण से करे ।
आदित्य विश्व कर्मा द्वारा, जलोत्तरी दिग् से भरें ।। (ग) ।। ११ ।।

(क) छन्द शक्ति देवा: (Divine Energies of Chanting)
Observations and Researches by the Sages

(ऋग्वेद १०.१३०.४, ५ । यज: । भावभृथ: । त्रिष्टुप् । धैवत:)

अग्नेर्गायत्री अभवत्स युग्वा, उष्णिहया सविता संबभूव ।
बृहस्पते बृहती वाचमावत्, अनुष्टुभा सोम उक्था सहस्वान् ।। ४ ।।

विराण्मित्रा वरुणयोरभिश्रीर्, इन्द्रस्य त्रिष्टुप् इहभागो अह्नः ।
विश्वान्देवान् जगत्याविवेश, तन चाक्लृप्त ऋषयो मनुष्या ।। ५ ।।

Agni hide himself, in the Gayatri metre.
Savita hidden also, in the Ushnig metre. (a)

Saum also entered, in the metre Anushtup.
Lord Brihaspati, in the Brihati metre group (b)

Indra entered, in the metre of Trishtup.
Vishwedevas were surround, by Jagati chandas.

Mitra and Varuna entered in Virat group.
Aum high command in Uktha observed sages. (c)

छन्द गायत्री में आकर, अग्नि की शक्ति छुपी ।
छन्द उष्णिक् ने छुपाई, शक्ति है सविता की ।। (क)
छन्द अनुष्टुप् में छुपी, आकर के शक्ति सोम की ।
उक्थ छन्द ने महान्, सूर्य को थी शरण दी ।। (ख)
तथा बृहती छन्द में, आछुपे यो बृहस्पती ।
विराट् छन्द में मिली आ, मित्रा वरुणौ की सखी ।। (ग)
त्रिष्टुप् छन्द में छुप बैठी, इन्द्रशक्ति वाजसी ।
अन्तः जगती छन्द के, आई शक्ति विश्वेदेवको ।। (घ)
छुप बैठने का दृश्य यह देखा ऋषि मुनियों ने था ।
मानवों के हित को भूमि, पर मनुष्यों ने कहा ।। (ङ) ४, ५ ।।

(छान्दोग्योपनिषद् १.४.३.२-५) देवा वैमृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् ते छन्दोभिराच्छादयन् । यदेभिराच्छादयन् च्छन्दसां तच्छन्दस्त्वम् ।। २ ।।

तानुत तत्र मृत्युर्यथामत्स्यमुदके परिपश्येदेवं पर्यपश्यद् ऋचि साम्नि यजुषि तेन विन्दोर्ध्वा ऋच साम्नो यजुषः साम्नेवं प्रविश्य ।। ३ ।।

यद्वा ऋच साम्नो प्रोत्योमित्यैवातिस्वरत्येषँ सामेवं यजुरेव स्वरो वदेतद् । अक्षरमेतद् ऋतमयं तद् प्रविश्य देवा अमृता प्रमया अभवन् ।। ४ ।।

स एतदेवं विद्वानक्षरं प्रणोत्येतदेवाक्षरँ स्वरममृतमभयं प्रविशति तत् प्रविश्य यदमृता देवास्तदमृतो भवति ।। ५ ।।

Psycho-Medico

## (A) PSYCHOLOGY

(Science of Mind)

### मनोविज्ञानम्

Mind the Generator of Esoterism

**त्रयी विद्योत्पादकः मनः**

(यजुर्वेद ३४.५. १ । शिव सङ्कल्पः । मनः । त्रिष्टुप् । धैवत )

यस्मिन्नृचः साम यजूँषि यस्मिन्, प्रतिष्ठितारथ नाभाविवारा ।
यस्मिश्चितँ, सर्वमोतं प्रजानां, तन्मेमनः शिव सङ्कल्पमस्तु ।। ५ ।।

यज्जाग्रतो दूरमुदैति दैवं, तदु सुप्तस्य तथैवैति ।
दूरं गमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिव सङ्कल्पमस्तु ।। १ ।।

( ५ )

My Mind that has Rig, yajus sama generator.
Like hub and awl, in car's wheels connector. (a)
Which has similarly, linked with all wings.
May be well wisher my, mind to all beings (b)

जो ऋग् और यजुर् साम, के मन्त्रों द्वारा ।
प्रतिष्ठित है जैसे, कि रथ नाभि में अरा ।। (क)
हो सुख सारथी चित्त, में सबको पिरोए ।
वह मन मेरा हो शिव-सङ्कल्प धारा ।। (ख) ।। ५ ।।

( १ )

Light bestower, in awakening leads far.
Which is the same in, sleeping state like star. (a)
For a reach light higher, among stars like fall.
That my mind may be, peaceful for all (b). 1.

जो मन दिव्य मेरा मेरे जागते और,
सोते में भी है, चला दूर जाता ।
प्रकाशित करे ज्योतियों की वह ज्योति,
बने वह मेरा शुभ सङ्कल्पदाता ।। १ ।।

## Inherent Psychic Power
## and
## Control Over Sensories

(यजुर्वेद २९. ४३ । भारद्वाजः । वीराः । जगती । निषादः)

रथे तिष्ठन् नयति वाजिनः पुरा, यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत, मनः पश्चादनु यच्छन्ति रश्मयः ।। ४३ ।।

Human body is a craft or car.
Which is driven by horse like senses. (a)
But driver is Mind, has control over.
To use them for, ease with expenses. (b)

He does not depend, upon the wish of horses.
But horses follow, the psychic forces. (c)
Hence Mind has an inherent power.
And control over, the senses rays shower. (d) 43.

पांच घोड़े इन्द्रियां हैं, गाड़ी है मानव शरीर ।
सारथी बन मन चलाता, है उसे कहें उच्च वीर ।। (क)
मन का ही वश है तनु पर, रहता है सुख साध्य यां ।
नष्ट हो जाएगा तन, यदि हों स्वतन्त्र ये इन्द्रियां ।। (ख)
बस मन की शक्ति से जो चाहो, सुख का साधन कीजिए ।
मन की शक्ति तीव्र कर, हर कार्य उससे लीजिए ।। (ग) ।। ४३ ।।

Mental Inspiration
Influenced by the Divine Aid of Brihaspati
With a call upon Vishwedevas
(But not openly declared)

(यजुर्वेद २.१३ । परमेष्ठी प्रजापति । बृहस्पतिः । विराड् जगती । निषादः)

मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं ।
यज्ञँसमिमेदधातु विश्वदेवास इहमादयन्ताम् ओ३म् प्रतिष्ठा ।। १३ ।।

Brihaspati may spread over thisyajna rite.
My mind must be, inspiread by aid on site. (a)
But that inspiration, not only declared.
When ghritas havi, through Agni be offered. (b)
Safety must be given, in any case at all.
Vishwedevas be pleased, to come on the call (c). 13.

हे देव गुरु इस यज्ञ को, करके कृपा फैलाइए ।
घृत से शक्ति को बढ़ा, मन में दृढ़ता लाइए ।। (क)
साहाय्यता जो भी मिले, हो गुप्त रूपी आप से ।
अभिमान भी मुझ को न हो, मन के अहंकृति ताप से ।। (ख)
इस यज्ञ की रक्षा करें, फिर विश्वेदेवा हो प्रसन्न ।
आने को स्वीकार करके आए होकर के मगन ।। (ग)

तिष्ठित रहें तुष्ठित हुए, पाएं प्रतिष्ठा आप भी ।
मेरी इच्छाओं के स्वामी, जो करूं मैं जाप भी (घ) ।। १३ ।।

(B) Medico

## Medicinal Energy
## of
## Esoterism

(यजुर्वेद ४.१ । प्रजापतिः अवोषध्यौ अग्निश्च । विराड् ब्राह्मी जगती । निषादः)

एवमगन्म देव यजनं पृथिव्या, यत्र देवासोऽअजुषन्त विश्वे ।
ऋक् सामाभ्यां सन्तरन्तोयजुर्भी, रायस्पोषेण समिषा मदेम ।।
इमाऽआपः शमुमे सन्तु देवीः, ओषधे त्रायस्व स्वधिते मैनँ हिँसीः ।। १ ।।

This energy on the soil, of divine sacrificial place.
Where gods perform rite, on this universal space (a)

Or magnet power at, centre of forces race.
producing electric power, shows electro magnet face. (b)

Rig yajus sama with, all their pleasures.
May bestow us health, through lkhas treasures. (c)

O' goddess Apas, bestow peace please.
Medicine may save us, remove sins and disease. (d)

Germs may not be allowed to kill us.
Our lives may be constant, illustrious and joyous. (e) 1.

इस देव यजनी भू जो अग्नि, में विश्वेदेवा यज्ञ करें ।
ऋग् यजुर और सामशक्ति, धन स्वास्थ्य से हम को भरें ।। (क)

यह आपो देवी है पापशमनी, सन्ताप हमरे हर लेवें सब ।
हे ओषधे ! करो त्राण मेरा, स्वधिते ! हरो पाप तापों को अब ।। (ख)

पापों से हम को कभी मारने की, आज्ञा हे मां ! देवें न कभी ।
देही हमारी रहे स्वस्थ अब से, रहे पाप कर्मों से वह बची ।। (ग)

वैद्युति और चुम्बुकी, दो शक्तियां मिलकर हमें ।
तीनों वैदिक शक्तियों से, शक्तिशाली अब करें ।। (घ)

शान्ति प्रत्येक देवें, रोग शोकों को हनें ।

वायु मण्डल शोध दें, जीवन में सुखकारी बनें (ङ) ॥ १ ॥

अपामुपस्पर्शनम्

(यजुर्वेद ४.२.१)

आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।

विश्वँ हिरिप्रं प्रवहन्ति देवीर्, उदिदाभ्यः शुचिरापूतऽएमि ॥

दीक्षा तपसोस्वनूरसि तान्त्वा, शिवाँ शग्माम्परि दधे भद्रं वर्णं पुष्यन् ॥ २॥

Mother Apas to us, may purificate.

Enrich with the ghrita, also lubricate. (a)

That energy being flown, in whole universe.

May wash out sins, being cause to disperse. (b)

O' mother ! you are, Deeksha and austerity.

Fill the colour and vigour, in our bodies for purity (c). 2.

आपो देवीमात हमरी, पापों का शोधन करें ।

घृत से हमें घृत प्राश्य द्वारा, आएं और पावन करें ॥ (क)

विश्व सारे की बहाकर, शक्तियों को लाइए ।

उनके द्वारा आप माता, शुद्ध हमें कर वाइए ॥ (ख) ॥ २ ॥

# "श्रीमद्भगवद्गीतोपदेशस्य मनोविज्ञानविषयता"

शोभानन्दझा

कौरवदलवनसङ्घर्षदावानलसन्तापप्रशमनाय युद्धार्णवावगाहनोद्यतस्यार्जुनस्य विधेयवैमुख्यं निराकर्तुं भगवता मनोविज्ञानेन साङ्ख्ययोगसमन्वयपूर्वकमर्जुनोपदेशो व्यधायीति गीतामहाभारतपर्यालोचनेन विज्ञायते ।

. कथमन्यथा कौरवीयासह्यदुःखमनुभवतोऽप्रतिहतशक्तिप्राप्तये समाराधितमहेशस्य कर्तव्यपालनसमर्थस्याप्यर्जुनस्य युद्धभूमौ नयनगोचरीभूतगुरूजनस्वजनवियोगजन्यव्यामोहवचनं "स्वजनं हि" इत्यादिप्रलपनं श्रुत्वा "कुतस्त्वेति" भगवत्प्रश्नावसरः । परन्तु यथा विज्ञचिकित्सका रोगिनिदानसमये रोगिनेत्रजिह्वाद्यवलोकनेन तद्भाषणेन च रोगं परिचिन्वन्ति निश्चिन्वन्ति च प्राकृतिकः सांसर्गिको वा रोग इति । न हि तज्ज्ञानं विना चिकित्सायै प्रवर्तन्ते विज्ञचिकित्सकाः । यतो मातृपितृरजोवीर्यमूलकप्राकृतिकरोगस्य निदानयोग्यत्वेऽपि चिकित्सयाऽपरिहार्य्यत्वम् । देशकाल जनसंसर्गजन्यसांसर्गिकरोगस्य तु निदानयोग्यत्वं चिकित्सापरिहार्यत्वञ्च ।

तथैव युद्धभूमिस्थस्वजनगुरुजनवियोगसम्भावनाजन्यव्यामोहः प्राकृतिकः सांसर्गिको वेति ज्ञातुं प्रथममर्जुनमुखादेव प्रयतते विज्ञानकुशलश्चिकित्सकराजो भगवाञ्छ्रीकृष्णः ।

यद्यप्यर्जुनव्यामोहः सांसर्गिक एवेति विदितवेद्यो भगवान् कथमन्यथा तृतीयाध्याये सर्वोऽपि जनः स्वस्वप्रकृत्यधीनः कार्यं कुरुते तत्र निग्रहः किं करिष्यति-इत्यर्थक "सदृशं चेष्टते" इत्यादिभगवत्प्रतिपादितसिद्धान्तसङ्गतिः ।

तथापि केन पथोपदेशोविधेयो योऽर्जुनाय रुचिकरो विधेयप्रवृत्तिकरश्च भवेत् । येन मदुपदेशः सफलतां गच्छेदित्यभिप्रायेणोपदेशमार्गं वेत्तुं भगवान् प्रायततेति सम्भाव्यते । यथा ज्यायान् निदानवेत्ताऽन्तरङ्गरोगिरुचिमनुसृत्य कदाचित् प्रतिकूलमपिपथ्यमनुमन्यते प्रयतते च प्रतिकूलपथ्यजन्योपद्रवशमनाय तादृशभेषजं दातुम् ।

भवति च तथा "कुतस्त्वेति" भगवत्प्रश्नश्रवणानन्तरमर्जुनवचनं यत् परमश्रद्धास्पदभीष्मद्रोणहननमयोग्यं तन्निहत्य च राज्यभोगोऽयशस्कर इत्याद्यर्थकम् "कथं भीष्ममहम्" इति । तथा धर्माधर्मविचारधाराप्रवाहं स्तम्भयितुमहमसमर्थस्तस्माच्छिष्यत्वेनोपगतं मां शाधि, यच्छ्रेयस्करं तद् ब्रूहीति च । ततश्चार्जुनस्य प्रश्नोत्तरदानेऽसामर्थ्यं शरणापन्नत्वञ्च विज्ञाय स्वजनगुरुजनसम्भावितवियोगजन्यव्यामोहः सांसर्गिकस्तथाऽज्ञानप्रभवत्वेन ज्ञानापहार्य्य इत्यभिप्रायेणाध्यात्मविद्योपदेशप्रवीणो भगवान् ज्ञानमार्गोपदेशाय प्रक्रमते "अशोच्यान्" इत्यादिना "देही नित्यम्" इत्यन्तम् ।

यद्यपि युद्धभूमौ ज्ञानमार्गोपदेशोऽर्जुनायानावश्यको यतो ज्ञानमार्गस्य निष्कर्मता स्वभावसिद्धा । यदुक्तं तृतीयाध्याये "तस्य कार्यं न विद्यते" इत्यादि भगवता । तथा "विनायकंप्रकुर्वाणो रचयामास वानरम्" इत्याभाणकप्रवेशप्रसङ्गो भगवदुपदेशे । एवं सत्यपि ज्ञानमार्गोपदेशोऽर्जुनस्य वैमुख्यकारको न भवेत्तथा प्रायतत भगवान् योगसमन्वयपूर्वकम् "योगस्थः कुरु कर्माणि" इत्यादिना । पूर्वन्तु ज्ञानमार्गस्यैवावश्यकताऽसीत् । यतो भ्रममोहादिनिवृत्तौ भ्रममोहाद्युत्पादकपदार्थविरोधिपदार्थोपस्थितिः कारणतेति नियमेन तथा "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायेन च ज्ञानापहार्य्याज्ञान जन्यमोहस्यापि निवृत्तिः । यथा रज्जौ सर्पः शुक्तौ रजतमित्यादौ भ्रमज्ञाननिवृत्तौ क्रमेण तमोविरोधिप्रकाशोपस्थितिः दूरत्वादिविरोधि सामीप्याद्युपस्थितिश्च कारणम् । एवञ्च भ्रममोहादिज्ञाने भ्रममोहाद्युत्पादकपदार्थज्ञानमावश्यकम् । न हि शुक्तिरजतपदार्थाज्ञाने तद्दर्शनेऽपि भ्रमज्ञानं तन्निवृत्तिर्वा जायते ।

तथैवार्जुनस्य युद्धभूमौ स्वजनगुरुजनसम्भावितवियोगजन्य व्यामोहनिवृत्तौ तादृशव्यामोहोत्पादकहस्तपादादिविशिष्टपिण्डाकृतिमद्गुरुपदार्थविरोधिनिराकारनिर्गुण - नित्यानन्दस्वरूपात्मक गुरुपदार्थज्ञानमावश्यकमितिबुद्धया को गुरुः कश्च शिष्यः अनयोः सम्बन्धश्च क इत्यादिपदार्थानां तात्विकज्ञानार्थं ज्ञानमार्गोपदेशस्य विधेयमार्जुनस्य न प्रतिकूलता भवेदित्यभिप्रायेण व्याजहार भगवान् "अजो नित्यः" इति । किन्तु ज्ञानमार्गे यथा कर्माकर्मविवेचनं नास्ति तथा धर्माधर्मयोरपि । धर्माधर्मविचारदृष्ट्याऽपि भगवान् क्षात्रधर्म स्वरूपं दर्शयति "स्व धर्ममपि" इत्यादिना । तदपालने पापाधिकारी भवेदिति । तस्मात् क्षात्रधर्मपालने युद्धेशरीरत्यागे स्वर्गं, विजये सति "राज्यं भोक्ष्यसे" इत्याद्युक्त्या युद्धविधानमेव निर्णीतवान् ।

तथापि धर्माधर्मविचारे कर्मणः सत्वरजस्तमोगुणानामाधारेणोत्तममध्यमाधमेष्टानिष्टफलप्रयोजकत्वं संसारबन्धनकरत्वञ्च । यतः "त्रैगुण्यविषया वेदाः" इत्यादिनाऽर्जुनं प्रति निस्त्रैगुण्यो भवेत्युक्तवान् । अतो ज्ञानकर्मणोर्बुद्धियोगे सति ज्ञानयोगकर्मयोगौ भवतस्तयोः समन्वयः कृतो भगवता न तु शुद्धज्ञानकर्मणोः । अत एव ज्ञानमार्गोपदेशे "सुख दुःखे समेकृत्वा" इत्यादिना ज्ञानयोगस्वरूपं दर्शितम् । तदनुसारेण "एषा तेऽभिहिता" इत्यादिना ज्ञानमार्गः, ज्ञानयोगमार्गः, कर्ममार्गः, कर्मयोगमार्गः इति भेदेन ज्ञानी, ज्ञानयोगी, कर्मी, कर्मयोगी चत्वारो भवन्ति ।

तत्र ज्ञानी लोकसंग्रहानपेक्षः कर्माकर्मविरतश्च । कर्मी वेदप्रतिपादितत्रिगुण-कर्माकर्मशीलः संसारागमनाद्यनपेक्षः सुखाद्यपेक्षश्च । ज्ञानयोगी कर्माकर्मरहितोऽपि यदि प्रारब्धवशात् कर्मकरोति न तत्कर्मणा बन्धनाश्रयस्तेनलोकसंग्रहोऽपि जायते । कर्मयोगी लोकसंग्रहापेक्षस्त्रिगुणकर्मकुर्वन्नपि नेष्टानिष्टफलभाग् भवति । तदर्थं योगस्थः कुरुकर्मेत्युक्तं भगवता ।

योगस्थोभूत्वा कर्मकरणे न कर्मबन्धनं भवति । यतो योगविषये योगशास्त्रे "योगश्चित्तवृत्तिनिरोधः" इत्युक्तं तदेव गीतायामपि "योगः कर्मसु कौशलम्" इति । न हि चित्तवृत्तिनिरोधं बिना क्रियासु कौशलं भवति । अत एव सिद्ध्यसिद्ध्योः समत्वं योग उच्यते । अनुभवगम्योऽयं विषयस्तथाहि किमपि कार्यं यदि फलजिज्ञासया जनः कुरुते । परिणामे निष्फले कर्त्तुस्तद्दुःखेन निष्कर्मत्वं जायते । सफले परिणामे वा न तादृगुत्साहो भवति । यतस्तत्र परिणामविध्युपगमम् । सर्वथा फलाफलान्वितपरिणामे कर्त्तुरनुत्साहसम्भावना । फलजिज्ञासायां सुखदुःखात्मकसंसारबन्धनञ्च ।

अतएव "कर्मण्येवाधिकारः" इत्युक्तम् ।

तच्च तदैव सम्भवेद् यदा योगस्थः स्यात् । योगशब्दो वाच्यार्थशक्त्या सम्बन्धार्थबोधकः सम्बन्धश्च द्विष्ठो भवति । अतः सर्वत्रसम्बन्धे वस्तुद्वयस्यापेक्षाऽस्ति । अतः प्रकृतप्रसङ्गे फलाफलदुःखसुखसिद्ध्यसिद्धिनिरपेक्ष समत्वबुद्धिर्योगात्मिका तदा जायते यदा कर्मणा सह ज्ञानेन च सम्बद्धा भवति यदा कर्मणा योगस्तदा कर्मयोगः । ज्ञानेन च ज्ञानयोगः । उभययोगे न कर्मबन्धनं न वा लोकसंग्रहोच्छेदः । शुद्धज्ञानमार्गे न कर्माकर्मविचारो न लोकसंग्रहश्च शुद्धकर्ममार्गे कर्माकर्मविचारः सकामत्वेन कर्मबन्धनञ्च । अतोऽर्जुनं योगबुद्ध्योपदिशन् विधेयप्रवृत्तिकारयति भगवान् ।

बुद्ध्या कर्मकरणे न कर्मबन्धनमित्याद्युपदेशं श्रृण्वन्नर्जुनो बुद्धेर्महत्वं ज्ञात्वा पुनः कर्ममार्गेऽरुचि दर्शयन् पृच्छति "ज्यायसी चेत्" इत्यादिना तच्छ्रुत्वा विज्ञानशास्त्र-कुशलो भगवान् मनोविज्ञानेन विजज्ञे यत् पुनः पुन प्रश्नजिज्ञासाऽर्जुनस्य सूचयति कर्मकरण इति । कथमन्यथा कर्माकर्मकरणे साम्रेडं प्रश्नावसरः । न हि कर्मविरक्तस्य कर्मविषयिणी जिज्ञासा श्रेष्ठाऽश्रेष्ठा वेति जायते । तस्मादर्जुनस्तावदेतदेव ज्ञातुं यतते यदेषां विपक्षाश्रितानां स्वजनगुरुजनानां हनने यथा दोषभाङ् न भवेयमिति ।

तदभिप्रायेण ज्ञानयोगकर्मयोगयोः समन्वयार्थं मार्गभेदं दर्शयित्वा फलाभेदं दर्शयति भगवान् "लोकेऽस्मिन् द्विविधा निष्ठा" इति । गीतायां पूर्वापरसन्दर्भपरामर्शेनेदं ज्ञातं भवति यत् कृष्णार्जुनसमये वेदप्रतिपादितयज्ञाधारेण धर्माधर्मविचारस्य प्राबल्यं ज्ञानमार्गस्य च दौर्बल्यम् । अतएव गीतायां भगवान् यामिमां पुष्पितां वाचम्" इत्यादिना ज्ञानविमुखानां वैदिककर्मकाण्डिनां निन्दामुखेन वर्णनं चकार । तत्समयानुसारेणार्जुनो धर्माधर्मरञ्जितचेता आसीत् । अतः स्वविधेयमिच्छन्नपि लोकप्रवादभीतः सन् निर्णय-मनुसरति । कथमन्यथा भगवानर्जुनप्रश्नाभावेऽपि प्रतिपादयति "इमं विवस्वते योगम्"

इत्यादिना । तदेव ज्ञापयति यदर्जुन एवं न जानातु यदयं कर्मयोगो भगवता मदर्थ एव कल्पित इति । तदर्थं कर्मयोगस्य पुरातनत्वं श्रेष्ठत्वञ्च दर्शयति लोकसंग्रहादिना । अत एव कर्मयोगस्य पुरातनत्वे प्रदर्शितेऽप्यर्जुनः शङ्कते "अपरं भवतो जन्म" इति । तत्प्रश्नसमाधानं कुर्वन्नन्ते संशयं छित्वा स्व विधेयं कुरु" येन तव क्षात्रधर्मसिद्धिरेतदभिप्रायेण चतुर्थाध्याये "तस्मादज्ञानसम्भूतम्" इत्युक्तवान् । योगविषये फलाकाङ्क्षा कर्मणां, बुद्धया योगश्चेत्युभयविध्युपदेश श्रवणेन दोलायितचेतसा सन्यासकर्मयोगविषये "संन्यासः कर्मणां कृष्ण" इत्यादिना जिज्ञासां करोत्यर्जुनः । तत्प्रश्नसमाधाने सन्यासाऽपेक्षया कर्मयोगस्यैव प्राधान्यं दर्शयति । "सन्यासः कर्मयोगश्च" इति । अर्थात् केवल कर्मसन्न्यासात् सन्यासी न श्रेष्ठः किन्तु कर्मफलसंन्यासात् । यथा सकामकर्मकरणान्न कर्मवन्धनान्मुक्तिः किन्तु कर्मफलत्यागकरणात् ।

तथा सति साङ्ख्ययोगयोः समन्वयपूर्वकसंन्यासयोगयोश्चसमन्वयो जायते । अत एव "साङ्ख्य योगौ पृथग् बालाः" इत्युक्तम् । तथा च कर्मफलसंन्यासपूर्वकं यः कर्म करोति स सन्यासी योगी वा कथ्यते । तदभिप्रायेण षष्ठाध्याये "अनाश्रितः कर्मफलम्" इत्याद्युक्तम् । एवञ्च यथा साङ्ख्ययोगयोरैक्यं तथा सन्यासयोगयोरपि । एतदर्थमेवोक्तम् "यं सन्यासमिति ।"

तेन ज्ञानयोगी, सन्न्यासयोगी कर्मयोगी त्रयः समकक्षा भवन्ति । न तेषां कर्मकरणे कर्मबन्धनं लोकसङ्ग्रहोच्छेदश्च । एते द्वितीयाश्रमेऽपि कर्मबन्धनसंसारागमनादिकभाजो न भवन्ति । एतत् सर्वं विषयप्रतिपादनं विज्ञानविषयकमेवास्ति । अत एव "ज्ञानं तेऽहं सविज्ञानं" इत्याद्युक्त्वा विज्ञाननैपुण्यं समदर्शयत् । यथा रूपरसादयोभिन्नाः सन्तः स्वातन्त्र्येण यत्स्वरूपं दर्शयन्ति तद् विलक्षणमेव मिलिताः सन्तोऽनुभवविचक्षणानां पुरः । तथैव समत्वरूपयोगात्मकबुद्धया कर्मणोवैलक्षण्यं विज्ञानेन प्रकाशितं भगवता ।

स च समत्वरूपयोगो न साधारणजनगम्यस्तदर्थमेवोक्तम् "भक्तोऽसि मे सखेति च" इति । यद्यप्यर्जुनो योगविद्यायां कुशल आसीत् परन्तु योगविषयेऽन्येषामपि यथा कथञ्चिज्ज्ञानं स्यात् तदर्थं योगप्रक्रियाविधानं किञ्चिद्वर्णितं भगवता "उद्धरेदात्मना" इति । सर्वत्र गीतायामर्जुनरुचिमनुश्रुत्यैवात्यमार्गविचारः प्रदर्शितः । मूढत्वेनार्जुनस्य वैमुख्यनिराकरणमेव प्रयोजनम् । अत एव गीतोपदेशान्तेऽर्जुनोक्तिः "नष्टोमोहः" इति ।

तेन स्थितप्रज्ञस्य गुणातीतस्य, अधिदैवादिकस्य, क्षेत्रक्षेत्रज्ञयोश्च पराऽपराप्रकृतेश्च श्रद्धात्रयस्य यद्वर्णनं तत् सर्वमर्जुनस्य विधेयमनुलक्ष्यैव । अत एव सर्वत्रार्जुन प्रश्नसमाधानेऽन्ते "युद्धोद्यतो भव" इत्यादिनोपसंहृतं भगवता । यथा तृतीयाध्याये "जहि शत्रुम्" द्वितीयाध्याये "तस्मादुत्तिष्ठ" इत्याद्यष्टाध्यायान्तं यावत् ।

युगसमयप्रमाणेन धर्माधर्मविचारः परिवर्तते । तदनुसारेण संसारिणां कर्माकर्माचरणे प्रवृत्तिनिवृत्ती । एवञ्च श्रीकृष्णार्जुनप्रादुर्भावसमयः कलिद्वापरसन्धौयुग-

कारैर्निर्णीतः। तस्मिन् समये वेदप्रतिपादितयज्ञव्रताद्यनुष्ठानाचरणे धर्मवादस्य प्राबल्येन सर्वेषां मनोगतिः सदसद्विवेकशून्याऽधर्मभीतालोकसङ्ग्रहानुकूला च।

तत एवानुचिताचरणशीलस्य कौरवस्य निरोधे जना तूष्णीम् आसन्। उचितानुचितप्रतिपादनेऽपि लोकसंग्रहः प्रतिबन्धकः। भगवाञ्छ्रीकृष्णोऽपि लोकसंग्रहस्य बहुमहत्वमदात्। तस्माल्लोकाउचितकृत्येऽपि कर्मणि मौनावलम्बिन आसन्। अत एव तृतीयाध्याये "न बुद्धिभेदं जनयेत्" इत्यर्जुनं प्रतिभगवदुक्तिः।

अर्थात् सर्वजनो न बुद्धियोगेन कर्म कर्तुं योग्यः किन्तु विद्वान् युक्तः सन् कर्म कुर्यात् येन लोकसङ्ग्रहेऽन्धपरम्परा न स्यात्। अन्यथा "यद् यदाचरतिश्रेष्ठः" इत्युक्तौ श्रेष्ठत्वोच्छेदप्रसङ्गः। अयं भगवत्प्रतिपादितकर्मयोगः शुद्धविज्ञानविषय स चार्जुनस्य विधेयप्रवृत्यर्थंतात्कालिकयुगधर्मवादस्य परिवर्तनार्थञ्च प्रकाशितोभगवता। यथा कर्मयोगेन धर्मवादस्य परिष्कारस्तथा सन्यासयोगेन सन्यासवादस्यापि कृतः। यथा अष्टादशाध्यायेऽर्जुनस्य सन्यास तत्त्व जिज्ञासायां अन्यमतविचारदर्शनपूर्वकं स्वविचारं प्रादर्शयत् "काम्यानाम्" इत्यादिना। काम्यकर्मत्यागः सन्यास इति मन्यन्ते कवयः। अर्थात् केवलवस्तुस्थितिवर्णनशीलाः। तदधिकविवेकज्ञा वैज्ञानिकास्तु सर्वकर्मफलत्यागः सन्यास इति वदन्ति। अस्मिन्मते श्रीकृष्णस्याप्यन्तर्हितरूपेण समावेशः।

काम्यकर्मरतास्त्रिगुणवेदप्रतिपादितकर्मानुष्ठानशीलाविद्वांसः दोषयुक्तकर्मत्यागः सन्यास इति वदन्ति "यज्ञार्थात् कर्मणोन्यत्र" इति। स्वमतप्रकाश पूर्वकं लोकसंग्रहमनुश्रृत्य त्यागस्य सात्विकराजसतामसभेदेन त्रैविध्यं प्रतिपाद्य यज्ञदाना दीनांफलाफलासङ्गपूर्वकं कर्तव्यत्वञ्च प्रतिपाद्य सङ्गपूर्वकं तेषां यज्ञादीनां त्यागः सन्यास इति प्रावोचत्। एतेन कर्मयोगस्य सन्यासयोगेन सह समन्वयः। अस्य कर्मयोगस्य साधने भक्ति योगस्यापि दृष्टिपथमानीतवान् भक्ति योगमुपदिशन् भगवान्।

# तान्त्रिकं वाङ्मयम्

**श्रीव्रजवल्लभद्विवेदी दर्शनाचार्यः**

तन्त्रशब्दः साम्प्रतं मारणमोहनादिषट्कर्मप्रतिपादकेषु शास्त्रेष्वेव प्राय प्रयुज्यते। विविधान् मन्त्रयन्त्र-मण्डलादीनाधृत्य समायोजितेषु कर्मकाण्डेषु वामाचारप्रधानेषु तस्येतिकर्तव्यता परिसमीक्ष्यत इत्यामनन्ति साम्प्रतिका इतिहासज्ञाः केचन पूर्वीयाः पाश्चात्याश्च। अत एव हेयदृष्ट्या तदवलोक्यते तैः। तादृशैरेवेतिहासलेखकैः वैष्णवाः शैवाश्चागमग्रन्था न परिगण्यन्ते तान्त्रिके वाङ्मये। प्रायोऽपरिचिता एव ते विशालेनानेन वाङ्मयेन। वस्तुतस्तु वैष्णवानां शैवानां च धर्मसंस्कृत्योरान्तरिकः कश्चन सम्बन्धो वर्तते पाञ्चरात्रेण पाशुपतेन चागमेन। वैष्णवानि शैवानि च पुराणान्यपि वर्तन्ते तदनुप्राणितान्येव। तदनुपदमेव स्पष्टीकरिष्यते।

प्राचीने बौद्धवाङ्मयेऽपि समुपलभ्यते पाञ्चरात्राणां[1] पाशुपतानां[2] च आचाराणां समुल्लेखो यत्र तत्र। शतपथब्राह्मणे (१३।६।१) पाञ्चरात्रसत्रस्य वर्णनमस्ति। छान्दोग्योपनिषदि (७।१।२) श्रुता एकायनविद्या पाञ्चरात्रागमस्यैव नामान्तरम्।[3] महाभारते नारायणीयोपाख्याने स्फुटमेवोच्यते—

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥ इति॥

अत्रैव (३४९-६८) सांख्यस्य कपिलः, योगस्य हिरण्यगर्भः वेदानामपान्तरतमाः, पाशुपतस्य श्रीकण्ठः, पाञ्चरात्रस्य च स्वयं भगवान् वक्तेति प्रतिपाद्यते। अन्यत्राप्युक्तम्—

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
स्वयं प्रमाणान्येतानि न हातव्यानि हेतुभिः॥ इति॥

---

१. वैष्णविसम्, शैविसम् एण्ड् अदर् माइनर् रिलीजियस् सिस्टम्स्, पृ० ३।
२. धम्मपदे १४१ गाथा द्रष्टव्या।
३. शान्तिपर्वणि ३४९ अध्याये ६४ श्लोकोऽयम्।

पाञ्चरात्रमतानुयायी राजा वसुरुपरिचरोऽहिंसकेन सत्रेण नारायणमीडयामासेति महाभारत एव [1]नारायणीयोपाख्याने वर्णितम् । प्राचीनतमेषु शिलाशासनेषु पाणिन्यादिग्रन्थेषु च समुल्लिखिता वासुदेवोपासना [2]इतिहासज्ञैरप्यङ्गीकृता तदेतस्यैव धर्मस्याङ्गम् ।

कृष्णशुक्लयजुर्वेदयोः [3]शतरुद्रीयाध्याये वर्ण्यते रुद्रस्य महान् महिमा । अत्र रुद्रः स्तेनानां तस्कराणां शूद्रणामतिशूद्राणां चाप्याराध्यतया वर्णितः । [4]कृष्णयजुर्वेदसंहितारण्यकयो रुद्रस्याघोरवामदेवादिपञ्चस्वरूपाणां भस्मोद्धूलनादिविधेश्च दृश्यते तादृगेव स्वरूपं यादृशं हि प्रतिपादितं पाशुपतसूत्रकारेण । [5]बौद्धग्रन्थेष्वपि तदेतस्य मतस्य स्थितिसूचकं प्रमाणमुपलभामहे । श्रीकण्ठः पाशुपतमस्याद्यः प्रववतेत्यनुपदमेव महाभारतप्रमाण्येन प्रतिपादितम् ।

तदिमौ पाञ्चरात्रपाशुपतमतावेव परवर्तिनो वैष्णवस्य शैवस्य च धर्मस्याधारस्तम्भौ । बौद्धजैनधर्मयोराविर्भावात् पूर्वमाभ्यां भारतीयायां संस्कृतौ वैदिके धर्मे आवश्यकं संशोधनं परिवर्तनं च संपादितम् । तदेवं कुर्वद्भ्यामप्याभ्यां बौद्धानां जैनानामिव च न वैदिको धर्म सर्वथा प्रत्याख्यातः, किन्तु तत्प्रामाण्याङ्गीकारमुखेनैव तत्र किमप्यौज्ज्वल्यमाहितम् । अस्मिन् प्रसङ्गे वसोरुपरिचरस्योपाख्यानं निदर्शनतया समुपस्थापयितुं शक्यते, यत्र हि नारायणोपासकस्य गगनविहारसामर्थ्यवतस्तस्य हिंसकयागसमर्थनेन तत्सामर्थ्यनाशः समुपवर्णितः ।[6]

पाञ्चरात्रं पाशुपतं च वाङ्मयमागमपदाभिलप्यं भवति । तदनेन वाङ्मयेन न केवलं वैदिके धर्मे, अपि तु कालपरिपाकेन बौद्धधर्मेऽपि परिष्कारः संपादितः । तेन हि तत्र महायानशाखा प्रसृतिं लेभे । अपि च, तदनुप्राणिता एव सन्ति मूर्तिस्थापत्य चित्रादिकलाः । विद्या क्रिया योग-चर्याख्येषु चतु,र्षु पादेषु प्रायो विभक्तानि सन्त्यागमशास्त्राणि । विद्यापादे ज्ञानस्य (दर्शनस्य), क्रियाचर्यापादयोः प्रसंगतः कलानाम् योगपादे च योगस्य विधिर्वर्णितः । परवर्तिनां शैवानां शाक्तानां बौद्धादीनां च तन्त्राणां विकासभूमिरागमशास्त्राण्येव । फलत आगमशास्त्राणि तन्त्रशास्त्राणि चेति नार्थान्तरम् ।

---

१. शान्तिपर्वाणि ३३६ अध्याये १०-११ श्लोकौ द्रष्टव्यौ ।

२. वैष्णविसम्, शैविसम् एण्ड् अदर् माइनर् रिलीजियस् सिस्टम्स्, पृ० ३-४ ।

३. तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमः प्रपाठकः, माध्यन्दिनसंहितायां षोडशाध्यायश्च ।

४. मैत्रायणीसंहितायां २-९-१; २-९-१०; तैत्तिरीयारण्यके १०-४३-४७ ।

५. धम्मपदे १४१ गाथा द्रष्टव्या ।

६. महाभारते शान्तिपर्वणि, ३३७।१-१७ ।

इतः प्रायः षष्टिवर्षेभ्यः पूर्वं श्रीरामकृष्णगोपालभाण्डारकरमहोदयेन "वैष्ण-विसम् शैविसम् एण्ड् अदर् माइनर् रिलीजियस् सिस्टम्स्" इत्याख्ये ग्रन्थे न केवलं वैष्णवस्य शैवस्य च मतस्य, अपि तु शाक्त-गाणपत्य-स्कान्द-सौरसम्प्रदायानामपि स्वरूप परिचय उपस्थापितः । ततः परं यद्यपि वैष्णवानां शैवानां शाक्तानां बौद्धानां चागमेषु तन्त्रेषु च पृथक् पृथगनुशीलनं समजायत, तथापि सर्वेषामेवैषां तान्त्रिकाणां सम्प्रदायानां परस्परमनुस्यूततायां तावन्नावहितं कैश्चिदपि विपश्चिद्भिः साम्प्रतं सर्वेषामागम-शास्त्राणां तन्त्रशास्त्राणां च समन्वयात्मकस्यानुशीलनस्य समारंभः श्रीमद्भिः श्रद्धेय-चरणैर्महामहोपाध्यायपण्डितगोपीनाथकविराजमहोदयैः क्रियतेति प्रायो जानन्त्येव विपश्चितः ।

डा० भाण्डारकरमहोदयैः सम्प्रदायानामेतेषां परस्परानुस्यूततानवबुद्ध्यैव स्वकीयं विवेचनमुपस्थापितम् । वस्तुतस्तु सम्प्रदायानामेतेषां वैदिकानां च विधीनां समन्वयमुखेनैव पंचायतनपूजायामाधृतः स्मार्तो धर्मः प्रसृतिं लेभे इत्यनुपदमेव प्रपञ्चयि-ष्याम । विभिन्नानामप्येषां सम्प्रदायानां दार्शनिकी दृष्टिरप्रायशस्समानैवा-सीदिति, सा चागमशास्त्रमिति तन्त्रशास्त्रमिति वा नाम्नाऽभिधीयते स्मेति तथ्य प्रायः सर्वैरेवैतिहासविद्भिरुपेक्षितम् । अपि च, भाण्डारकरमहोदयैः शाक्तः सम्प्रदायः प्रायो-सामग्र्येण विवेचितः । न केवलमत्रैव, अन्यत्रापि शाक्तमतस्य विवेचनं प्रायः परवर्तिनि काले प्रादुर्भूतान् ग्रन्थानाधृत्यैव कृतमिति प्रतीयते । शिवदृष्टिकारेण सोमानन्देन तृतीयाह्निकारम्भे शक्तिपारम्यपक्षः प्रतिक्षिप्तः । तदेतन्मतं पूर्वपक्षरूपेणोपस्थापयता तद्वृत्तिकारेण भट्टोत्पलेन भट्टप्रद्युम्नरचितस्य 'तत्त्वगर्भस्तोत्रस्यैष श्लोक उपस्थापितः —

यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया ।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे ।। इति ।।

तदेतस्याः शाक्ताया अद्वयदृष्टेस्तदीयप्राचीनवाङ्मयस्य च स्वरूपमभिनवगुप्तकृते तन्त्रालोके जयरथकृतायां तट्टीकायां च स्थाने स्थानेऽवलोकयितुं शक्यते । प्रत्यभिज्ञा-दर्शनं शैव्याः शाक्तायाश्च दृष्टेः समन्वयेनैव प्रादुर्भूतमिति वक्तुं पार्यते ।

किञ्च, प्राक्तने वैदिके धर्मे कदाचन वर्णाश्रमव्यवस्थाया हिंसाबहुलानां यागादीनां च प्राबल्यमासीत् । औपनिषद-तान्त्रिक-बौद्ध-जैनसिद्धान्तैः प्रवृत्तेरस्याः प्रतिरोधोऽक्रियत । गच्छता कालेन औपनिषदाः सिद्धान्ता वैदिके ज्ञानकाण्डे समावेश-मापुः, बौद्धजैनदृष्टिभ्यां सर्वथा वेदस्याप्रामाण्यमुद्घोषितम् । तदनयोर्मध्यवर्तिन आसन् तान्त्रिका विचाराः । महाभारतकालादारभ्य महिम्नस्तोत्रकर्तुः पुष्पदन्तस्य कालं यावद्

---

१. 'भट्टप्रद्युम्नेन तत्वगर्भे" (शि० वृ, पृ० १६) इति भट्टोत्पलोक्त्यैव ज्ञायते श्लोकोऽयं भट्टप्रद्युम्नरचितस्य तत्त्वगर्भस्येति । एष श्लोकोऽन्ये च केचन श्लोकास्तत्ववगर्भस्था रामकण्ठकृतस्पन्दकारिकाविवृतौ पृ० १२९-१३२ दृश्यन्ते ।

भारतीये वाङ्मये वेदसांख्य-योग-पाञ्चरात्र-पाशुपतशास्त्राणां समानं प्रामाण्यमभिप्रेतमासीत् । रामायणे, महाभारते, भगवद्गीतायाम्, पुराणेषु च मतानामेषां परस्परं समन्वयः समजायत । परवर्तिभिर्धर्मशास्त्रनिबन्धकारैरपि वेद मनुस्मृतिवत् तन्त्रशास्त्राणां प्रामाण्यमूरीकृतम् । वैष्णव-शैव-शाक्तागमसदृशी योगस्योपासनायाश्च विशिष्टा पद्धतिर्बौद्धेषु जैनेषु च विकासमाप । सर्वेष्वेतेषु मौलिकाः सिद्धान्ताः समाना एव । साम्प्रतिकेषु भारतीयेषु सभ्यता-संस्कृति-धर्मेषु वैदिकविधीनामपेक्षया तन्त्रशास्त्रपद्धतीनां गरीयान् प्रभाव इत्यङ्गीकर्तव्यमेव ।

तन्त्रशास्त्रमिति प्राचीनाया भारतीयायाः संस्कृतेः काचन विशिष्टा पद्धतिः प्रागैतिहासिकीषु संस्कृतिषु तस्या मूलमित्यामनन्ति विद्वांसः । अथर्ववेदे यजुर्वेदे च तस्याः प्राचीनं स्वरूपमवलोक्यते । ऐतरेयारण्यकादिषु ''अकारो वै सर्वा वाक्'' २।३।६ , ''अ इति ब्रह्म'' २।३।८ इत्यादिप्रतिपादनं शैवशाक्ततन्त्रेषून्मीलितं मातृकास्वरूपं स्मारयति । वैदिके वाङ्मये वैष्णवानां शैवानां च सिद्धान्तानामुल्लेखो वर्तत इति साधयन्त्येव विद्वांसः, किन्तु ते पाञ्चरात्र-पाशुपतशब्दावप्रयुज्य तत्स्थाने वैष्णव-शैवशब्दौ प्रयुञ्जते । वस्तुतस्तु पश्चात्कालिकाविमौ शब्दौ पौराणिकी संस्कृतिमभिव्यञ्जयतः । पुराणेषु हि न कस्यापि नूतनस्य दर्शनस्य सिद्धान्तस्य वा प्रतिपादनं विद्यते, अपि तु वेद-योग-सांख्य-पाञ्चरात्र-पाशुपतानामथ च बौद्धानां चापि विचाराणाम् तदानीं प्रसृतानां शाक्त-गाणपत्य-स्कान्द-सौर-सम्प्रदायानां च सिद्धान्तानां समन्वयमुखेन भारतीयायाः संस्कृतेर्नूतनं स्वरूपं तत्रोन्मीलितम् । विभिन्नेषु मतेषु सम्प्रदायेषु चाविरोधापादनमेव पुराणानां मुख्यं प्रयोजनम् । तदनयैव दृशा पुराणानामनुशीलने समाचरिते भारतीयानां धर्माणां संस्कृतेश्चैतिहासिकं स्वरूपमधिगन्तुं शक्यते । न केवलं पुराणानामपि तु वैष्णवशैव-शाक्त-योगाद्युपनिषदामप्यनयैव पद्धत्याऽनुशीलनमुचितम् । पुराणेषु साम्प्रदायिकेषूपनिषत्सु च समये समये भारतीयायां संस्कृतौ प्रादुर्भूतानां नूतनानां स्रोतसां तस्या अनारतं प्रवहता प्रवाहेण संयोजनस्यैव प्रयासः समवलोक्यते । अल्लोपनिषदत्र निदर्शनतयोपस्थापयितुं शक्यते ।

तान्त्रिक्यामुपासनायां दीक्षितस्य मानवमात्रस्याधिकारो वर्तते । नह्यत्र वर्णाश्रमादिकृतः कोऽपि प्रतिबन्धः । एतद्दृष्ट्या छान्दोग्योपनिषदस्थ शास्त्रस्यातीव सामीप्यं धत्ते । अत्र हि सत्यकामस्य जाबालस्य ४।४ , महिदासस्य ऐतरेयस्य ३।१६ , रैक्वजानश्रुत्योश्चोपाख्यानानि ४।१-२ तमिमं तान्त्रिकं सिद्धान्तमेव पोषयन्ति । देवकीपुत्रकृष्णस्य घोराङ्गिरसस्य च संवादः सत्यमेव पाञ्चरात्रसिद्धान्तान् स्मारयति । अत्रोल्लिखिता ७।१।२ एकायनविद्या पाञ्चरात्रश्रुतेरेवापरं नाम । रामानुजीयादिवेदान्तग्रन्थेषु स्मृतेर्द्रमिडाचार्य-सुन्दरपाण्ड्यवृत्तिकार-वाक्यकार-भास्करप्रभृतिभिरत्र विस्तृतानि भाष्याणि कृतानि । हन्त । तानि साम्प्रतं नोपलभ्यन्ते । अत्र वर्णिता ध्रुवा स्मृतिरेव रामानुजीये वेदान्ते भक्ति संज्ञां लेभे । एष च सिद्धान्तो नैव रामानुजोपज्ञः, किन्तु परम्पराप्राप्त इति प्रतीयते ।

परम्परायाः एतस्या विरोधाय वर्णाश्रमव्यवस्थायाः पुनः स्थापनाय च भगवता शंकराचार्येण ब्रह्मसूत्रव्याख्यानमुखेनापशूद्राधिकरणे सिद्धान्त एष समालोचितः, तर्कपादे च सांख्ययोगादिसिद्धान्तैः सह पाशुपतपाञ्चरात्रमतयोरवैदिकत्वं समसाधि । तदनु रामानुजाचार्यप्रभृतिभिरप्यपशूद्राधिकरणे शङ्कराचार्य प्रदर्शिता सरण्येवानुसृता, पाञ्चरात्रपाशुपतादिमतानां वैदिकत्वसाधनाय च महानायास उपनिबद्धः । तान्त्रिकवाङ्मयस्य सर्वेषु प्रस्थानेषु वेदापेक्षया तन्त्रशास्त्रस्य गरीयस्त्वं साध्यते । तद्यथा कुलार्णवे—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ।।
दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि ।। २।७-७ इति ।।

अभिनवगुप्तेन[१] परात्रिंशिकाव्याख्यायामुद्धृतं वचनमप्येतदनुगुणमेव । तद्यथा—

वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम् ।।

विस्मृत्यैतादृशानि वचनानि शंकराचार्यप्रभावनापितानामाचार्याणामागमशास्त्रस्य स्वतन्त्रं प्रामाण्यमनङ्गीकृत्य वेदानुवर्तित्वख्यापनमेव तन्मुख्यं कारणम्, येन हि विरलतामाप उत्तरे भारते आगमशास्त्रम्, यदा हि सिद्धान्तशैवागमानां प्रादुर्भावस्थलमेतदेव ।

तदेतस्यागमशास्त्रस्य तन्त्रशास्त्रस्य वा विशालं वाङ्मयम् । वैष्णवागमा वैखानस-पाञ्चरात्र-भागवतभेदेन त्रिधा भिद्यन्ते ।[२] हयशीर्षे पञ्चरात्रे पञ्चविंशतिः पाञ्चरात्रसंहिताः, दश च भागवतसंहिताः परिगणिताः । पाञ्चरात्राणां पञ्चविंशतिः संहिता इमा[३] अग्निपुराणेऽपि स्मर्यन्ते । डा० ओटोश्राडरमहोदयेन[४] इमा भागवतानाम्'' २।९ इति स्पष्टोक्तौ सत्यामपि पाञ्चरात्रसंहितास्वेव ताः परिगणिताः । दशसु नामसूपलब्धेष्वपि च नवैव संगृहीतानि । यदि सर्वा एता पाञ्चरात्रसंहितास्तर्हि कथं परित्यक्तास्ता अग्निपुराणे ?

दक्षिणे भारते वैष्णवागमीयपाञ्चरात्रवैखानसशाखानां विस्तृतं वाङ्मयं साम्प्रतमप्युपलभ्यते । तिरुपतिश्रीरंगमित्यादिदेवस्थानेष्वेतदानुगुणैव पूजापद्धतिः साम्प्रत-

---

१. तत्वविवेकाख्या बृहद्व्याख्या, पृ० ९२ ।
२. आदिकाण्डे द्वितीये पटले २-९ श्लोका द्रष्टव्याः ।
३. ३९ अध्याये २-५ श्लोका अवलोकनीयाः ।
४. इंट्रोडक्शन टू दी पांचरात्र एण्ड दी अहिर्बुध्न्यसंहिता, पृ० ५-११ ।

मपि प्रचलति । शर्मण्यदेशीयस्य विदुषो डा० ओटोश्राडरमहोदयस्य अहिर्बुध्न्यसंहिता-भूमिकायां २१५ संख्याकानां पाञ्चरात्रसंहितानामुल्लेखो वर्तते । मद्रपुरीतः १९६७ ई० वर्षे प्रकाशिते "पैनारोमा आफ पाञ्चरात्र लिटरेचर" नाम्नि ग्रन्थेऽद्यावधि समुपलब्धानां १०४ संख्याकानां पाञ्चरात्रसंहितानां विस्तृतं विवरणम्, प्रायः ३०० संख्याकानां संहितानां नामानि च प्रकाशितानि । एवमेव तिरुपतिस्थितवेङ्कटेश्वर-प्राच्यशोधसंस्थानतोऽनेका वैखानससंहिताः प्रकाशिताः, सम्पूर्णस्य वैखानसवाङ्मयस्य च परिचयः संगृह्यते । एवं च दक्षिणभारतीयविदुषामुद्यमेन विस्तृतमेतद्वाङ्मयमद्यापि सुरक्षितं तिष्ठति ।

एतद्विपरीता स्थितिः पाशुपतागमस्य । लकुलीशपाशुपतागमस्य केचन ग्रन्थाः साम्प्रतमुपलभ्यन्ते । लकुलीशादारभ्य विद्यागुरुपर्यन्तानामष्टादशपाशुपताचार्याणामुल्लेखो जैनग्रन्थेष्वपि दृश्यते । किन्तु लकुलीशात् पूर्ववर्तिनो महाभारतस्मृतश्रीकण्ठीयपाशुपत-मतस्य ग्रन्थोद्धरणादिकं किमपि नोपलभ्यते । अनेकेषु पुराणेष्वष्टाविंशतियोगाचार्याणाम्, तेषु प्रत्येकं चतुर्णामाहात्य द्वादशोत्तरशतसंख्याकानां शिष्याणां च नामावली दृश्यते । कृष्णशुक्लयजुर्वेदयोः संहिताब्राह्मणारण्यकेषु, रामायणमहाभारतयोः, पुराणेषु, स्मृति-ग्रन्थेषु, योगग्रन्थेषु च तत्र तत्र प्राचीनस्य पाशुपतमतस्य चर्चा लभ्यते । साम्प्रतमुपलभ्यमानेषु शैवागमतन्त्रग्रन्थेषु पूर्वपक्षतयोद्धृतानां पाञ्चरात्रपाशुपतदर्शनसिद्धान्तानां केषाञ्चन परिचयमुपलभामहे । स्पन्दप्रदीपिकाकारस्योत्पल वैष्णवस्याभिनवगुप्तपादा-चार्यस्य च समयं यावन्न केवलं काश्मीरे, किन्तु सम्पूर्णे उत्तरे भारते पाञ्चरात्राणां पाशुपतानां सिद्धान्तशैवानां ज व्यापकः प्रभावः प्रसारश्चासीत् । ततः परं दक्षिणे भारते केवलमागमशास्त्रमिदं संकुचितं सदवाशिष्यत । पाण्डिचेरीतः साम्प्रतं प्रकाशिते रौरवागमे शैवागमानामुपागमानां च २०७ संख्याकानां नामावली संगृहीता । तत्रत्याः स्वल्पा एवागमग्रन्थाः साम्प्रतमुपलभ्यन्ते ।

[1]वामनपपुराणे वर्णव्यवस्थानुरूपं शैवानां चत्वारो भेदास्तेषां प्रवर्तयितारश्च वर्णिताः । तद्यथा —

ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्चने ।
शास्त्राणि चैषां मुख्यानि नानोवितविदितानि च ॥

आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ।
तृतीयं कालवदनं चतुर्थं च कपालिकम् ॥

शैवस्त्वासीत् स्वयं शक्तिर्वसिष्ठस्य प्रियः सुतः ।
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः ॥

---

१. षष्ठाध्यायस्य ८६-९१ श्लोका इमे ।

महापाशुपतस्त्वासीद् भरद्वाजस्तपोधनः ।
तस्य शिष्योऽप्यभूद् राजा ऋषभः सोमकेश्वरः ।।
कालास्यो भगवानासीदापस्तम्बस्तपोधनः ।
तस्य शिष्योऽभवद्वैश्यो नाम्ना क्राथेश्वरो मुने ।।
महाव्रती च धनदस्तस्य शिष्यश्च वीर्यवान् ।
ऊणोदर इति ख्यातो जात्या शूद्रो महातपाः ।। इति ।।

अत्र ब्राह्मणैः सिद्धान्तशैवागमपद्धत्या, क्षत्रियैः पाशुपतविधिना, वैश्यैः कालामुखाचारेण शूद्रश्च कापालिककर्मणा शिवः समाराधनीय इति प्रतिपादितम् । धनद इत्यस्य महाव्रतीतिविशेषणेन कापालिका एव महाव्रतधरा इत्यप्यनेन ज्ञायते । सिद्धान्तशैवानां पाशुपतानां च परिचयः पूर्वमुपस्थापितः । कर्णाटकराज्ये-रेणुकाक्षेत्रसमीपवर्तिनि "हुली" इत्याख्ये ग्रामे कदाचन कालामुखसम्प्रदायस्यानेकानि मठमन्दिराण्यवर्तन्त । कर्णाटकप्रदेशेऽद्यापि वीरशैवसम्प्रदायानुयायिषु जैनेष्वपि च वर्तते व्यापारिवर्गस्यैव प्राधान्यम् । जैनसाहित्ये त्रिषष्टिशलाकापुरुषाणामिव शैवसाहित्येऽपि वर्तते त्रिषष्टिशैवाचार्याणामवस्थिति । केषाञ्चन शाक्तानां बौद्धानां च तन्त्रेषु प्रतिपादिता बाह्यपूजापद्धतिः कापालिकानां महाव्रतधराणां वा पूजाविधिं बाहुल्येनानुकरोति ।

शाक्तोपासनाविधिस्तदीयं वाङ्मयं च कदा प्रसृतिं लेभे इत्येनं प्रश्नं नैव साधुतया समादधत्यैतिहासिकाः । इदमवधेयमत्र यदधुनैव मथुरानगरस्थे पुरातत्वसंग्रहालये प्रायः २३०० वर्षप्राचीना मनसादेव्याः प्रतिमा संगृहीता । उदयपुरनगरस्थे पुरातत्वसंग्रहालये संरक्षितस्य ४९० ई० वर्षे समुत्कीर्णस्य पूर्वं उदयपुरमण्डलान्तर्गत "छोटी सादड़ी" स्थानसमीपवर्तिनि गिरौ भ्रमराम्बा (भंवरमाता) मन्दिरस्य गर्भगृहे स्थापितस्य शिलाशासनस्य वर्ततेऽयमाद्यः श्लोकः—

देवी जयत्यसुरदारणतीक्ष्णशूला प्रोद्गीर्णरत्नमकुटांशुचलप्रवाहा ।
सिंहोग्रयुक्तरथमास्थितचण्डवेगा भ्रूभङ्गदृष्टिविनिपातनिविष्टरोषा ।। इति ।।

चतुर्विधभेदभिन्नानां शैवानां तन्त्राणां पूर्वमुल्लेखः कृतः । इतो भिन्नान्यपि पूर्वादिस्रोतोभेदेन, आम्नायभेदेन, पीठविद्यादिभेदेन, कुल-क्रम मत-त्रिकादिभेदेन द्वैतद्वैताद्वैत-अद्वैतादिभेदेन च समवस्थितानां शैवानां शाक्तानां च तन्त्राणां वर्तते विस्तृतं वाङ्मयम् । [2]तन्त्रालोकविवेकधृतश्रीकण्ठसंहितायाम्, [3]नित्याषोडशिकार्णवे च परस्परं

---

१. शिलाशासनमिदम् "एपिग्राफिका इण्डिका" पत्रिकायां ३० वर्षीये चतुर्थाङ्के १२०-१३७ पृष्ठेषु सविवरणं प्रकाशितमवलोकनीयम् ।
२. तन्त्रालोकविवेके, प्रथमभागे, ४१-४३ पृष्ठेषु ।
३. प्रथमपटले १४-२२ श्लोका द्रष्टव्याः ।

भिन्नानां प्राचीनानां चतुष्षष्टितन्त्राणां नामावली वर्तते । अपरा च नामावली वर्तते सर्वोल्लासतन्त्रे[1] तोडलतन्त्रानुसारिणी । एताभ्यो विलक्षणा च दृश्यते विष्णुक्रान्ता-रथक्रान्ताविभागेषु विभक्तानां चतुष्षष्टितन्त्राणां त्रिविधा नामावली महासिद्धसार-तन्त्रस्था ।[2] विशालतमेऽस्मिन् वाङ्मये समुपलब्धानां मातृकाणां परिचायको ग्रन्थः प्रायः ६०० पृष्ठेषु मुद्रितः "तान्त्रिक साहित्य" (विवरणात्मक सूची) इत्याख्यः श्रीमद्भिर्गोपीनाथकविराजमहोदयैः संगृहीतोऽचिरादेव प्रकाशयिष्यते उत्तरप्रदेश-प्रशासनस्य सूचनाप्रकाशनविभागान्तर्गतया हिन्दीसमित्या ।

कदाचन कोणार्क-कालपी-मुलतानाख्यस्थानेषु क्रमशः सन्ध्यात्रयेषु भगवतः सूर्यस्योपासना क्रियते स्म । दक्षिणे भारते विशेषतः केरलेषु साम्प्रतमपि सुब्रह्मण्यरूपेण कुमारः स्कन्दः समुपास्यते । महाराष्ट्रगुजरात-राजस्थानेषु भाद्रशुक्लचतुर्थ्यामुत्तरे च भारते काशीप्रभृतिषु माघकृष्णचतुर्थ्यां पूज्यते महतोत्साहेन विघ्नेश्वरो गणपतिः । प्राय सर्वेष्वेव पुराणेषु सौर-गणेशाद्युपपुराणेषु च वर्तते सम्प्रदायानामेषां परिचयः । नानापुस्तकालयेषु सम्प्रदायानामेषां संग्रहात्मकाः स्वतन्त्राश्च ग्रन्था अद्याप्यप्रकाशिताः सन्ति ।

तान्त्रिके वाङ्मये प्रपञ्चसार-शारदातिलकयोः किमपि वैशिष्ट्यं विद्यते । अनयोः शिव-विष्णु-शक्ति-गणपति-सूर्य-स्कन्दानां तान्त्रिकी उपासनापद्धतिरेकत्रीकृता । स्मार्तधर्मस्याधारभूताविमौ ग्रन्थाविति वक्तुं पार्येत । प्रपञ्चसारो भगवतः शंकराचार्यस्य कृतित्वेन प्रख्यातः । खृष्टैकादशशताब्द्यां रचितायामीशानशिवगुरुदेवपद्धतौ ग्रन्थोऽयं स्मर्यते । षष्ठशताब्दीतो दशमशताब्दीपर्यन्तमाविर्भूतं तान्त्रिकं वाङ्मयं साम्प्रतम-प्यप्रकाशितमेव विद्यते । वाङ्मयस्यास्य विशेषतः पद्धतिग्रन्थानां प्रकाशनानन्तरमेव प्रपञ्चसारस्य विषये याथातथ्येन किमपि वक्तुं शक्यते ।

शंकराचार्यात् परमागमशास्त्रस्य तन्त्रशास्त्रस्य च वेदानुवर्तितत्वख्यापन प्रयासः प्राचलदिति वयमवोचाम । स च प्रयासः प्राधान्येन संस्कृतभाषाश्रित एवासीत् । भगवतां बुद्धस्य महावीरस्य च प्रभावेण तान्त्रिके वाङ्मयेऽपि द्रमिडापभ्रंशादिजनभाषासु ग्रन्थाः संदृब्धाः । तेन दक्षिणे भारते द्रविडभाषायां वैष्णवानामाल्वाराणां शैवानामडियाराणां च वाङ्मयं प्रादुर्बभूव, उत्तरे च भारतेऽपभ्रंशादिभाषासु चतुरशीतिसिद्धानां नवनाथानां च साहित्यं जन्म लेभे । आल्वाराणामडियाराणां सिद्धानां नाथानां च तज्जनभाषामयं साहित्यं परवर्तिनि काले प्रादुर्भूतस्य भक्तिसाहित्यस्य मूलमित्यवगन्तव्यम् ।

---

१. द्वितीयोल्लासे (पृ० ५-६) इमे श्लोका मुद्रिताः तोडलतन्त्रे दृष्टासु सरस्वती-भवनमातृकासु च नोपलभ्यन्ते ।

२. तन्त्राभिधानभूमिका, पृ० २-४ ।

३. प्रथमे भागे ४०, ७१ पृष्ठयोः ।

वैष्णवानामाल्वाराणामाचार्याणां च परम्परायां प्रादुर्भूता रामानुजाचार्या यामुनाचार्यप्रदर्शितदिशा तन्त्रशास्त्राणां वेदानुवर्तित्वं प्रथयाम्बभूवुः । एषां प्रधानः शिष्यः कूरेशस्तु द्रविडभाषामयं भक्तिसाहित्यं बहु मेने । फलतः परवर्तिनि काले संस्कृतभाषाश्रितेषु द्रविडभाषाश्रितेषु च वैष्णवसिद्धान्तेषु भेदः कश्चनाष्टादशविधः संजातः । लोकाचार्यो वेदान्तदेशिकश्चानयोः प्रातिनिध्यं कुर्वाते । संस्कृतभाषाया वर्णाश्रमधर्मस्य च समर्थको वर्गः "वड़कलै" नाम्ना, द्रविडभाषाया वैष्णवानामाचाराणां समर्थकश्च "तेंगलै" नाम्ना ख्यातिमाप । अस्यामुत्तरायां परम्परायामेवोत्तरे भारते रामानन्दः प्रादुर्बभूव । रामानन्देन [1]वैष्णवमताब्जभास्करेऽष्टादशविध एष मतभेदः संक्षेपेण व्याख्यातः । एतद्विषयकाः केचन [2]स्वतन्त्रा ग्रन्था अप्यवलोक्यन्ते ।

रामानुजशिष्यस्य कूरेशस्य रामभक्ति परम्परा पाञ्चरात्रागमस्यागस्त्यसंहिता-माश्रित्य प्रावर्तत । पाञ्चरात्रागमीयास्त्रिविधाः संहिताः साम्प्रतमुपलभ्यन्ते । बाहुल्येन संहितासु चतुर्व्यूहवादस्यैव प्रतिपादनं विद्यते, किन्तु सन्ति काश्चन संहिताः, यासु कृष्णोपासनाया रामोपासनायाश्च विधानम् । रामानन्दस्य केषुचन ग्रन्थेषु तान्त्रिक-कर्मकाण्डस्य बाहुल्यं केचनाप्रासंगिकं मन्वते । एतच्च पाञ्चरात्रागमस्यैव तदानीन्त-नस्य प्रभाव इत्यवगन्तव्यम् । परवर्तिनि काले प्रादुर्भूते तान्त्रिके वाङ्मये दार्शनिक-सिद्धान्तानां योगविधीनां चापेक्षयाऽस्य बाह्यक्रियाकाण्डस्य विस्तार एव स हेतुर्येन वैदिककर्मकाण्डस्येव तान्त्रिकं कर्मकाण्डमपि हेयमिवोपेक्षितमिव संजातम् ।

तदेतस्मिन् तान्त्रिके वाङ्मयेऽत्युन्नतास्वाध्यात्मिकीषु भूमिकासु स्थितानां स्थितप्रज्ञानां महामानवानां सममेव पशुप्रायाणामुच्छृङ्खलानामज्ञानां च मनुष्याणामा-ध्यात्मिकविकासाय योग्यतानुरूपा रुच्यनुसारी पन्थाः समुपलभ्येत । महार्थमञ्जरीकार-महेश्वरानन्दप्रभृतिभियोगिभिर्जात्यादिदुराग्रहो[3] आगमवचनप्रामाण्येन पाशत्वेनाभिमताः, भगवत्पादानां शंकराचार्याणां [4]ब्रह्माद्वैतवादतोऽप्यत्युत्कृष्टमागमीयं तान्त्रिकं च दर्शनमिति च सप्रमाणं साधितम् । तान्त्रिके हि दर्शने जगदेतन्न मिथ्या, ब्रह्म च नानिर्वचनीयया माययाऽपि तु कर्तुमकर्तुमन्यथाकर्तुं समर्थया स्वामिन्नया स्वरूपया शक्त्या समुपेत इत्यङ्गीक्रियते ।

---

१. ग्रन्थेऽस्मिन् अष्टादश श्लोकेषु (९३-११०) स्वपक्षीया अष्टादशवादा विवृताः ।

२. अष्टादशभेदविचार-अष्टादशवादप्रभृतीनां ग्रन्थानां मातृका अड्यारपुस्तकालया-दिषु संरक्षिताः सन्ति । तदयमष्टादशवादानां संग्रहात्मकः श्लोकः ।

भेदः स्वामिकृपाफलान्यगतिषु श्रीव्याप्त्युपायत्वयो-
स्तद्वात्सल्यदयानिरुक्तिवचसोर्न्यासे च तत्कर्तरि ।
धर्मत्यागाविरोधयोः स्वविहिते न्यासाङ्गहेतुत्वयोः
प्रायश्चित्तविधौ तदीयभजनेऽणुव्याप्तिकैवल्ययोः ।। इति ।।

३. महार्थमञ्जरीपरिमले, पृ० १४५ (वाराणसेयसंस्कृतविश्वविद्यालयसंस्करणम्) ।

४. तत्रैव, १३० पृष्ठमवलोकनीयम् ।

उपासनाविधौ कर्म-योग-ज्ञानानामपेक्षया भक्तेर्गरीयस्त्वख्यापनं नाम तन्त्रशास्त्रस्य विशिष्टः सिद्धान्तः । आल्वार्-अडियार् सिद्ध-नाथ सन्तप्रभृतीनामुपदेशेषु तदेतस्य चूडान्त उत्कर्षो द्रष्टुं शक्यते। एतदेव तत्पाथेयमासीद् येन हि परतन्त्रतावेलायां राष्ट्रमेतत् स्वीयां संस्कृतिं साहित्यं च रक्ष। साम्प्रतिको गांधिवादो भक्तिधाराया एव नूतना परिणतिः। विश्वसिमो वयं यदजस्रं प्रवहन्त्यां भारतीयसंस्कृतिपरम्परायामद्यापि वर्तते जीवनदायिनी सा शक्तिर्यया न केवलं नूतनभारतराष्ट्रस्य निर्माणाय अखण्डाया भारतीयायाः संस्कृतेः, अपि तु साम्प्रतिकस्य जाति-भाषा-राज्य-राष्ट्रादि-संकुचितभावनाग्रस्तस्य कलहायमानस्य विनाशोन्मुखस्य मानवस्य त्राणाय विश्वसंस्कृतेरपि द्वाराण्युद्घाटितानि स्युरिति। प्रायः साम्प्रतिके जगति वर्तमानानां सर्वेषां धर्माणामनुयायिनो जना निवसन्त्यत्र भारते वर्षे। निबन्धेऽस्मिन् व्याख्यातप्रायया तान्त्रिक्या भक्तिपरम्परया सूफीसम्प्रदायस्य, ख्रीष्टीयसम्प्रदायस्य यहूदीसम्प्रदायस्य च भक्तिपरम्पराणां समन्वयेन विकासं लम्भिता भारतीया संस्कृतिर्विश्वसंस्कृतितो नातीव भिन्ना स्यादिति शम् ॥

# संस्कृत व्याकरण दर्शनम्

**श्री कन्हैयालाल शर्मा, जयपुरम्**

१. दर्शन पद विवृतिः—

येन धौतागिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ।।

गीर्वाणवाणीव्याकरणदर्शनविषये वक्ष्यमाणस्य जनस्य मनसि दर्शन शब्दवृत्तौ-प्रथमं जिज्ञासा जायते । किन्नाम दर्शनमित्याकांक्षायाम् 'दृशिर्' प्रेक्षणे इत्यस्माद्धातोः कर्मणि ल्युट् प्रत्ययान्तात् दर्शनशब्दादवलोकनमित्यर्थ उपपद्यते । प्रेक्षणमित्यस्य प्रकृष्टमीक्षणं सम्यगवलोकनमित्यर्थः । अबलोकन क्रिया हि चक्षुरिन्द्रिय द्वारा लौकिकानां घटपटादि पदार्थानां चाक्षुषप्रत्यक्षेषु प्रयुक्ता भवति । परन्नहि लौकिकानां पदार्थानां दर्शनमेव दर्शनम् किन्तु प्राचीनकालादेव दर्शनशब्दस्य व्यापकार्थावगतौ प्रसिद्धिः परम्परया विद्यते । अनादि कालादेवप्रवर्तमानस्य जगतः, जीवस्य, परमात्मनः ऐहलौकिकस्य पारलौकिकस्य वा कर्मणः पुनर्जन्मनः, जीवात्मनोरैक्य पार्थक्ययोर्वा, सुखदुःखयोश्चानुभूतेर्विषये मानवस्य जिज्ञासायामेव दर्शनशब्दस्य व्यापकार्थप्रवृत्तिर्विद्यते । एतेन भारतीयवैदिक धर्मविषये षड्दर्शनानां विभिन्न तत्त्वज्ञानानि सर्वतः शंकाकुलितानां जनानां चेतांसि सर्वथो परमयन्ति । दर्शनार्थे प्रयोगः यथा वेदे—

ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन् अपावृणु सत्यधर्माय दृष्टये ।।

ईशावास्योपनिषदः अस्मिन् मंत्रे सत्यधर्मस्य दृष्ट्यै हिरण्मयपात्रपिहितमुखोद्घाटनाय पूषादेवः प्रार्थ्यते अतः सत्यधर्मस्य सत्तत्वस्य च दर्शनमेव दर्शनशास्त्राणां मुख्यमुद्देश्यम् । अन्यत्रापि वेदे स्थाने-स्थाने 'दृशिर्' धातोः प्रयोग उक्तार्थे विहितः । यथा—आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यः निदिध्यासितव्यः । आत्मनि खलु अरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् इत्यादिषु ।

'अभेददर्शनं ज्ञानम्' श्रीमद्भगवद्गीतायाञ्च प्रोक्तम्—विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति इत्यादि वचनैः। तत्त्वज्ञानावबोध एव दर्शनस्य विषयः। आत्म ज्ञानमेव मुख्यं दर्शनम्। तच्च दर्शनमास्तिकनास्तिक भेदैः भारतीय दर्शनेषु प्राचीनकालादेवोपलभ्यते। आस्तिकदर्शनेषु न्याय वैशेषिक पूर्वोत्तरमीमांसा सांख्ययोग दर्शनानि, नास्तिक दर्शनेषु चार्वाक बौद्ध जैन दर्शनानि च वरीवर्तन्ते। माधवाचार्यस्य सर्वदर्शन संग्रहे रामानुजीय-पूर्णप्रज्ञनकुलीश-पाशुपत शैव-प्रत्यभिज्ञारसेश्वर पाणिनीयेति सप्तदर्शनानां पूर्वोक्तानान्नवदर्शनानाञ्च विवरणम् प्रौढ्या विहितम् ग्रन्थकृता।

श्रीमाधवाचार्यस्य "सर्वदर्शनसंग्रहः" भारतीय दर्शनानां समीक्षात्मकमध्ययनं व्याख्यानञ्च विद्यते। भारतीय दर्शनस्य मुख्यं लक्ष्यं दुःखहानम् सुखप्राप्तिश्च अतएव सांख्यकारिकायाम् प्रोक्तम्—"दुःखत्रयाभिघाताद् जिज्ञासा तदपघातके हेतौ इति। किमस्ति दुःखं, किमस्ति सुखमिति प्रश्ने वैशेषिक दर्शने प्रोक्तम्—"सर्वेषामनुकूलवेदनीयं सुखं प्रतिकूलवेदनीयञ्च दुःखम्। परन्नह्येत सम्भाव्यते। यदेकस्य सुखम् तदन्यस्य दुःखम्। यदेकस्य दुःखम् तदेवान्यस्यसुखमित्यादिषु दोषेषु सत्सु धर्मार्थकाममोक्षेषु चतुर्विधेष्वपि पुरुषार्थेषु मोक्षप्राप्तिरेव परमपुरषार्थः सैवनिरतिशयानन्दप्राप्तिश्च अतो दुःखनिवृत्तिपूर्वक परमानन्द प्राप्तिरेव दर्शनशास्त्राणां मूलं लक्ष्यम्। नास्तिकदर्शनान्यपि ईश्वरसत्तास्वीकरणं विना दुःखात्यन्तनिवृत्तेरेव मोक्षइत्यनुमन्यते। उक्तं हि चार्वाकेण—

यावज्जीवेत्सुखं जीवेन्नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

भौतिकदेहादिजन्यं सुखमेव मोक्षः। इदं चार्वाक दर्शनम् लोकायतिकमुच्यते। एते प्रत्यक्षप्रमाणवादिनः स्वमतपुष्टौ श्रुतिमुदाहरन्ति—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्तीति।"

२. **व्याकरणाध्ययनप्रयोजनम्—**

परमार्थतः परमानन्दसन्दोह प्राप्तिरेव दर्शनस्य मुख्यं प्रयोजनमतः सम्प्रति व्याकरणाध्ययनस्य प्रयोजनमुपवर्णयतास्मिञ्छास्त्रे यानि दार्शनिक तत्त्वानि तान्युपवर्णयिष्यन्ते।

महाभाष्ये भगवता पतञ्जलिना व्याकरणाध्ययनस्य प्रयोजनं वदता प्रोक्तम् "अथ शब्दानुशासनम्" तस्माद् व्याकरणशास्त्रस्य शब्दानुशासनं भवति साक्षात्प्रयोजनं पारम्पर्येण तु भवन्ति वेदरक्षादीनि अतएवोक्तं भाष्यकारेण "रक्षोहागमलध्वसंदेहाः प्रयोजनं साधुशब्दप्रयोगवशादभ्युदयोऽपि भवति। तथा चोक्तं कात्यायनेन—"शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देनेति।". महाभाष्येऽप्युक्तम्—"एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति।" काशिकायामप्युक्तम्—

नाकमिष्टसुखं यान्ति सुयुक्तैर्बद्धवाग्रथैः।
अथपत्काषिणो यान्ति ये चिक्कयित भाषिणः॥

शास्त्रमिदं वेदानां प्रथममंगम् । अतएवोक्तं महावैयाकरणेन श्रीभर्तृहरिणा—

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।

प्रथमंच्छन्दसामंगं प्राहुर्व्याकरण बुधा ।।

बुधाः महर्षयः तस्य वेदाख्यस्य ब्रह्मणः आसन्नं साधुत्वप्रतिपत्तये प्रकृति प्रत्यय विभागान्वाख्यानस्वरूपसंस्कारजनकतया ऊह्यस्य 'सूर्याय जुष्टं निर्वपामि' इत्यादिकस्य सत एव वेदखण्डस्यालस्यादिना नाम्नातस्य यथावस्थितलिंगवचनाद्यवगमेन सम्यग् विपरिणमय्यानुमापकतया च साक्षादुपकारकम् । अनेन वेदरक्षा रूपमूहरूपञ्च प्रयोजनमुक्तम् । तपसामदृष्टफलजनकानां ब्रह्मचर्याधः शयन चान्द्रायणादीनां, काम्यानाम्वा मध्ये उत्तमं दृष्टफल जनकतया "ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्च' इति श्रुत्या नित्यतया एकः शब्दः सम्यग् ज्ञातः इति काम्यतया वा श्रेष्ठं तपः इत्यागमरूपं प्रयोजनमुक्तम् । छन्दसाम् वेदानां प्रथममङ्गं व्याकरणं प्राहुः तथा च भाष्यम् प्रधानञ्च षट्स्वङ्गेषु व्याकरणं प्रधाने च कृतो यत्नः फलवान् भवति । लाघवरूपञ्च चतुर्थं व्याकरणाध्ययन प्रयोजनमुच्यते—

प्राप्तरूपविभागाया: यो वाचः परमोरसः ।

यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ।। वा. १.१२ ।।

प्राप्तः वर्णपदवाक्यलक्षणरूपविभागो यया तस्याः वाचः यः परमः रसः सारः यत्तत् श्रुति प्रसिद्धं पुण्यतमं ज्योतिः प्रकाशाप्रकाशयोः प्रकाशकं शब्दाख्यम् तस्य साधु शब्द समूहस्य ज्ञानेऽयं सामान्यविशेषलक्षणः व्याकरणरूपः आञ्जसः सरलः मार्गः विद्यते । उक्तं हि "इह त्रीणि ज्योतींषि त्रयः प्रकाशस्वरूप पररूपयोरवद्योतकाः योऽयं जातवेदाः यश्च पुरुषेष्वान्तरः प्रकाशः यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः तत्रैतत्सर्वं निबद्धं यावत्स्थास्नु चरिष्णु च इति ।

संदेहाभावरूपं पञ्चमं प्रयोजनमुच्यते-भाष्यकृता—

"अर्थ प्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।

तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।।"

शब्दस्य द्वे रूपे शब्दत्वं साधुत्वञ्च तत्राद्यस्य श्रोत्रेन्द्रियग्राह्यत्वेऽपि द्वितीयं व्याकरणादेव गृह्यते ।

यथा—

शब्दार्थ संबंधनिमित्ततत्वं वाच्या विशेषेऽपि साध्वसाधून् ।

साधुप्रयोगानुमितांश्च शिष्टान्न वेद यो व्याकरणन्नवेद ।।

एवं महाभाष्योक्त व्याकरणाध्ययन प्रयोजनानि निर्वर्ण्य सम्प्रति मुख्यं प्रयोजनमपवर्ग प्राप्तिरेवेत्युच्यतेतद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् । पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।। वा. १-१४ ।।

तद्व्याकरणमपवर्गस्य-मोक्षस्य द्वारम् तद्यथा साधु शब्दज्ञान पूर्वकाद् शब्द-प्रयोगादभिव्यक्तधर्म विशेषः महान्तं शब्दात्मानं प्राप्नोति । तथाहि व्याकरण संस्कृत चेतसा पूर्व वैखरीद्वारामध्यमामधिगम्य वाग् विकाराणां 'प्रकृति' समस्तशब्दार्थकारण भूताम्पश्यन्तीमनुगच्छति । ततः शब्दपूर्वयोगाभ्यास भावनावशात् अनावृत्तां विशुद्धां पश्यन्तीं पराख्यां प्राप्नोतीति । तत्प्राप्तिश्चतत्तादात्म्यं तदेवापवर्गः । वाङ्मलानां चिकित्सितम्, सर्वविद्यानां पवित्रमिदं शास्त्रं यदाहुः ।

"आपः पवित्रं परमं पृथिव्याम् अपां पवित्रं परमं च मंत्राः ।
तेषाञ्च सामर्गयजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥"

व्याकरणस्य लौकिकशब्दानुशासनरूपमपिप्रयोजनम्—

यथार्थजातयः शब्दाकृतिनिबन्धनाः ।
तथैवलोके विद्यानामेषाविद्यापरायणम् ॥ वा. १-१५ ॥

**३. व्याकरणे दार्शनिक तत्त्वानि—**

(शब्दस्य ब्रह्मत्व निरूपणम्) शब्दस्य परेण ब्रह्मणा साम्यमिति भगवता भाष्यकृता व्याकृतम्—

"चत्वारि शृंगास्त्रयोऽस्यपादाः द्वेशीर्षे सप्तहस्तासोऽस्य ।
त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश ॥

चत्वारि शृंगाणि-चत्वारि पदजातानि नामाख्यातोपसर्ग निपाताश्च, त्रयोऽस्य-पादाः लडादिविषयाः । त्रयो भूतभविष्यद् वर्तमान कालाः द्वेशीर्षे द्वौ शब्दात्मानौनित्यः कार्यश्च व्यंग्य व्यञ्जक भेदात् । सप्तहस्तासोऽस्य तिङा सह सप्त सुब् विभक्तयः । त्रिधा बद्धः त्रिषु स्थानेषु उरसि कण्ठे शिरसि च बद्धः वृषभः इति वृषभत्वेन रूपणं क्रियते । वर्षणात् वर्षणञ्च-ज्ञानपूर्वकानुष्ठानेन च फलप्रदत्त्वम् । रोरवीति शब्दं करोति रौतिः शब्द कर्मा महोदेवो मर्त्यानाविवेश । महान् देवः शब्दः मर्त्यान् मरण-धर्माणः मनुष्यास्तानाविवेश । जगन्निदानं स्फोटाख्योनिरवयवो नित्यः शब्दो ब्रह्मैवेति हरिणाभाणि ब्रह्म काण्डे --

"अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥"

अनादिनिधनमुत्पादविनाशरहितमतएवनित्यम् । पूर्वापरी भावरहितमत उप-संहृतक्रमञ्च यदक्षरम्विभक्त ककारादि वर्णरूपायाः वैखर्याः वाचोनिमित्तम् सत् बाह्यार्थ वासनया अविद्यारूपया अर्थ भावेन घटपदादिरूपेण विवर्तते प्रतीयते । यतः शब्दाख्यात् ब्रह्मणः जगतः विकारजातस्य प्रक्रिया उत्पत्तिर्व्यवहारो वा तत् शब्द तत्त्वं परावाग्रूपं ब्रह्मैवेति । इदमत्र तत्त्वम् सर्वग्राह्यग्राहकाकारवर्जिता, अपरिच्छिन्ना

सर्वतः संहृतक्रमा परावाग् ब्रह्म तदेवाविद्या लक्षणयान्तःपश्यदवस्थया भोक्तृतारूपया विशिष्टं ज्ञेयरूपशून्यं चैतन्य मात्रं जीव इत्यभिधीयते । प्रोक्तं हि श्रीमद्भागवते—

"स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममपेत्यरूपं मात्रा स्वरा वर्ण इति प्रविष्टः ।।

सैव परापश्यन्तीरूपावाग् अर्थप्रतिपादनेच्छयोपलक्षिता मनोविज्ञानरूपत्वे आस्थिता मध्यमा वागुच्यते सैव च वक्त्र कुहरं प्राप्ता कण्ठादिषु विभक्ताकाररूपा वैखरीवागुच्यते । अतः सैव बाह्यार्थवासनया अविद्यारूपया क्रमेण घट पदाद्याकारैर्विवृत्ता चक्षुरादिना गृह्यते । उक्तं हि शिवदृष्टौ—

इत्याहुस्ते परं ब्रह्म यदनादितयाक्षयम् ।
तदक्षरं शब्दरूपं सा पश्यन्ती पराहि वाक् ।।

स एवात्मा सर्वदेह व्यापकत्वेन वर्तते ।
अन्तः पश्यदवस्थैव चिद्रूपत्वमरूपकत्वम् ।।

तावद्यावत्पराकाष्ठा यावत्पश्यत्यनन्तकम् ।
अक्षादिवृत्तिभिर्हीनं देशकालादि शून्यकम् ।।

सर्वतः क्रम संहार मात्रमाकारवर्जितम् ।
ब्रह्मतत्वं पराकाष्ठा परमार्थस्तदेवसः ।।

आस्ते विज्ञान रूपत्वे स शब्दोऽर्थविवक्षया ।
मध्यमा कथ्यते सैव बिन्दुनाद मरुत् क्रमात् ।।

सम्प्राप्तावक्त्रकुहरं कण्ठादिस्थान भागशः ।
वैखरी कथ्यते सैव बहिर्वासनया क्रमात् ।
घटादिरूपैर्व्यावृत्ता गृह्यते चक्षुरादिना ।

यथा कार्येषु कारणधर्म समन्वय दर्शनात् वैशेषिकैः घटादि कार्यस्य पृथिवीत्वेन तत्कारणस्य परमाणोः पृथिवीत्वम् तथैव घटादिषु शब्दरूपानुगमात् तत्कारणस्यापि शब्दरूपत्वमास्थितम् ।

घटादिषु शब्दरूपानुगमश्चेत्थं जाजायते । प्रत्यक्षं तावज्जात्यादीनां मिथो विशेष्य विशेषण भावानवगाहि जात्यादिस्वरूपावगाहि घटघटत्वे इत्येवं रूपं निर्विकल्पक गौः शुक्लः चलोडित्थः इत्यादि विशेष्य विशेषण भावावगाहि सविकल्पकम्बाद्विविध-मपि ज्ञानं शब्दानुविद्धमेव । इति सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयेनान्विताः इति नास्ति सोऽर्थः यः कथञ्चित् कदाचित् क्वचिन्नामधेयेन वियुज्येत । अतएव शब्दार्थयोः तादात्म्यमुक्तं भर्तृहरिणा—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते ।।"

सर्वमपि ज्ञानं शब्दविषयकम् शब्दार्थयोरभेदात् । अत्रानुव्यवसायरूपं प्रमाणमुच्यते । सर्वं ज्ञानं शब्देनानुविद्धमिव संसृष्टमिवभासते । अतएवोक्तं शारदा तिलके—

नित्यानंद वपुर्निरन्तरगलत्पञ्चाशद्वर्णैः क्रमात्
व्याप्तं येन चराचरात्मकमिदम् शब्दार्थरूपं जगत् ।
शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतम्
तद्वोऽव्यादनिशं शशांक सदनं वाचामधीशंमहः ।।

बालमूकादीनामपि विज्ञानम् शब्दानुव्याधवदेवानादिशब्दभावनावशात्— इति वैयाकरण मतमुपन्यसद्भिः नामसंसर्गविषयकत्वं सविकल्पकलक्षणम्वदद्भिः कीर्ति दिङ्नागादिभिः सविकल्पके शब्दभानमभ्युपगतम् । इन्द्रियार्थसन्नि : र्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमितिप्रत्यक्ष लक्षणेऽव्यपदेश्यमिति विशेषणं वदता गौतमेन शब्दविषयत्वमेव शाब्दत्वंनतु शब्दजन्यत्वम् इत्यशब्दोपायेऽनुमेयादौ न शब्द सम्भेदेनार्थाधिगमोभवेदस्तितु इति च वाचस्पतिमिश्रेण च शाब्दानुमित्योरपि शाब्दमानमभ्युपगतम् ।

४. जगतः कार्यजातं शब्दादेव—

एकस्यैव शब्दब्रह्मणः जगतः विचित्र घटपदादिकार्यजनकत्वं विद्यते । यथा—

एकमेव यदाम्नातं भिन्नं शक्ति व्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनैव वर्तते ।।

यत् शब्द ब्रह्म "एकमेवाद्वितीयम्" "अद्वैत एक एवाभवत्" "सलिल एवैको द्रष्टा" इत्यादि श्रुतिभिरेकमेवाम्नातं तत् शक्ति व्यपाश्रयात्, शक्तीनां घटपटादि विचित्र कार्यं जनन योग्यता रूपाणां व्यपाश्रयात् आश्रयणात् शक्ति गतभेदारोपाद् भिन्नं पृथग् पृथग्रूपम् "प्रणव एवैक स्त्रेधा व्यभज्यत" इति श्रुतेः । अत्र सलिल शब्देन ब्रह्म गृह्यते । प्रणवोऽत्राविवृत्तं ब्रह्म त्रि प्रकारेण ऋक् साम यजुः रूपेण व्यभज्यत । तथा च ब्रह्मणः एकत्वेऽपि तद्गत शक्ति वैचित्र्याद् भेदमारोप्य विचित्रकार्य जनकत्वमिति । अपृथक्त्वेऽपि अभिन्नत्वेऽपि ब्रह्मशक्तिभ्यः पृथक्त्वेनैव वर्तते । आवर्त बुद्बुदाख्या जल विकाराः परस्परं भिन्ना अपि जलमेव न ततो व्यतिरिक्ता इति घटपटादीनां भेदः पृथिव्याः एकत्वमिव विलक्षण कार्योदयानुमीयमान वैलक्षण्याः शक्तयः ब्रह्मणः एकत्वन्न विरुन्धन्ति—इति घटादिरूपेण भिन्नत्वेऽपि पृथिव्याः स्वतोऽभिन्नत्ववत् शक्तिरूपेण ब्रह्मणो भिन्नत्वेऽपि स्वतोऽभिन्नत्वमिति ब्रह्मणि नानात्वं काल्पनिकमेकत्वञ्च वास्तवमिति न तयोर्विरोधः ।

शब्द ब्रह्मनिष्ठशक्तीनां कार्यवैचित्र्योपपादकत्वे नित्यानां तासां सर्वदा सत्वात् न सर्वदा सर्वकार्योत्पाद इत्युच्यते—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षट् भावभेदस्य योनयः ।। वा. १.३ ।।

यस्य ब्रह्मणः अध्याहितकलां निमेषादे क्रियोपहित नानारूपतां कालशक्ति-मुपाश्रिता जन्मादय. "जायतेऽस्ति विपरिणमते वर्धते ह्रसति नश्यतीत्येवं रूपाः षड्विकाराः भावभेदस्य योनयः कारणानि भवन्ति । सर्वाः कारण शक्तयः कालेनानुज्ञाता सत्यः जनयन्ति कार्यम् प्रतिबद्धाः सत्यो न जनयन्ति कार्यम् । अतएव काल-सूत्रान्तर्गतं विश्वं प्राप्तकाल प्रसूयते इति जायते प्रसूततयावतिष्ठते इत्यस्तीति व्यपदिश्यते, अवस्थितस्यविकारापत्तिः विपरिणमते, ततो विपरिणमन्मुहूर्तमपि नावतिष्ठते इति वर्धते यावदनेन वर्धितव्यं ततोऽपक्षीयते एवमेकमेव ब्रह्म सर्व व्यवहार-हेतुरित्युच्यते—

एकस्य सर्वबीजस्य यस्यचेयमनेकधा ।
भोक्तृ भोक्तव्यरूपेण भोगरूपेण च स्थितिः ।। वा. १-४ ।।

लोक व्यवहारार्यैवैकस्य ब्रह्मणः भोक्ता-पुरुषः भोक्तव्याः विषयाभोगः विषयोप-भोगजन्य सुखदुःखाद्यनुभव इत्यनेकधा स्थितिर्भवति ।

**५. शब्द ब्रह्मणः प्राप्त्युपायः**

तस्य ब्रह्मणः प्राप्त्युपायश्च वेद एवेति—

प्राप्त्युपायोऽनुकारश्च तस्यवेदो महर्षिभिः ।
एकोऽप्यनेक वर्त्मेव समाम्नातः पृथक् पृथक् ।। २ ।।

एकोऽपि पृथक्-पृथक् समाम्नातोऽभ्यस्त. अनेकवर्त्मेव ऋक् यजुः सामाथर्व-भेदेन चतुर्विध इव भवति । ब्रह्मणः प्राप्तिश्च ममाहमित्यहंकार ग्रन्थिनमतिक्रममाणम् । अहकार चिदात्मनोस्तादात्म्याध्यासएव ग्रन्थिः । तत् निवृत्तिश्च ग्रन्थि समतिक्रमः । तदुक्तं पञ्चदश्यां चित्रदीपे—

अप्रवेश्य चिदात्मानं पृथक् पश्यन्नहंकृतिम् ।
इच्छँस्तुकोटि वस्तूनि न बाधो ग्रन्थि भेदतः ।।

वाचः सस्कारमाधाय वाचं ज्ञानेनिवेश्य च ।
विभज्य बन्धनान्यस्याः कृत्वा तांच्छिन्नबन्धनाम् ।।

ज्योतिरान्तरमासाद्यच्छिन्न ग्रन्थि परिग्रहः ।
परेण ज्योतिषैकत्वं छित्वा ग्रथीन् प्रपद्यते ।।

"चत्वारि श्रृंगा" इति मंत्र व्याख्यावसरे महता देवेन नः साम्यं यथा स्यादित्य-ध्येयं व्याकरणम् इति महाभाष्यप्रतीकमुपादाय महता परेण ब्रह्मणा इति कैयटः ब्रह्मणा शब्द ब्रह्मणा सायुज्यमिति नागेशेनोक्तंभर्तृहरिणाप्युक्तम्—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ।।

द्वौ शब्दात्मानौ कार्यो नित्यश्च तत्रान्त्यः सर्वेश्वरः सर्वज्ञः सर्वशक्तिमान् शब्दवृषभस्तस्मिन् खलु वाग् योगविद् शास्त्रज शब्द ज्ञान पूर्वक प्रयोगेणक्षीणपापः पुरुषः विच्छिद्याहंकार ग्रन्थीनत्यन्तं संसृज्यते । ब्रह्मणः सकाशात् प्रथमतः वेद एक एव विवर्तते ततोऽध्येतॄणामशक्तेः प्रविभक्तः पुनरुपसंहृतभेदः तदुक्तं भागवते—

वेदमेकं चतुष्पादं चतुर्धा व्यभजत् प्रभुः ।
ब्रह्मणो वचनात्तातलोकानां हितकाम्यया ।।

वेद मूलकत्वादेव स्मृतीनामपि प्रामाण्यम् यथा—

स्मृतयो बहुरूपाश्च दृष्टा दृष्टप्रयोजनाः ।
ता एवाश्रित्य लिंगेभ्यो वेदविद्भिः प्रकल्पिताः ।। वा. ।।

दर्शन भेदा अपि वेदादेव भवन्ति यथा—

तस्यार्थवाद रूपाणि निश्चित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादाः बहुधा मताः ।

"रूचीनां वैचित्र्यादृजु कुटिल नाना पथजुषाम्" इत्युक्त्या एकत्विनां द्वैति-नाञ्च प्रवादाः भिन्नरूपेण ममैव दर्शनं सत्यमित्येवं रूपाः प्रवादाः अनल्पादराः दर्शन-भेदाः विद्यन्ते । एकत्विनः अद्वैतिनः "एकमेवाद्वितीयम्" आत्मैवेदं सर्वम्" "एतदात्म्य-मिदं सर्वम्" "तत्त्वमसि" "नेहनानास्तिकिञ्चन" 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः" इत्यादि श्रुति बलेन जीव ब्रह्मणोरैक्यं, ब्रह्म व्यतिरेकेण च जगतो भावञ्चातिष्ठमानाः "द्वा सुपर्णाः" य आत्मनितिष्ठन्" "अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादि द्वैतबोधक श्रुतीनां च ज्ञापकात् सत्यं तत्त्व किमित्युच्यते—

सत्या विशुद्धि स्तत्रोक्ता विद्यैवैकपदागमा ।
युक्ताप्रणवरूपेण सर्ववादाविरोधिनी ।। वा. १-६ ।।

एकं पदं प्रणवरूपमागमोबोधकं यस्या एवम्भूताविशुद्धिः विद्या सत्या उक्ता । सा च विद्या प्रणवरूपेणोंकाररूपेण युक्ता सर्ववादाविरोधिनी विद्यते । प्रणवो हि ब्रह्म स्तौति इति प्रणवेन ब्रह्मतादात्म्यात् प्रणव एव ब्रह्म तदेव सत्यं तद्विवर्ताश्चान्येमिथ्या

इति न मिथ्या भूतेन द्वैतेन सत्यस्याद्वैतस्य विरोध इति । एतदेवाभिप्रेत्य गौडपादाचार्यैरुक्तम्—

स्वसिद्धान्त व्यवस्थासु द्वैतिनोनिश्चिता दृढम् ।
परस्परं विरुध्यन्ते तैरयन्न विरुध्यते ।।

अद्वैतं परमार्थोहि द्वैतं तद् भेद उच्यते ।
तेषामुभयथा द्वैतं तेनायं न विरुध्यते ।।

कपिलकणाद बुद्धार्हतादि दृष्ट्यनुसारिणः द्वैतिनः रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तं परस्परं द्विषन्ति । अद्वैतिनो हि सर्वानन्यत्वात् अतः न विरुध्यन्ते इति तदर्थः यतः अद्वैतं परमार्थः द्वैतञ्च तद्भेदः तद् कार्यम् तद् विवर्तः इति यावत् । 'एकमेवाद्वितीयंतत्तेजोऽसृजत ।'' इति श्रुतेः अतो न मिथ्याभूतेन द्वैतेन विरोध इति ।

(६) **प्रणवस्य परब्रह्म सारूप्यम्**—

सर्वेऽपि विद्याभेदाः वेदादेव प्रतायन्ते—

विधातुस्तस्य लोकानामंगोपांग निबन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्ञान संस्कार हेतवः ।।

लोकानां विधातु उपदेष्टृत्वेन सर्वव्यवस्थापकस्य सर्वशब्दार्थं प्रकृति रूपत्वेन सर्व स्रष्टुश्च तस्य प्रणवरूपस्य वेदस्य अंगोपांगनिबन्धनाः अंगानि-विधयः उपांगानि मंत्रार्थवादोपनिषदादयः निबन्धनं मूलं येषान्ते अथवा अंगानि-व्याकरण शिक्षा निरुक्त कल्प ज्योतिषच्छन्दः शास्त्राणि, उपांगानि-पुराण न्याय मीमांसा-धर्मशास्त्राणि निबन्धनं येषु ते ज्ञान संस्कार हेतवः विद्याभेदाः व्याकरणादयः प्रतायन्ते-विस्तार्यन्ते । "सर्वा वाचो वेदमनुप्रविष्टा'' इति उपदेष्टृत्वञ्च वेदस्य—

सर्वेषान्तु स नामानि कर्माणि च पृथक् पृथक् ।
वेद शब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।

इति मनुनाभिहितम् ।

सर्वं शब्दार्थ प्रकृतित्वं च प्रणव रूपस्य वेदस्य "ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नाना रूपा भवति'' इति श्रुतेः । बह्वी-वाक्य-पदादि रूपा, नाना रूपा घट पटादि रूपा च । स्पष्टीकृतञ्चैतद् "ओमित्येतदक्षरमिदंसर्वमिति श्रुति व्याख्याने श्रीमच्छंकराचार्यैः भगवत्पादैः । 'यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्यतिरेकात्, अभिधानस्य चोंकाराव्यतिरेकात् ओंकार एवेद सर्वम्'' "वाचारम्भणं विकारो नामधेयमिति" च—

वाचया केवल मारभ्यते विकार जातं न तु तत्त्वतोऽस्ति यतो नामधेयमात्रम्" तदुक्तं शंकराचार्यै परञ्च ब्रह्माभिधानाभिधेयोपायपूर्वकमेव गम्यते इत्योंकार एव रज्वादिरिव सर्पादिविकल्पस्यास्पदमद्वय आत्मा परमार्थः सन् प्राणादि विकल्पस्यास्पदं यथा तथा सर्वोऽपि वाक् प्रपञ्चः प्राणाद्यात्मविकल्प विषय ओंकार एव। प्रणवः द्विविधः परोऽपरश्च। परः ब्रह्मात्मकः अपरः शब्दात्मकः तथा चोक्तं सूत संहितायाम्—

परः परतरं ब्रह्म ज्ञानानन्दादि लक्षणम्।
प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावत।
अपरः प्रणवः साक्षाच्छब्द रूपः सुनिर्मलः।
प्रकर्षेण नवत्त्वस्य हेतुत्वात्प्रणवः स्मृतः॥

श्रीमद् भागवतेऽप्युक्तम्—

समाहितात्मानो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।
हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते॥
ततोऽभूत्त्रिवृदोंकारो योऽव्यक्त प्रभवः स्वराट्।
यत्तल्लिगं भगवतो ब्रह्मणः परमेष्ठिनः॥
शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक्।
येन वाक् व्यज्यते यस्य व्यक्तिराकाश आत्मनः॥
स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः।
स सर्व मंत्रोपनिषद् वेद बीजं सनातनम्॥
तस्य ह्यासन् त्रयो वर्णा अकाराद्या भृगूद्वह।
धार्यन्ते यैस्त्रयो भावाः गुण नामार्थ वृत्तयः॥ १२ स्कन्धे
अध्याये प्रणवस्य ब्रह्म वाचकत्वमुक्तम्।
ओंकारस्य परब्रह्मत्व प्राप्ति साधनत्वञ्च विद्यते। यथा—

'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्" "ओमिति ब्रह्म ओमितीदं सर्वम् ओमित्येदनुकृतिह्स्मवा,'

"एतदालम्बनं श्रेष्ठमेतदालम्बनं मतम्।
एतदालम्बनं ज्ञात्वा ब्रह्म लोके महीयते॥

इत्यादि श्रुतिभिर्बोध्यते। अस्मादेवोंकारात्त्रयी विद्या प्रभवति। "तेनेयं त्रयी विद्या विवर्तते" इति श्रुतेः।

७. व्याकरणाच्छब्द ब्रह्मसाक्षात्कार:—

व्याकरणस्य शब्द ब्रह्म साक्षात्कार जनकत्वं प्रोच्यते श्रीहरिणा—

इदमाद्यंपदस्थानं सिद्धि सोपान पर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।। (वा० १-१६)

सिद्धिर्मोक्षः तस्य या अन्तरालावस्थास्ताः तत्प्राप्तौ सोपान तुल्यत्वात् सोपानानि तेषां विभागाः पर्वाणि तेषां मध्ये इदं व्याकरणमाद्यं पद स्थानम् पर्व इत्यर्थः । मुमुक्षूणां कृते राजपद्धतिः राजमार्गतुल्यः । ननु "आत्मा वाऽरे द्रष्टव्यो श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्या प्रत्यगात्म साक्षात्कारस्यैव मोक्ष हेतुत्वश्रवणात् कथं व्याकरणस्यमोक्षहेतुतेत्याशंकां समाधत्ते श्रीभर्तृहरिः—

अत्रातीत विपर्यासः केवलामनुपश्यति ।
छन्दसश्च्छन्दसां योनिमात्माच्छन्दोमयींतनुम् ।। वा० १-२

यदेकं प्रक्रिया भेदैः बहुधा प्रविभज्यते ।
तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते ।। (वा० १-२२)

यदेकं ब्रह्म प्रक्रिया भेदैः न्याय सांख्य वेदान्तादि दर्शनैः कालापादि व्याकरण भेदैर्वा बहुधा कर्तृत्वोदासीनत्व विवर्तोपादानत्वादिना वर्ण पद वाक्यादि भेदेन वा प्रविभज्यते तत् परं ब्रह्म आन्तर प्रणवरूपं व्याकरणमागम्य मध्यमादिवागुन्मेषण द्वाराधिगम्यते । जगत्कारणस्य "सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्" "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" इत्यादि श्रुतिभिः सत्यत्वमेकत्वं ब्रह्मत्वमात्मत्वञ्च यथा प्रतिपाद्यते, तथा "वागेवार्थं पश्यति वागेवार्थं ब्रवीति वागेवार्थं निहितं सन्तनोति वाच्येव विश्वंबहुरूपंनिबद्ध तदेतदेकं प्रविभज्योपभुंक्ते" "ओमिति ब्रह्म" 'वागेवेदं सर्वम्' इत्यादि श्रुतिभिः शब्दरूपतापि प्रतिपाद्यते इति शब्दब्रह्मैव जगत्कारणम् ।

एतदेव च वाग्व्यञ्जकत्वेन "यद् वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ।" इति ब्रह्मपदेनकेनोपनिषदि प्रोक्तम्—

शृणोति य इम स्फोट सुप्ते श्रोत्रे च शून्य दृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ।। इति ।

भागवतेन परमात्मपदेन, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति गीतया ईश्वर पदेन प्रतिपादितम् ।

चैतन्यस्यापिप्रकाशिका वागेवेति—

वाग्रूपता चेन्निष्क्रामेदव बोधस्य शाश्वतीः ।
न प्रकाशः प्रकाशेत साहि प्रत्यवमर्शिनी ।।

तच्चैकमपि अक्रमं शब्द तत्त्वाख्यं ब्रह्म आरोपित भेदकाल शक्ति सहकृतया नाना विध कार्य जनन शक्तिमत्या मायया "बहुस्यां··· प्रजायेय" इति संकल्प्य सक्रमं विचित्रं जगद्रचयति ।

तस्माद्यः शब्द संस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्ति तत्त्वज्ञस्तद् ब्रह्मामृत मश्नुते ।।

**शब्दस्य सर्वज्ञानानुविद्धत्वम्—**

प्रत्यय मात्रे शब्द स्वरूपानुगमं विद्यते । यथा—

इति कर्तव्यता लोके सर्वा शब्द व्यपाश्रया ।
यां पूर्वाहित संस्कारो बालोऽपि प्रतिपद्यते ।। वा० १-१२१
नसोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।। (वा० १-१२३)

सर्वेऽर्था सर्वथा सर्वदा सर्वत्र नामधेयेनान्विता नास्तिसोऽर्थो यः कदाचित् क्वचित् कथंचित् नामधेयेन वियुज्येत । प्रतीयमानाश्चार्थाः नामधेय सामानाधिकरण्येनावगम्यन्ते । गौरित्यर्थः अश्व इत्यर्थ इति नामधेयतादात्म्यमर्थानाञ्च सिध्यति । शैवमते विमर्शः प्रकाशश्चेतितत्त्व द्वयम्, तत्र विमर्शः प्रकाशस्य प्रकाशकः वैयाकरणानां विमर्शस्थानीया वागेव प्रकाशिका यथा—

वाग्रूपता चेन्निष्क्रामेदववोधस्य शाश्वतीः ।
न प्रकाशः प्रकाशेत साहि प्रत्यवमर्शिनी ।।

सर्वं ज्ञानमुपजायमानं नानुल्लिखित शब्दकमुपजायते येऽपि वृद्ध व्यवहारोपयोगानासादनेनानासादित शब्दार्थं सम्बंध विशेष व्युत्पत्तयो बालदारक प्रायाः प्रमातारस्तेऽपि तत्, सत्, किमित्यादि शब्द जातमनुल्लिखन्तः न प्रतियन्ति किमपि प्रमेयमतः शब्दोन्मेष प्रभाव प्राप्त प्रकाश स्वभावता सर्वेषां प्रत्ययानाम् इति वाग्रूपाननुगमे संविदः प्रकाश शून्यतया अनधिगत विषयः सर्वं एवान्धमूक प्रायः लोकः स्यात् । वागेव सर्वं विद्यानां कलानाञ्च बोधिका यथोक्तं भर्तृहरिणा—

सा सर्व विद्या शिल्पानां कलानां चोपबन्धनी ।
तद्वशादनिष्पन्नं सर्वं वस्तु विभज्यते ।। वा० १-१२५

वागव चैतन्यं सर्व प्राण्यधिष्ठितञ्च यथा—

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रामनतिक्रान्तं चैतन्यं सर्व जन्तुषु ।। वा० १२६

यावद् वाग्रूपतानुवृत्तिस्तावेदवान्तः संज्ञाः । सुख दुःख संविन्मात्राः वहिसंज्ञाः वाङ् निबन्धनाः लोक व्यवहाराश्च वाग्रूपानुगमाभावे उत्सीदेयुरतः चैतन्येनाविष्टा नहि काचिज्जातिरस्ति यस्यां स्वपर सम्बोधानुगमो वाचा न क्रियते स्थावरेषु स्वसम्बोधानुगम एव भवति । जंगमेषु मनुष्यादिषु स्वपर सम्बोधानुगमः वाचा एव क्रियते इति चिति क्रिया वाक् परिग्रह रहिता न भवति इत्येके । अन्ये च

वागेव चिति क्रिया रूपा यथा—

भेदोद्ग्राहविवर्तेन लब्धाकार परिग्रहा ।
आम्नाता सर्व विद्यासु वागेव प्रकृतिः परा ।।

एकत्वमनतिक्रान्ता वाङ् नेत्रा वाङ् निबंधनाः ।
पृथक् प्रत्यव भासन्ते वाग् विभागाः गवादयः ।।

षड् द्वारां षडधिष्ठानां षड् प्रबोधां षडव्ययाम् ।
तेमृत्युमति वर्तन्ते ये वै वाचमुपासते ।।

षड् द्वारामित्यस्यार्थः षड् विधा प्रतिभा सैव वाचः प्राप्त्युपायः यथा— स्वभावाचरणाभ्यासयोगादृष्टोपपादिताम् विशिष्टोपगताञ्चेति षड् विधां प्रतिभां विदुः । विश्वस्याखिलासु क्रियासु वागेव प्रेरयति । तदभावे च कश्चिदपिमर्त्यः काष्ठवत् निश्चेतनः सम्पद्यते यथा...

अर्थ क्रियासु वाक् सर्वान्समीहयति देहिनः ।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठ कुड्यवत् ।।

यथा प्राणिनः जाग्रदवस्थासु कार्येषु वाचा एव प्रवर्तन्ते तथैव स्वप्नेऽपि वागेव कार्यत्वेनावतिष्ठते । यथा

प्रविभागे यथा कर्ता तया कार्ये प्रवर्तते ।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते ।। वा० १२८

तथा च श्रुतिः "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत् ।"

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग् विधान् ।
सर्वेश्वरः सर्वमयः स्वप्नेभोक्ता प्रवर्तते ।।

शब्दमेवाविद्यावशं जीवमविद्या रहितं ब्रह्म च भवति अतः शब्दस्य परमात्मरूपतोपयुज्यते—

अपि प्रयोक्तुरा:मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥ वा० १३१

महाभारते शा' पर्वणि २७० अध्याये व्यासेनोक्तम्—

शब्द ब्रह्माणि निष्णातः परं ब्रह्माधिगच्छति ।

एवं शब्दानुशासन शास्त्रस्य निःश्रेयस् साधनत्वं सिद्धम् । अतः व्याकरण शास्त्रं परम पुरुषार्थ साधनतया सर्वैरेवाध्येयमिति शम् ।

# चित्रमीमांसाया एकमध्ययनम्

**ले० पट्टाभिरामशास्त्री विद्यासागरः**

मीमांसा शब्दः पूजितविचारवचन इत्यभिवदन्ति सर्वतन्त्रस्वतन्त्राः श्रीवाचस्पतिमिश्राः । निरुपपदं सोपपदञ्च मीमांसापदं तत्रतत्र प्रयुज्यमानमुपलभामहे । तत्र प्रथमं महर्षि जैमिनिना प्रवर्तिते शास्त्रे रूढम्, द्वितीयञ्च काव्यमीमांसा, रसमीमांसा, प्रमाणमीमांसा, चित्रमीमांसेत्यादिषु येनोपपदेन सम्बन्धं तदर्थस्य पूजित विचारावबोधकम् । 'चित्रमीमांसा' इत्यत्र चित्रपदं चित्रकाव्यपरम् । तच्च शब्दार्थभेदेन द्विविधमपि प्रकृतेऽर्थचित्रं काव्यं विवक्षितम् । एवञ्चार्थचित्रस्य काव्यस्यालङ्कारात्मनो यस्मिन् ग्रन्थे पूजितविचारः क्रियते स ग्रन्थश्चित्रमीमांसा पदाभिधेयः । मीमांसापदमिदं तत्र तत्र वेदेषूपलभ्यमानमतिप्राचीनं प्रामाणिकञ्च । भट्टपादाः स्मृत्यधिकरणे सर्वस्य संस्कृतवाङ्मयस्य प्रामाण्यव्यवस्थापनप्रसङ्गे—मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्न सम्प्रदायपण्डितव्यवहारैः प्रवृत्ता । न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः' (तं० वा० पृ० १६७ पूना० सं०) इति वदन्तो मीमांसाया लोकेऽनादिसिद्धत्वमप्यवद्योतयन्ति । अत एव प्राक्तना ग्रन्थकृतः स्वस्वग्रन्थानां वैशिष्ट्यावद्योतनाय मीमांसापदघटितस्य नाम्नःकरणे सम्प्रवृत्ता इति विज्ञायते । पदार्थतत्त्वावधारणाय निष्पक्षपातया सरण्या क्रियमाणो विचार उपादेयो भवतीति सर्वसम्प्रतिपन्नमिदम् । विवादग्रस्तानां वैदिकानां लौकिकानाञ्च विषयाणां निर्णयाय समष्ट्या व्यष्ट्या वा विचारः प्रवर्त्यते । विचारावसरे साधकबाधकयुक्तीनां सङ्ग्रहाय प्रमाणान्वेषणम्, अन्वेषितानां तेषां प्राबल्यदौर्बल्यनिश्चयः, विनिश्चितानां तात्पर्यनिर्णयाय तद्ग्राहकप्रमाणपुरस्सरं तत्तत्पूर्वापरसन्दर्भपरिशीलनम्, परिशीलितानां सन्दर्भाणां निश्चितार्थावधारणाय विविधन्यायानां समायोजनम्, एवं समायोजनेन पूर्वापरपक्षयोः फलफलि-भावसङ्कीर्तनम्, इत्येतावति क्रियमाणे प्रकृत विचारः परिपूर्णता प्रयाति । एवञ्च तस्य विचारस्य पूजनीयत्वे प्रामाण्य उपादेयत्वे च कस्सन्दिहीत ? इमां रीतिमनुसरन्तीयं चित्रमीमांसा सम्प्रवृत्तेति द्वित्रैरुदाहरणैः प्रदर्शयन् दीक्षितेन्द्राणां शैलीञ्चानितरसाधारणीं निरूपयितुमभिलषामि ।

प्राय आलङ्कारिका दार्शनिकान् विशेषतश्च मीमांसकान् छान्दसान् रसालङ्कारतत्त्वज्ञानविधुरान् सम्बोधयन्ति । किन्तु न तथा वस्तुस्थितिरिति दीक्षितेन्द्रा अवबोध-

यन्ति । गहनेषु पञ्चास्या इव दर्शनेषु निस्साध्वसं सञ्चरन्तीमे, विशेषतश्च मीमांसाम्बु-निधौ तिमिङ्गा इव । एवं सत्यप्यलङ्कारोपवने मञ्जु गुञ्जारवमाचरन्तो द्विरेफा इव विहरन्ति । अलङ्कारशास्त्रं हि विविधदार्शनिक सिद्धान्तानां पिण्डीभूतं तत्त्वम् । यथा 'मीमांसाख्या तु विद्येयं बहुविद्यान्तरैः श्रिता' तथा 'पञ्चमी साहित्यविद्या' इति कुमारिल राजशेखरोक्त्यनुसारेण विद्यात्वमाप्नुवाना साहित्यविद्यापीयं 'बहुविद्यान्तराश्रिता' (बहुविद्यान्तराण्याश्रिता) । अत्र ध्वनि प्रस्थाने प्रथमे भवन्ति वैयाकरणाः अतस्तन्मतावलम्बित्वमपरिहार्यमेषाम् । काव्यशरीरयोः गुणालङ्काराद्याधारयोश्शब्दार्थयोस्तत्त्वनिर्णये विशेषतो मीमांसकानैयायिका वैयाकरणाश्चापेक्ष्यन्त आलङ्कारिकैः । अर्थावबोधौपयिकीनां वृत्तीनां निर्णयो दार्शनिकमार्गाधीन आलङ्कारिकाणाम् । तत्रापि व्यञ्जनावृत्तिसाधने मीमांसादर्शनं मुख्योऽवलम्ब एतेषाम् । शाब्दबोधे नैयायिकाः, तात्पर्य निर्णये मीमांसकाः, रसतत्त्वविमर्शे सांख्यवेदा तादिनयश्शरणम् । विवादग्रस्तविषयावधारणाय नैयायिकमीमांसकरीतिरेवाश्रीयत आलङ्कारिकैः । साहित्यस्योपजीव्यानि भवन्ति दर्शनानि, दर्शनानाञ्च सुषमा विवर्द्धकमलङ्कारशास्त्रमिति नष्टाश्वदग्धरथन्यायेन मिथस्सापेक्षेणैव प्रवर्तितव्यमुभाभ्याम् । अतएव काव्यनिर्माणनैपुण्य प्रयोजकत्वेन 'लोकशास्त्रकाव्याद्यवेक्षणात्' इत्युपदिशन्तो मम्मटभट्टा इममाशयमवद्योतयन्ति अतस्स एव कुशल आलङ्कारिकः, यश्च दार्शनिकसिद्धान्ताविरोधेन निर्मितिमादधाति । न केवलं दार्शनिकपदार्थाविरोधपरिपालनेनैव पुरुषार्थः प्रसिध्येत्, किन्तु स्वग्रन्थे दार्शनिक पदार्थानुप्रवेशनेन । तदत्र परमं कौशलं दीक्षितेन्द्राणाम् ।

आलङ्कारिकेषु प्राचां नव्यानाञ्च विवादग्रस्तेषु विषयेषु श्लेषालङ्कारोऽन्यतमः । तथा हि श्लेषो द्विविधः—सभङ्गपदोऽभङ्गपदश्च । प्रथमे जतुकाष्ठन्यायेन शब्दयोः श्लिष्टत्वम्, द्वितीये चैकवृन्तगत फलद्वयन्यायेनार्थयोः श्लिष्टत्वम् । इमावेव शब्दश्लेषोऽर्थश्लेषश्चेति व्यवह्रियेते । उभावपीमौ मम्मटभट्टैः शब्दश्लेषमध्ये परिगणितौ । अलङ्कारसर्वस्वकारास्तु द्विविधमपीमं श्लेषमर्थालङ्कारतया स्वीचक्रुः । तेषामाशयः .. 'पृथु-कार्तस्वरः' 'पृथुक आर्तस्वरः' इत्यत्रार्थद्वयप्रतीतावेव शब्दोऽलङ्कारतां भजते, यत्र च पदभङ्गो नास्ति, यथा 'परगोत्राणाम्' इत्यादौ तत्राप्यर्थद्वय प्रतीतावेवालङ्कारत्वमित्युभयत्रार्थ प्रतीतेरेवालङ्कारप्रयोजकत्वम् । अतोऽभङ्गपदस्य यथार्थालङ्कारत्वं तथा सभङ्गपदस्याप्यर्थालङ्कारत्वम् । एवं श्लेषालङ्कारस्सर्वत्रोपमाद्यलङ्कारान्तरसङ्कीर्ण एव, उपमादयश्च श्लेषासङ्कीर्णा अपि । अतश्चोत्सर्गापवादन्यायेन श्लेषस्यालङ्कारान्तरबाधकत्वमिति । मतमिदं मम्मटाचार्या एवं निराकुर्वन्ति-दोषगुणालङ्काराः शब्दार्थगतास्तदन्वयव्यतिरेकानुविधायिन एवेति तावत्सर्वसम्प्रतिपन्नम् । तत्र जतुकाष्ठन्यायेनाभङ्गपदो वा भवतु, एकवृन्तगतफलद्वयन्यायेन सभङ्गपदो वा, उभयत्रार्थद्वय प्रतीतिः शब्दाधीनैव । अतः शब्दान्वयव्यतिरेकानुविधायित्वादुभयोश्शब्दालङ्कारत्वमेव । एवं श्लेषस्य न सर्वत्रोपमाद्यलङ्कारान्तरसङ्कीर्णत्वम् । श्लेषासङ्कीर्णा उपमादयो यथा विद्यन्ते, तथा श्लेषोऽप्युपमाद्यसङ्कीर्णो विद्यते... 'देव त्वमेव पातालम्' इत्यादौ । अतो विविक्तविषयसद्भावाच्छ्लेषस्य नोत्सर्गापवादन्यायेनोपमादिबाधकत्वं भवति । यत्र च श्लेषोपमयोर्मिथो बाध्यबाधकभावोऽङ्गीक्रियते 'सकलकलं पुरमेतज्जातं सुधांशुबिम्बमिव'

इत्यादौ तत्र शब्दसाम्य प्रयुक्तोपमैव श्लेषस्य बाधिका, श्लेषप्रतिभोत्पत्ति हेतुर्वा इति ।

चित्रमीमांसायां विषयमिममुपमाप्रकरणे विद्यानाथोपमालक्षणविवेचन प्रसङ्गे यथायथं विवृण्वाना दीक्षितेन्द्रा मीमांसान्यायसञ्चारमुखेनालङ्कार शास्त्रस्य गाम्भीर्य-मुपबृंहयन्ति ।

तत्राहि—निरवकाशो विविक्तं विषयमलभमानस्सावकाशं बाधत इति सामान्य विशेषशास्त्रयोर्बाध्यबाधकभावो लोकशास्त्रसाधारणः, किन्तु तयोर्बाध्यबाधकभावो न विविक्त विषयालाभप्रयुक्तः । तथा सति 'पदेजुहोति' इति पदशास्त्रं यथा 'आहवनीये जुहोति' इत्याहवनीयशास्त्रं बाधते विविक्तविषयालाभात्, तथा 'उत्तरार्धे जुहोति' इत्युत्तरार्धशास्त्रमपि विविक्त विषयालाभात् आहवनीयशास्त्रं बाधेत । अत्रेयं विषय-परिशुद्धिः—श्रौतेषु कर्मसु होमत्वावच्छिन्नोद्देशेनाधिकरणतया 'आहवनीये जुहोति' इत्यनेनाहवनीयो विहितः । आहवनीयश्च श्रौतकर्मसु पूर्वस्यां दिशि चतुरश्राकारे कुण्डे विद्यमानस्संस्कृतोऽग्निः । होमसामान्यस्यायमेवाधिकरणम् । कश्चन होमो गोपदाधि-करणकोऽपि विहितस्सोमयागे । सोमलतायाः क्रयणाय गवि नीयमानायां सा यत्र सप्तमं पदं निक्षिपति तत्र 'पदेजुहोति' इति पदाधिकरणकोहोमो विहितः । सामान्यशास्त्रेणात्रापि आहवनीयः प्राप्तः । पदशास्त्रस्य विविक्तविषयालाभेन निरवकाशतयाहवनीय-शास्त्रं यथा तेन बाध्यते, तथैव 'उत्तरार्धेजुहोति' इति शास्त्रेणाप्याहवनीयशास्त्रं बाध्येत, तुल्यन्यायात् । न हि तेन तद् बाध्यते, उत्तरार्धशब्देनाहवनीयस्यैव देशविशेषस्याभिधीय-मानत्वात् । अतो विविक्तविषयालाभप्रयुक्तो बाध्यबाधकभावो नात्र सङ्घटते, किन्तु विषय सदसद्भावप्रयुक्त एव बाध्यबाधक एष्टव्यः । उत्तरार्धशास्त्रस्याहवनीयकुण्ड एव विषयसद्भावेन निरवकाशत्वाभावात् न बाधकत्वम् । एवं पदशास्त्रस्य विषयासद्भावेन निरवकाशत्वादाहवनीयबाधकत्वमुचितम् । अयमेव पदाहवनीयन्यायः उत्तरार्धाहवनीय-न्यायश्चेति मीमांसकास्सङ्गिरन्ते । प्रकृतेऽनेन न्यायेन श्लेषस्योपमादीनाञ्च न विविक्त विषयालाभाधीनो बाध्यबाधकभावः, किन्तु विषय सदसद्भावाधीन एव । अतश्च 'सकल-कलं पुरमेतज्जातम्' इत्यत्र श्लेषस्योपमाबाधकत्वमयुक्तम्, विषयसद्भावेन श्लेषस्य निरवकाशत्वाभावात् । प्रत्युत 'सकलकलम्' इति विशेषणस्य सुधांशुबिम्बमिव' इत्यु-पमामाश्रित्यैव श्लेषोत्थापकत्वम्, उपमाया अभावे श्लेषस्यैवानुत्थानात् । अतः शब्द-साम्यप्रयुक्तोपमाया एव श्लेषप्रतिभोत्पत्तिहेतुत्वं नतुश्लेषस्योपमाप्रतिभोत्पत्तिहेतुत्व-मिति । एवं वैदिकोदाहरणेन प्रकृतमर्थं विशदीकृत्य लौकिकमप्युदाहरणं प्रदर्शयन्ति—मरकतनील पद्मरागादिभिररन्ध्रमणिभिर्हारे निर्मातव्ये तेषां सुवर्णविविक्तविषयालाभेन निरवकाशत्वान्न सुवर्णबाधकत्वं भवितुमर्हति । किन्तु सुवर्णप्रत्युप्तानां तेषामलङ्कारान्तरत्वमेवेति ।

मम्मटाचार्याणां दीक्षितेन्द्राणाञ्च न सिद्धान्ते कोऽपि भेदः, तथाप्यलङ्कार-स्वरूपविचारो वैदिक पदार्थस्वरूपविचारसदृक्षोऽस्ति गाम्भीर्यमावहतीति चित्रमीमांसातः प्रतीयमानं न प्रच्छादयितुं शक्यम् ।

उपमाप्रकरण एव स्वकृतोपमालक्षणगत दल प्रयोजनानि कथयन्त उपमिति क्रियानिष्पादकव्यापारस्य 'वागर्थाविव सम्पृक्तौ' इत्यादाविव 'इन्दुरिन्दुरिव श्रीमान्' इत्यनन्वयेऽपि सत्त्वादतिव्याप्तिमाशङ्क्यार्थवादाधिकरणन्यायेन तां निराकुर्वन्ति—'नाप्यनन्वयेऽतिव्याप्तिः, तत्रापि स्वेन स्वस्य सादृश्यस्य सदृशान्तरव्यवच्छेदे रुद्ररोदन वपोत्खननाद्यर्थवादेऽसदर्थस्य निन्दास्तुत्योरिव द्वारमात्रतया वर्ण्यमानत्वेनोपमिति क्रियाया अनिष्पत्तेः इत्यादिना ।

'सोऽरोदीद् यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' 'स आत्मनो वपामुदखिदत्' इत्याद्यर्थवादानां विध्येकवाक्यतया प्रामाण्यमित्यर्थवादाधिकरणसिद्धान्तः । योऽर्थवादो यद्विधिसन्निधौ श्रूयते तस्य तेन सहैकवाक्यता । यस्य चार्थवादस्य सन्निधौ विधिर्न श्रूयते, तस्य कल्पितविधिना सहैकवाक्यत्वेन प्रामाण्यमिति स्थितिः । तत्रार्थवादानां क्वचिद्विधिकल्पकत्वशक्तिमवलोक्य सर्वत्र तेषां तत्कल्पकत्वं भवत्विति शङ्कायां, तन्निरासाय सविधिकार्थवादानां सा शक्तिर्नाश्रीयते, विधिरहितार्थवादानामेव सा स्वीक्रियतेति व्यवस्थापितमर्थवादाधिकरणे । यदि विधिसन्निधावप्यर्थवाद विधिं कल्पयेयुस्तर्हि 'अग्नी रुरोद, अतोऽन्योऽपि रुदेत्' 'प्रजापतिरात्मनो वपामुदखिदत्, अतोऽन्योऽपि तामुत्खिदेदित्येवं स्यात्, तच्च प्रत्यक्षादिविरुद्धं भवेत् । अतो निन्दां स्तुतिं वा द्वारीकृत्य तेषां प्रकृतविध्येकवाक्यतेति सिद्धान्तः । तथैव इव शब्दस्योपमिति क्रियानिष्पादकत्वशक्तौ विद्यमानायामपि तस्याः क्रियानन्वयेऽसम्भवादिव शब्दार्थसादृश्यस्य सदृशान्तरव्यवच्छेदे तात्पर्यं कल्पनीयमिति दृष्टान्तदार्ष्टान्तिकयोस्समन्वयः ।

पूर्णोपमायामुपमानोपमेययोस्साधारणधर्मस्यानुगामितां प्रदर्शयितुम् 'वागर्थाविव सम्पृक्तौ' इति पद्यमुदाहरन्ति दीक्षितेन्द्राः । एवमुदाहरतां तेषामयमभिप्रायः—मीमांसानयसिद्धं शब्दार्थसम्बन्ध नित्यत्वमालङ्कारिकैरपि स्वीकर्तव्यमिति । यथा जैमिनेः 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यनुशासनं तथालङ्कारिकाणां पृथङ्नास्त्यनुशासनम्, तथापि ऋषिकल्पस्य कवेर्वचनमेव तादृशं स्वीकर्तव्यम्, लक्ष्योपजीवित्वाल्लक्षणस्य । कथमन्यथा सत्स्वप्यन्येषूदाहरणेषु तानि सन्त्यज्येदमुदाहरन्ति दीक्षिताः ।

सर्वत्रालङ्कारिकैर्मीमांसकरीतिरेवानुसर्तव्येति नास्ति निर्बन्धः, क्वचित्तेषां स्वतन्त्रापि रीतिरस्तीति प्राचीनान्वयलक्षणविचारप्रसङ्गे लिखन्ति—'तस्मादत्र सविशेषणे हि' इति न्यायोपन्यासो वाक्यमीमांसकानां शोभते नालङ्कारमीमांसकानाम्' इति । वाक्यविदो हि 'यः कल्पस्स कल्पपूर्वः' इति न्यायमनुसरन्तो रामरावणयोर्युद्धे पूर्वपूर्वरामरावणयुद्धमुपमानयन्ति, तेनाभेदे उपमानोपमेयभावनिर्देशस्तेषां मते न सिध्यति, किन्त्वलङ्कारविदां पृथगेव मार्गः । अलङ्कारेषु यावद्वैचित्र्यं सम्पादयितुं शक्यते तावत्सम्पादनमलङ्काराय भवेत् । मधुराकृतीनां यत्किमपि मण्डनाय कल्पते । कविवाणी कर्तृकसृष्टौ स्वातन्त्र्यमिष्यते । अत एकस्यैवोपमानोपमेयभावस्थले विशेष्यबाधे सति तदर्थं 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायोपन्यास अलङ्कारमीमांसकेभ्यो न रोचत इति । परस्परमन्विता एव पदार्था वाक्यार्थभावमापद्यन्ते, तत्रान्वये यदि कश्चन प्रत्यूहः तर्हि तन्निवारयितुमेषन्यायोऽभिप्रेयते वाक्यमीमांसकैः । आलङ्कारि-

कास्तु तादृशानन्वयस्थले पृथगलङ्कारमिच्छन्तस्स्वतन्त्रा भवन्तीत्याशयो दीक्षितेन्द्राणाम् ।

एवं रूपक प्रकरणे एकयोपमयाऽन्यत्रोपमाया गम्यत्वं चतुर्धा विभज्य तेषां श्रौतान्युदाहरणानि प्रदर्शयन्ति—'विश्वजित्सर्वपृष्ठोऽतिरात्र.' इत्यादिना । 'नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति' इति रीत्या क्व वायं कोमलोऽलङ्कारपुञ्जः ? क्वचायमतिगभीरः कठिनश्च श्रौत. पदार्थः ? कण्वशकुन्तलयोरिव दीक्षितालङ्क्रिययो. सम्बन्धः प्रतिभाति । मृद्वङ्गीमपि शकुन्तलामुद्याने सलिलसेचनादिषु कृच्छ्रेषु कर्मसु नियुञ्जानः कण्व. कुलाङ्गनानां गार्हस्थ्यपद्धतिं शिक्षयति, तथैव कोमलार्थामप्यलङ्क्रियामवबोद्धुमालङ्कारिकाणां चिन्तनशक्तिधारां शास्त्रान्तरानुशीलन प्रवणताञ्च विवर्द्धयितुमयमुद्यमो दीक्षितेन्द्राणाम् । उपमालङ्कारः सर्वालङ्काराणां मूलमित्यर्थोऽपि सिध्यति कार्ये. 'एवमुक्तानेकालङ्कार विवर्तवतीयमुपमा—

'तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात् ।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा' ॥

इत्यौपनिषदपदार्थदृष्टान्तप्रदर्शनेन सर्वालङ्कारमूलत्वमुपमायास्साधयन्तो दीक्षितेन्द्रा अलङ्कारशास्त्रे विद्यमानं प्रौढिमानमवद्योतयन्ति ॥

# कविवर जगन्नाथमहाभागमतानुसारं रूपकालङ्कारशास्त्रार्थः

रा. वि. कौण्डिन्यः

मङ्गलाचरणम् ।

स्मृताऽपि तरुणातपं करुणयाहरन्तीनृणाम्
अभङ्गुरतनुत्विषां वलयिताशतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतुकाऽपि कादम्बिनी ॥

कविश्रेष्ठजगन्नाथपंडितवर्याणां चेतसि "रण्डागीतानि काव्यानि" इति तत्तत्कालीनवेदान्तन्यायादिशास्त्र पारावारपारीणानां साहित्यशास्त्रनिन्दागर्भितं वचनं समाकर्ण्य परमं दुःखमभवत् । तत्र हि मूलं कारणं शास्त्रेऽस्मिन् शास्त्रानुकूला भाषा नासीत् । तदिदं सर्वं विचार्य पण्डितमुखमुद्रणाय साहित्यस्य शास्त्रत्वमस्त्येवेति दृढीकरणाय तुष्यतुजन इति सर्वजन प्रसिद्धन्यायेन रसगङ्गाधरग्रन्थे शास्त्रीयभाषा निवेश इति विज्ञेयम् ।

रण्डागीतानि काव्यानि मतं येषां हृदिस्थितम् ।
तत् खण्डनार्थमेवैतै र्न्यायभाषा प्रयोजिता ॥

अनयैव रीत्या कथमेतैः कविवर्यैः रूपकालङ्कारशास्त्रार्थः प्रतिपादितः तत्पण्डितमनोमोदार्थमत्र सारमात्रं नु सूच्यते । भुवनविख्यातेऽस्मिन् रसगङ्गाधरग्रन्थे रूपकालंकारस्य "उपमेयतावच्छेदक पुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकं । तदेवोपस्कारकत्वविशिष्टमलङ्कारः । अस्य सरलार्थश्चायम्—

उपमेयताया अवच्छेदको यो धर्मः तद्धर्ममेवपुरस्कृत्य तद्युक्ते उपमेये शब्दादेव (नतु प्रत्यक्षादिना) यदा उपमानस्य तादात्म्यमभेदत्वं निश्चितं भवति तदा रूपकपदार्थः सिद्धो भवति । इदं च रूपकं यदा प्रधानोत्कर्षत्वविशिष्टं भवति नाम, काव्ये प्रधानमर्थं प्रकर्षं नयति तदा अलंकारपदवाच्यं भवति । यथा मुखंचन्द्रः ॥ अत्र उपमेयता-

वच्छेदकं मुखत्वं तद्युक्ते एव मुखे शब्दजन्यमुपमानस्य चन्द्रस्य तादात्म्यज्ञान मुख्यार्थोपस्कारकमिति अत्ररूपकालंकारसमन्वयः ।

अत्रलक्षणे 'उपमेयतावच्छेदकपुरस्कारेण' इत्यंशस्वीकारेण अपह्नुतौ, भ्रान्तिमति, अतिशयोक्तौ, निदर्शनायांच न भवत्यतिव्याप्तिः । एतेषु चतुर्षु उपमेयतावच्छेदकप्रकारकत्वेन उपमेयस्य ज्ञानं नास्ति । तथाहि 'नेदं मुखमपि तु चन्द्रः । इत्यत्र मुखरूपोपमेयस्य उपमेयतावच्छेदकत्वेन निषेध एव कृतः । तत्र चन्द्रत्वप्रकारकत्वं स्थापितं । भ्रान्तिमति पद्ममिति मुखमभिधावन्ति भ्रमरा । अत्रापि उपमेये मुखे पद्मत्वप्रकारकं ज्ञानं भवति नतु मुखत्वप्रकारकं । "चन्द्रोऽयं" इत्यतिशयोक्तौ तथा "अमायां तन्मुखं पश्य चन्द्रदर्शनकौतुकी" इति निदर्शनायां सर्वथा तादृशोपमेयतावच्छेदक विशिष्टोपमेयस्य ज्ञानाभाव एव ।

"शब्दात्" इति पदस्य ग्रहणात् "मुखमिदंचन्द्र." इत्यत्र यदा, मुखस्य मुखत्वेन प्रत्यक्षं भवति तदा चन्द्रत्वेन न स्यात् ज्ञानं इति बाधः, तथापि अत्रमुखेचन्द्रज्ञानं भवतु इति इच्छायाम् आहार्यं प्रत्यक्षात्मकं बाधकालीननिश्चयात्मकं ज्ञानं भवति । इत्यत्र याऽतिव्याप्तिरायाति तन्निराकरणं । "निश्चयपदग्रहणेन "नूनमुखं चन्द्र" इति उत्प्रेक्षायां न समन्वयः । तथैवात्र लक्षणे उपमेयोपमान विशेषणाभ्यां सादृश्यस्य लाभो भवति । अतो यत्र शुद्ध आरोपः (यथा "मुखं मनोरमा रामा" इत्यत्र सादृश्येतरसंबन्धात्) तत्र न स्यात् लक्षणसमन्वयः । रूपके हि सादृश्यमूलकमेव तादात्म्यमपेक्षितं भवतिनान्यथा एतदेवाभिमतं प्राचीनानाम्— "तद्रूपकमभेदो य उपमानोपमेययोः" इति मम्मटः । "उपमैवतिरोभूतभेदा रूपकमुच्यते" इति दण्डी । इदं च तादात्म्यं, उपमानोपमेययोः यदा प्रथमाविभक्तिः तदा संसर्गो भवति । भिन्नविभक्तिस्थले कुत्रचित् विशेषणात्मकं भवति कुत्रचित् विशेष्यात्मकं भवति क्रमेणोदाहरणानि—(१) मुखं चन्द्रः (२) मुखं चन्द्रत्वं प्राप्नोति (३) मुखे चन्द्रत्वम् ।

**रत्नकार मतखण्डनम्**

"सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तोवा यावान् भिन्नयोः सामानाधिकरण्यनिर्देशः स सर्वोऽपि रूपकं" इति तन्मतानुसारं लक्षणं । अस्यायं भावः—सारोपालक्षणा हि अस्यालंकारस्य बीजभूता । ततश्च यथा सा लक्षणा सादृश्यसम्बन्धात् गौणी तदितर सम्बन्धात् शुद्धा । तथैवात्र रूपकेऽपि सादृश्यमूलकः तदितरकार्यकारणादिमूलकश्च आरोपोभवितुमर्हति । एवञ्च प्राचीना यद्वदन्ति उपमानोपमेययो. अभेदमूलक (सादृश्यमूलकः) एवायं अलंकारः तन्न योग्यम् ।

परमिदं तन्मतं अयोग्यंभाति । अत्रमते उपमानोपमेययोः इत्यस्य लक्षणेऽप्रवेशो विद्यते । केवलं भिन्नयोरेव सामानाधिकरण्यनिर्देशः अपेक्ष्यते । तेन च अपह्नुतौ 'नेदं मखं चन्द्रोऽयं" इत्यत्र द्वयोः भिन्नपदार्थयोः सामानाधिकरण्यप्रतीतिरत्रापि भवति इति

तु चिन्तादिमूलं" इत्याह परं यथा अयं रूपके सादृश्यमूलकस्यापि ताद्रूप्यस्य रूपकत्वं स्वीकरोति तथैव स्मरणेऽपि चिन्तादिमूलकस्य सादृश्यभिन्नस्य स्मरणस्य स्मरणालंकारत्वमपि स्वीकरोतु। न चात्र चिन्तामूलकस्य स्मरणस्य तथात्वं न स्वीक्रियते कारणं एतन्मूलकं स्मरणं भावो भवति इति सर्वसम्मतत्वात्। परमिदमपि उत्तरं न युक्तियुक्तम्। कारणं सादृश्यमूलकतदितरमूलकस्मरणस्य वाच्यतादशायां अलंकारत्वं स्यात् व्यङ्ग्यतादशायां भावत्वं स्यात् तेन न काऽपि विपत्तिः। ततश्च अत्र दत्तः दोषः तथैव तिष्ठतीति न योग्यं रत्नकारमतम्—

**अप्पय्यदीक्षितास्तु**

"शब्दाभिहिते निषेधास्पृष्टे बिम्बाविशिष्टे निर्दिष्टे विषये यदि अनिह्नुते विषयी उपरञ्जकतामेति (यदा) तदा रूपकम्"" लक्षणेऽत्र "बिम्बाविशिष्टे" इति पदेन उपमेयं बिम्बभूतं मा भवत्वयमर्थो भवति। अतः त्वत्पादनखरत्नानां यदलक्तकमार्जनम्। इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः" इति निदर्शनापद्ये नखालक्तकरूपोपमेयस्य विधुश्रीखण्डरूप प्रतिबिम्बस्य सत्वात् बिम्बभूतत्वं संभवति, तत्रास्य लक्षण समन्वयो नस्यात् बिम्ब रहितस्य उपमेयस्य विवक्षितत्वात्।

**निर्दिष्टे उपमेये** नाम उपमेयं शब्देन गृहीतं भवतु इति निवेदनेन "कमलमनम्भसि कमले" इत्यत्र उपमेयभूतमुखस्य शब्देन अग्रहणात् अत्रातिशयोक्तौ न भवति लक्षण समन्वयः। अनिह्नुतो नाम यत्र उपमेयस्य निषेधोनास्ति इति अर्थस्वीकारेण अपह्नुतौ उपमेयस्य निषेधात् न तत्रातिव्याप्तिः। उपरञ्जकतामेति नाम आहार्यं (नाम बाधकालीनेच्छाजन्यं) यत् स्वकीय ताद्रूप्यं तस्य निश्चयस्य यत्र विषयः भवति। उपमानं यदा उक्तविशेषणविशिष्टे उपमेये आहार्यताद्रूप्यनिश्चयगोचरतां प्राप्नोति तदा रूपकं इति सरलार्थः। इति स्पष्टीकरणेन सन्देहोत्प्रेक्षासमासोक्तिपरिणामभ्रान्तिमत्सु अलंकारेषु उपमानस्योपमेये तादृशाहार्यनिश्चयाभावात् न लक्षणसमन्वय इति निर्दुष्टं लक्षणमिदम्।

इदं दीक्षितमतमपि अयोग्यं भाति। यतोऽत्र लक्षणे "त्वत्पादनखरत्नानां" इत्यत्र निदर्शनायामतिव्याप्तिर्माभवत्विति "बिम्बाविशिष्टे" इति उपमेय विशेषणं स्थापितं। परमत्रोदाहरणे निदर्शना नास्त्येव मुखं चन्द्र इतिवत् अत्रापि मार्जनरूपोपमेयस्य पाण्डुरीकरणरूपोपमानत्वेन योऽभेदः तस्य शब्दतः प्रतीतिः भवति। एवञ्चात्र श्रौतारोपत्वात् रूपकमेव। दीक्षितलक्षणानुसारं अत्र निदर्शनाऽपि न भवितुमर्हति अत्र नैवपदार्थ निदर्शना स्यात्, बिम्बप्रतिबिम्बविशिष्टधर्मयोरेव अत्र अभेदेन प्रतीतिः भवति। तेन च कदाचित् वाक्यार्थ निदर्शना प्राप्ता स्यात्। "उपमानोपमेययोरन्यतरस्मिन् अन्यतर धर्मारोप. पदार्थनिदर्शना इति लक्षणात्। न च तर्हि वाक्यार्थनिदर्शना भवतु काहानिः इति वाच्यं यतः साऽपि नात्रयोग्या यतोऽत्र योऽभेदः अस्ति सः श्रौतः शब्दद्वारा उपात्तः उद्देश्य विधेय भावेन आलिंगितः विद्यते। अतएव अत्र वाक्यार्थरूपकं भवति। यत्र च अर्थद्वारोपात्तः अभेदः उद्देश्यविधेयभावेन अनालिङ्गितः तत्र वाक्यार्थ-

"त्वत्पाद नखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ।।

अत्र क्रिययोरभेदस्यैव प्राधान्यं विद्यते । तस्य च आर्थिकस्य नास्ति कर्त्रोरभेदः । एवं त्वत्पादनखरत्नानां—इदं रूपकस्यैवोदाहरणम् । अपरञ्च रूपके बिम्बप्रतिबिम्बभावो विद्यते एव "कन्दर्पद्विपकर्ण कम्बु मलिनै" कलङ्काङ्कितम्" अत्र पद्ये कलङ्कस्य दानाम्ब्वादिभिः प्रतिबिम्बनम् ।

अधुना दीक्षितरूपकलक्षणे "निर्दिष्ट" इति पदमपि न सम्यक् । अत्र निर्दिष्ट पदस्य शब्देनाभिहितः इत्यर्थः भवति । तदेतदभिहितत्वं येनकेनचिद् रूपेण शब्देन वा भवतु अथवा उपमेयतावच्छेदक रूपेण । आद्ये "सुन्दरं कमलंभाति लतायामिदं" इति रूपकातिशयोक्त्युदाहरणे "सुन्दरमिदं" इत्यनेन सुन्दरत्वेन रूपेण इदं पदेन च विषयस्य आननस्य अभिहितत्वात् । न चात्र सुन्दर पदस्य कमलेनान्वयो भवति न तु वदनरूपविषयेणेतिवाच्यम् । अत्र कमलपदेन लक्षणया कमलरूपाननस्यैव भवति उपस्थितिः अत. कमलं तत्र विशेषणीभूतम् । तेन सुन्दरपदस्य आननेन सहैवान्वयः "पदार्थः पदार्थेन अन्वेति न तदैकदेशेन" इति न्यायात् ।

अस्य दोषस्य निवारणाय यदि उपमेयं उद्दिश्य यदा उपमानताद्रूप्यस्य विधानं यत्र विद्यते तत्रास्य प्रसरः इति अभिमतं तेन च 'सुन्दरं कमलं" इत्यत्र आननमुद्दिश्य कमलरूपोपमानताद्रूप्यस्य विधानं नास्ति अपि तु भानस्य अतो न दोष इति चेत् तदा मुखचन्द्रोऽस्ति सुन्दरः" इत्यत्र पृथक्विभक्तिः नास्ति । तेन अव्याप्तिः ।

यदि द्वितीयः पक्षः अभिमतः नाम उपमेयतावच्छेदकरूपेण शब्देनाभिधानं तदा तु लक्षणे "अनिह्नुते" इति विशेषणस्यावश्यकता नास्ति तत्कार्यस्य तादृश शब्देन अभिधानाभावात् । तेनैवच अपह्नुतिभ्रान्तिमदलंकारस्थले न स्यादतिव्याप्तं लक्षणम् ।

अपरञ्च अनिह्नुतपदग्रहणेन भवदुक्तपर्यस्तापह्नुति उदाहरणे 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्" इत्यत्र प्रथमं सुधांशोः सुधांशुत्वरूपेण यद्यपि कृतोऽस्त्यपह्नवः तथापि तत्रैवोपमेये मुखे मुखत्वावच्छिन्ने सुधांशुत्वरूपोपमानताद्रूप्यं विद्यते एव इति लक्षणसमन्वयात् विशेषणं नयोग्यम्—

**श्रीमम्मटमहाभागमते**

"तद्रूपकमभेदो यः उपमानोपमेययोः इति लक्षणम् । परन्तु उपमानोपमेययो अभेदस्य प्रतीतिः यथा रूपके तथा अपह्नुत्यादावपि भवति तेनातिव्याप्तिः । न चानेन विशेषणेन "उपमेयतावच्छेदकं पुरस्कृत्यैव" ताद्रूप्यंज्ञेयम् तदभावान्न दोषः । तथापि "नूनं मुखं चन्द्रः" इति उत्प्रेक्षास्थले मुखत्वरूपोपमेयतावच्छेदकं पुरस्कृत्य तयोरुपमान-भेदस्य प्रतीयमानत्वाद अतिव्याप्ति स्तथैव ।

ननु अत्रोत्प्रेक्षास्थले नैव स्यादतिव्याप्तिः कारणं मम्मटेन···"प्रकृतं प्रतिषिध्या·यस्थापनं स्यादपह्नुतिः" "सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेणयत्" इति कारिकाद्वयात् लक्षणज्ञानम्। तेन च प्रथमं तयोरभेदः यत्र तत्र रूपकं इति सामान्य वचनं कथितम्। तेन आपाततः अपह्नुति-उत्प्रेक्षा लक्ष्यमपि रूपकालंकारविषयो भवितुमर्हति। परं अत्र सामान्य रूपाभेदस्य समन्वयो मा भवत् अतः यत्र स्थले निषेधस्य तथा संभावनायाः प्रवेशो नास्ति, किन्तु शुद्ध एव अभेदः "तत्र रूपकस्य प्रवेशः इति रूपकलक्ष्यं संकुचितम् कृतम्। सामान्यस्य बाध्यत्वात् विशेषस्य च बाधकत्वात्। एतादृशः बाध्यबाधकभावः शास्त्रे लोके च दृश्यते। यथा

मीमांसाशास्त्रे 'कुशमयं बर्हिः' इति सामान्यस्य शरमय बर्हि इति विशेषेण। व्याकरणशास्त्रे 'च्लेः सिच्। इति सर्वत्र सिच् आदेशः प्राप्तः तस्य शलइगुपधा इति च्लेः स्थाने क्सः इति विशेषः। लोकेऽपि ब्राह्मणेभ्योदधिदीयतां तक्रंकौण्डिन्याय। तदेवं भवति अतिव्याप्तिदोषनिराकरणम्॥

परं मम्मटपक्षपातिनां नेदं वचनं समीचीनंभाति···कारणं दृष्टान्तानां विषमत्वात्···एते सर्वेदृष्टान्ताः वचनरूपाः। तेन बाध्यबाधकभावोऽत्र योग्यः। परं प्रकृते अलङ्कारलक्षणं नाम असाधारणोधर्मः। ततश्च रूपकालंकारस्य असाधारणधर्मः अपह्नुतौ उत्प्रेक्षायां च तिष्ठति। अत्र समागतः विशेषधर्मः निषेधरूप तदा संभावनारूपः सामान्यधर्मः असाधारणधर्मस्य बाधितुं न समर्थः। किन्तुतेनैव सार्धं तिष्ठति यथा घटे द्रव्यत्वसामान्यधर्मेणसह घटत्वरूप विशेषधर्मः। दृष्टान्ते दधिप्रदानं नास्त्यसाधारणो धर्मः। तथैव कौण्डिन्ये केवलं तक्रदानात्मकः विशेषधर्म एव तिष्ठति इति विकलोदृष्टान्तः।

एवं चोत्प्रेक्षास्थले अभेदसंभावनयोः द्वयोः सत्वात् कस्य प्राधान्यं इति ज्ञानाभावेन उभयालंकारव्यवहारः स्यात्। एकस्यकस्यापि व्यवहारस्य निषेधे बीजाभावात्।

तन्निवारणाय यदि "निश्चीयमानः" अभेद इतिविशेषणं यदि ग्रहीतुमिच्छा तर्हि मन्मतस्वीकार एव कृत इति न कश्चिद्विरोधः इत्यलं विस्तरेण।

निवेद्य क्रियते पूर्णमधुना लेखनं मया।
यदिस्युः बहवोदोषाः क्षन्तव्यास्तत्त्वदर्शिभिः॥

# आचार्यनन्दिकेश्वरस्य नाट्यशास्त्रे योगदानम्

**डा० पारसनाथ द्विवेदी**

विदितमस्तु तत्रभवतां यदिह सकलकलाकलापकलितस्य मनुयाज्ञवल्क्य-गर्ग-गौतम-वसिष्ठ-पाणिन्यादिमहर्षिभिरध्युषितस्य वेदवेदांगेतिहासपुराण-काव्य-नाटक-कथा-कोष-व्याकरणादिसत्साहित्यविभूषितस्य भारतभुवः पवित्रतमे भूभागे बहुविधसंपत्समृद्धायां जगल्ललामभूतायां भारतभाग्यलक्ष्मीधान्यां राजधान्यां दिल्लीनगर्यामस्यां सम्पद्यमाने विश्वसंस्कृतसम्मेलनेऽस्मिन् विश्वस्य प्रतिकोणतः समागताः प्राच्यसंस्कृतिसंरक्षण-धुरीणाः सुरगवीसंचरणप्रवीणाः विविधशास्त्राचार्याः महामनीषिणश्च । ईदृश्यां महापरिषदि मादृशानामल्पज्ञानां प्रवेशो दर्शकत्वातिरिक्तेन रूपेण कथमपि नोचितः । अयं च तत्रभवतां महानुभावानां महाननुग्रहः जन्मान्तरसंचितपुण्योदयश्च यदहं श्रीमत्सु समुपस्थातुं लब्धावसरोऽस्मीत्यात्मानं धन्यतरं कृतकृत्यंच मन्ये । तत्र श्रीमतां विद्वद्वराणां समक्षं वक्तृताया अनधिकारिणं मन्यमानस्य मे वाणी न स्फुरति किमपि वक्तुम् । किन्तु गुरुजनानां पुरस्तादज्ञानगोपनमपि गर्ह्यमिति मत्वा यथामति कतिपयैः शब्दैरेव स्वाभिप्रायं किंचिद् श्रीमत्सु विज्ञापयामि । तत्समारोहेऽस्मिन् समागतानां श्रीमतां महामनीषिणां पुरस्तादाचार्यनन्दिकेश्वरस्य नाट्यशास्त्रे योगदानमितिविषयमवलम्ब्य किंचिद्विवक्षुरस्मि । ततः सम्भाव्यमानास्त्रुटीः क्षमयितुं प्रार्थये क्षमापरान् महानुभावानिति ।

धन्येयं सर्वभाषाभाषणमनोहरा भारतीयसंस्कृतिसंरक्षणपरा सुरभारती, यस्याः साहित्यं भारतीयसंस्कृतेः कलायाश्च महार्घो निधिः वरीवर्ति । अस्यां गीर्वाणवाण्यां प्रणीतानि शास्त्राणि, साहित्यक्षेत्रे निष्पादितानि कार्याणि चास्मद्देशस्य मस्तकं मण्डयन्ति । तत्दुःखग्राह्येऽस्मिन् साहित्यसागरे निमज्य रत्नान्यन्विष्यतो मे नूनमनधिकारचेष्टा धृष्टता स्याद्यतो हि मे संस्कृतज्ञानमल्पतरमिति । काले कालेऽनेके महाकवयो नाट्याचार्यश्च प्रादुरभूवन्नस्मिंजगति, यैरकृत्रिमरसाभिरामाभिः कृतिभिः कलाभिश्च न केवलं साहित्यमेव, अपितु समस्तं भूमण्डलमपि पावितम् । ईदृशेष्वाचार्यवर्येष्वाचार्यनन्दिकेश्वरस्याभिधानं विविधगुणगरिम्णातितरां राजते ।

सर्वविधवसुन्धरा भारतवसुन्धरा कस्मिन् स्वीयोद्देशे कस्मिन् वत्सरे वाऽऽचार्य-नन्दिकेश्वरं प्रसूयात्मानं सार्थकं कृतवतीति विषये मौनमेवालम्बते सर्वथेतिवृत्तम्। डा० मदनमोहनघोषमहोदयानां मतमस्ति-यदाचार्यवर्येणामुना स्वजनुषा सम्भवतो दक्षिणदेशः पूतीकृतः। अपरे चैनं कैलासपर्वतवासिनं पार्वतीपतेः भगवतो विश्वनाथस्यान्तेवासिनं मन्वते।

एवमनुश्रूयते वैवस्वतमनोः त्रेतायुगस्यादौ **क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेदिति**विविधकार्यविश्रान्तिभरितैरिन्द्रादिभिस्त्रिदशैः सम्प्रार्थितेन करुणार्द्रचेतसा वेधसा "ऋग्वेदात् पाठ्यम्, सामवेदात् गीतम्, यजुर्वेदादभिनयान्, अथर्ववेदाच्च रसान्"[1] संगृह्य नाट्यशास्त्रमाविष्कृतमित्येषाऽऽख्यायिका भरतमुनिप्रणीते नाट्यशास्त्रे समुपलभ्यते। तेन च लोकपितामहेन पितामहेन सर्वप्रथमं महर्षये नारदाय गीतं, स्वातये वाद्यं, भरतमुनये च नाट्यं शिक्षितम्। तेषु स्वातिनारदौ तस्य प्रथमशिष्यौ भारते संगीतं विस्तारयामासतुः। भरतमुनिश्च तेभ्योऽधिगम्य नाट्यविद्यां प्रथमं 'अमृतमन्थनम्' नाम नाट्यं प्रायुङ्क्त। प्रयोगेऽस्मिन् तेन वेधसा स्वातिनारदौ वाद्यगीताभ्यां नियोजितौ, यतश्च सुष्ठुप्रयुक्ताभ्यां गीतवाद्याभ्यां नाट्यप्रयोगो न विपद्यते।[2] तत्रामृतमन्थनस्य सफलतामालोच्य वेधसाऽऽदिष्टेनाचार्यभरतेन त्रिपुरदाहस्याभिनयोऽदर्शि भगवते पार्वतीपतये। प्रयोगमिममवलोक्य भृशं तुष्टेन शिवेनाभ्यधायि 'यन्मयाऽऽविष्कृतं नानाकरणैरंगहारैश्चान्वितं नृत्यं पूर्वरंगे योजयतु भवानिति'। ततश्च भगवतादिष्टो तण्डुः पूर्वरंगशोभाभिवृद्धयेऽङ्गहारं प्रयुक्तवान्। तेन प्रयुक्तं नृत्यमिदं 'ताण्डव' नाम्ना च प्रथितम्। अस्मिन्नेवावसरे शिवानुरोधेन भगवती पार्वती ब्रह्मणः समक्षं लास्यमपि प्रादर्शयत्। एतेन ज्ञायते यदाचार्यनन्दिकेश्वरः भरतसमकालिको भगवतो विश्वनाथस्य मुख्यगणश्चासीत्।

अभिनयदर्पणानुसारं जगत्स्रष्टा भगवान् प्रजापतिः नाट्यवेदं निर्मायाभिनयार्थं भरताय प्रायच्छत्। स च भरतमुनिः नाट्यनृत्तनृत्यभेदैस्त्रिधा प्रकल्प्य तन्नाट्यवेदं गन्धर्वाप्सरोभिस्सार्द्धं शिवस्य पुरस्तादर्शयत्। भरतमुनिना प्रयुक्ते तस्मिन्नभिनये उद्धतप्रयोगानालोक्य भगवान् शंकरः स्वगणाग्रगण्येन तण्डुना भरताय न्यदीदिशत्। प्रीत्या च पार्वत्या तस्मै लास्यमप्युपदिष्टम्। ततश्चभगवती पार्वती बाणासुरदुहितरमुषां लास्यमनुशासितवती। उषया च द्वारवतीगोप्यः लास्ये दीक्षिताः। गोपिकाभिश्च

---

१. जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानथर्वणादपि॥ १।१६
(नाट्यशास्त्रम्, ओरियन्टल इन्स्टीट्यूट्, बड़ौदा, १९३८)

२. गीते प्रयत्नः प्रथमं तु कार्यः शय्यांहि नाट्यस्य वदन्ति गीतम्।
गीते च वाद्ये च हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति॥
(नाट्यशास्त्र, बड़ौदा)

सौराष्ट्रललना: लास्ये परिनिष्ठापिता: । ताभिश्चानेकदेशयोषितश्च शिक्षिता अभूवन् । इत्थं नाट्यशास्त्रमिदं समस्ते भूमण्डले प्रतिष्ठितम् ।[1]

भावप्रकाशनकारस्य शारदातनयस्य मतमिदम्-यन्नाटचवेदस्याविष्कर्ता भगवान् शंकरोऽस्ति । भगवान् चतुरानन आब्रह्माण्डस्तम्बपर्यन्तं सृष्टिं विधाय विश्रान्तिसुखाधिगमाय जगद्रक्षकं लोकनायकं विष्णुमुपगत: । तेन प्रभविष्णुना शंकरान्तिक प्रहित: स. । तत्खेदं परिज्ञाय भगवता शंकरेण च स्वरचितस्य नाट्यवेदस्य शिक्षा नन्दिकेश्वराय प्रादायि ।[2]

कविराजेन राजशेखरेण काव्यमीमांसायां काव्यविद्योत्पत्तिप्रसंगे 'रसाधिकारिकं नन्दिकेश्वर:' इत्यभिहितम् ।[3] तेन च ज्ञायते यदनेनाचार्यनन्दिकेश्वरेण संगीतविषयकग्रन्थोऽपि विरचित: ।

सिंहभूपालमतानुसारं नन्दिकेश्वरस्य प्रथमा-कृति: 'नन्दिकेश्वरसंहिता' वर्तते, किन्तु ग्रन्थोऽयमधुनानुपलब्ध एवास्ति । केवलं समुद्धरणमात्रेण सत्तास्य वरीवर्ति । 'नन्दिकेश्वरसंहिता' नाटचपरो ग्रन्थ: प्रतिभासते, यत्र चानुमीयते नाटचशास्त्रस्य सम्वादाभिनयगीतवाद्यरसादिप्रमुखविषयाणां विवेचनं भवेत् ? एतदपि सम्भाव्यते यन्नन्दिकेश्वरसंहिताया: कश्चित् खण्डितांशो भवेत्प्राप्त:, यमाधारीकृत्य [illegible] संयोज्य 'अभिनयदर्पण:' संगीतपरानध्यायान् सयोज्य च 'भरतार्णव:' सम्पादितो भवेत् । शेषश्च विषय: कालकलया विनाशमुपगत: । यतो ग्रन्थद्वयमद: परस्परं पूरकतया प्रतिभासते । 'भरतार्णवे' प्रारम्भिकाध्यायचतुष्टयमभिनयपरमवशिष्टंच संगीतपरं विद्यते । प्रारम्भिकाध्यायचतुष्टये तु हस्ताभिनयस्य विवेचनं विद्यते । ग्रन्थारम्भश्च हस्ताभिनयेनैव भवत्यतो ज्ञायते यद्ग्रन्थस्य पूर्वभागे केचिदपरे विषया आसन् विद्यमाना, ये केनापि कारणेन विनष्टा उपलब्धांशांश्च प्रकाशिता: । एतद्धि 'अभिनयदर्पणो भरतार्णवश्चेति' ग्रन्थद्वयं नन्दिकेश्वरनाम्ना प्रकाशित दरीदृश्यते । तत्राभिनयदर्पण डा० मदनमोहन घोष द्वारा सम्पादितो वर्तते । भरतार्णवश्च १९५७ ईस्व्यां 'सरस्वतीमहल पुस्तकालय, तन्जौर' प्रदेशे प्रकाशितो वर्तते ।

तमिल्भाषायां 'पंचभरतम्' नाम्नी रचनैकोपलभ्यते । एषा नारदेन सम्बन्धिता प्रतिपाद्यते । सम्भवतो नारदेन ग्रन्थेऽस्मिन् संगीतस्य पंचप्रकाराणामुपरि विचारो विहितो भवेत्, यश्च नर्तनेन नाट्येन वा सम्बद्ध: सम्भवेदतएवास्याभिधानं 'पंचभरतमिति' वर्तते । यतश्चादिभरतं मातविगभरतमर्जुनभरतं हनुमत्भरतं नन्दिभरतमिति भरतसम्बद्धानि पंचनामानि श्रूयन्ते । एषु 'आदिभरतम्' एक: संग्रहग्रन्थो विद्यते, यत्र नाटचस्य

---

१. अभिनयदर्पण २-६ ।

२. भावप्रकाशन, शारदातनय, बड़ौदा संस्करण, पृष्ठ २८५ ।

३. काव्यमीमांसा, राजशेखर १।१

नृत्यस्य च सिद्धान्ताः प्रतिपादिताः । अस्मिन् ग्रन्थे पंचस्कन्धा द्वात्रिंशदध्याया द्विशतोत्तरैकविंशतिसंख्यकानि प्रकरणानि षट्सहस्रसंख्याकाः श्लोकाश्चासन् । शारदातनयस्यानुसारमस्य रचनादिभरतेन वृद्धभरतेन वा कृता ।

'मातंगिभरतम्' पश्चाद्भवा लक्ष्मणाचार्यस्य कृतिरस्ति । 'अर्जुनभरतम्' अर्जुनाचार्यविरचितं प्राचीनं पुस्तकं वर्तते यस्मिन् तालहस्तौ विशेषतः विचारितौ । 'हनुमद्भरतम्' नामको ग्रन्थः 'सरस्वतीमहल' नामके ग्रन्थालये सूच्यां क्रमांके प्रथमतश्चतुर्थे प्राप्यते यस्मिन् संगीतनृत्यविषये विचारो विहितः । संगीतविषयकग्रन्थेषु हनुमन्मतस्योद्धरणानि समुपलभ्यन्ते । 'नन्दिभरतः' संगीतस्याचार्य आसीत्, येन संगीतविषयमधिकृत्य पुस्तकं लिखितम् ।

नाट्यशास्त्रे काव्यमालासंस्करणान्ते लिखितमिदम् । **'समाप्तश्चायं नन्दिभरतसंगीतपुस्तकम्'** । एतेन ज्ञायते यदासीत्कश्चिन्नन्दिभरतनामाचार्यः, येन संगीतविषयकं पुस्तकमलेखि । कोऽसौ नन्दिभरतः ? किमयमेकः उत वा द्वौ पुरुषौ ? किमेकस्य द्वयोर्वाभिधानमिदमिति विचारणीयं वर्तते । श्रीमदभिनवगुप्तपादाचार्यः नन्दिनं भरतं च पृथक् पृथक् व्यक्तिद्वयं मनुते तथा तयोरपरं नाम तण्डुः मुनिश्चाभिधत्ते (**तण्डुमुनिशब्दौ नन्दिभरतयोरपरनामनी**) ।[1] महाकविना रामकृष्णकविनापि समर्थितं मतमिदम्-यन्नन्दिकेश्वरस्तण्डुश्चैक एवासीत् । अनेनैव च 'नन्दिकेश्वरसंहिता' नामको ग्रन्थो व्यलेखि, किन्तु ग्रन्थस्यास्य बहुभागो विनष्टोऽवशिष्टश्चांश एव वर्तमानोऽभिनयदर्पणो वर्तते ।

एवं हि श्रूयते यदेकदा शुक्राचार्यादुपात्तविद्यैरसुरैर्देवेभ्यो नृत्ये प्रतियोगिताया सस्पर्धं निमन्त्रणमदायि । अतो देवराजेन नन्दिकेश्वरो भरतार्णवस्य चतुःसहस्रश्लोककलेवरस्य रचनायै प्रार्थितः । नन्दिकेश्वरेण चासुराणां सा प्रतियोगिता स्वीकृता । सुरेन्द्रेण सुमतये भरतार्णवे शिक्षावाप्तये निर्देशो दत्तः । ततः नन्दिकेश्वरेण सुमतये भरतार्णवस्य शिक्षा प्रादायि । अतएव भरतार्णवः 'सुमतिबोधक' पदेनापि व्यपदेशमश्नुते ।[3]

एवं चाचार्यनन्दिकेश्वरस्याभिनयदर्पणो भरतार्णवश्चेति रचनाद्वयी संराजते संस्कृतनाट्यक्षेत्रे । तथा चाभिनयविद्याया उन्मेषकर्त्राऽऽचार्यनन्दिकेश्वरेणाभिनयदर्पणनामके ग्रन्थे चतुर्वर्गफलप्राप्त्युपायभूतं सुखसौभाग्यकरं ब्रह्मानन्दतोऽप्यधिकानन्दप्रदायकं नाट्यशास्त्रमिति मत्वा नाट्यशास्त्रस्याभिनयदृष्ट्या नाट्य-नृत्त-नृत्यरूपेण भेदत्रयं

---

१. अभिनवभारती, बड़ौदा संस्करण, पृष्ठ ८८ ।

२. दि क्वार्टरली जर्नल आफ दि आंध्र हिस्टारिकल् रिसर्च सोसाइटी, भाग ३, पृष्ठ २५-२६ ।

३. इतिनन्दिकेश्वरविरचिते भरतार्णवे सुमतिबोधके चारीद्वयप्रकरणं नाम अष्टमाध्यायः (भरतार्णव, पृष्ठ २८८)

प्रकल्प्य तस्य प्रयोगकालोऽपि निर्दिष्टः। तत्र नाट्यनृत्ययोः प्रयोगो विशेषतः पर्वकाले नृत्तप्रयोगश्चाभिषेकादिमहोत्सवेषु कार्यः। नन्दिकेश्वरमतानुसारेण पूर्वकथासंयुतोऽभिनयः नाट्यम्, भावाभिनयहीनं नाट्यं नृत्तम्, रसभावव्यंजनादियुतं नाट्यं नृत्यमुच्यते।[1]

**अभिनयनिरूपणम्** —

कोऽसावभिनय इत्यभिनयशब्दस्य व्युत्पत्तिं विधास्यता नाट्यशास्त्रे लिखित-माचार्यभरतेन अभीत्युपसर्गपूर्वकप्रापणार्थकात् णीञ् धातोरच् प्रत्यये कृतेऽभिनयशब्दो निष्पद्यते।[2]

कविराजेन विश्वनाथेन 'भवेदभिनयोऽवस्थानुकारः' इत्यभिनयलक्षणमुक्तम् एवं चाभिनये बाह्यप्रसाधनापेक्षया वस्तुनोऽन्तर्भावानभिव्यंजयितुमधिकं महत्वं वर्तते। मनः शरीरयोरेकाग्रतया चान्तर्भावाभिव्यंजनं सम्भाव्यते। उक्तंचाचार्यनन्दिकेश्वरेण यदभिनय-प्रयोगे यस्यां दिशि हस्तसंचालनं कुर्यात्तत्रैव दृष्टिं निक्षिपेत्, यत्र दृष्टिंनिक्षिपेत्तत्रैव मनो निवेशयेत्, यत्र मनस्तदनुसारं भावानभिव्यजयेत्, भावानुरूपं रसान्सृजेत्। यथा चोक्तम्—

> यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः।
> यतो मनस्ततो भावो यतोभावस्ततोरसः॥[3]

एवं नृत्यगीताभिनयादिषु नाट्यांगेष्वभिनयस्य प्राधान्यमुपलभ्यते। तत्राभिनयस्य चातुर्विध्यमुक्तमभिनयदर्पणे —

आंगिको वाचिकस्तद्वदाहार्यः सात्विको परः। तत्रांगैर्निदर्शित आंगिकोऽभिनयः, वाचा विरचितो वाचिकाभिनयः, सात्विकैर्भावैरभिभावितः सात्विकाभिनयः, हारकेयूरा-दिभिरलंकृतः आहार्याभिनयश्चोच्यते।[4] अभिनयस्येमे चत्वारो प्रकारा भगवतो नटराज-स्य शिवस्य चत्वारि रूपाणि सन्ति। उक्तं चाभिनयदर्पणे मंगलश्लोके 'समस्तेयं सृष्टिः यस्यांगिकोऽभिनयः; समस्तं वाङ्मयं यस्य वाचिकोऽभिनयः, चन्द्रतारादिमण्डितं नभः यस्याहार्याभिनयः, स्वयं च यः सात्विकाभिनयरूपेण संराजते, तं नटराजराजं शिवं नमस्कुर्मः। यथा —

---

१. अभिनयदर्पण, श्लोक ११-१६।

२. अभिपूर्वस्तु णीञ्धातुराभिमुख्यार्थनिर्णये।
यस्मात् प्रयोगं नयति तस्मादभिनयः स्मृतः॥ (नाट्यशास्त्र. ८।१)

३. अभिनयदर्पण, श्लोक ३७।

४. ,, , श्लोक ३९, ४०।

आंगिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम् ।
आहार्यं चन्द्रतारादि तं नुमः सात्विकं शिवम् ॥[१]

एषु चतुर्विधाभिनयेषु प्राधान्यतः आंगिकाभिनयस्य विवेचनं दृश्यतेऽभिनयदर्पणे। स चांग-प्रत्यंगोपांगैः प्रदर्शितोऽभिनय आंगिकाभिनय उच्यते । अभिनयदर्पणे नाट्यशास्त्रे च शिरौ हस्तौ वक्षः पार्श्वौ कटीतटौ पादौ चेति षडंगानि निरूपितानि सन्ति । केचित्तु ग्रीवां सप्तममंगं निरूपयन्ति । स्कन्धौ बाहू पृष्ठमुदरमूरु जंघे षड्मानि प्रत्यंगानि निर्दिष्टानि, अपरे नाट्याचार्याः मणिबन्धकौ जानुनी कूर्परौ ग्रीवा चेत्यतिरिक्तानि प्रत्यंगानि निरूपयन्ति । अभिनयदर्पणे दृष्टि भ्रू पुत्तलिकाः कपोलौ नासिका जानुनी दन्ताधरजिह्वा: चिबुकं मुखं मस्तकांगानि चेत्युपांगानि निर्दिष्टानि । एतदतिरिक्तानि पार्श्वौ गुल्फौ करपादानां तलानि, अंगुल्यश्चाप्युपांगानि निर्दिष्टान्यभिनयदर्पणे । नाट्यशास्त्रे चाचार्य-भरतेन शिरः हस्तौ ऊरु पार्श्वौ कटितटौ पादौचेति षडुपांगानि निरूपितानि । यद्यपि भेदोपभेदैरनेकविधानि सन्त्यंगप्रत्यंगोपांगानि, किन्त्वत्राभिनयदर्पणे नृत्यमात्रोपयुक्तान्ये-वांगप्रत्यंगोपांगानि विवेचितानि सन्ति । वस्तुतो हस्तपादा स्वाभिनयस्य मुख्यानि साध-नानि सन्ति । अतएवाभिनयदर्पणे विशेषेणाभिहिताश्च हस्तपादाभिनया इति ।

भरतार्णवो नन्दिकेश्वरस्यापूर्णा कृतिः प्रतिभासतेऽभिनयदर्पणस्य पूरकश्चोच्यते। तत्र सन्ति पंचदशाध्यायाः । यत्र नाट्यस्य विशेषतः संगीतस्य भूयानंशो विवेचितो वर्तते । भरतार्णवस्यादावध्यायचतुष्टये हस्तपाददृष्टिभेदानां प्रतिपादनं विधतेऽनन्तरं च स्थानक-ताल चारी-अंगहार सप्तलास्यादीनां निरूपणं वर्तते ।

**हस्ताभिनयः—**

सर्वैरेव नाट्याचार्यैः हस्ताभिनयस्य भेदद्वयं प्रतिपादितमसंयुतहस्तसंयुतहस्तश्च। तत्रैकेन हस्तेन प्रयुक्तोऽभिनयोऽसंयुतहस्ताभिनयः द्वाभ्यां हस्ताभ्यां प्रयुक्तोऽभिनयः संयुतहस्ताभिनयश्चोच्यते । तत्रासंयुतहस्तस्य सप्तविंशतिभेदाः निरूपिता भरतार्णवेऽ-भिनयदर्पणे तु तस्याष्टाविंशतिभेदाः परिगणिताः । भरतार्णवे निरूपिताः सप्तविंशति-भेदास्तु तथैव विवेचिता अभिनयदर्पणे किन्तु 'त्रिशूल' नामकोऽतिरिक्तभेदोऽपि वर्तते तत्र । नाटयशास्त्रे त्वसंयुतहस्तस्य चतुर्विंशतिभेदाः निरूपिताः सन्ति । संयुतहस्तस्य तु षोडशभेदा निरूपितास्तत्र भरतार्णवेऽभिनयदर्पणे तु त्रयोविंशतिभेदास्तथा नाटयशास्त्रे त्रयोदशभेदाश्चोक्ताः संयुतहस्ताभिनयस्य ।

भरतार्णवे नृत्तहस्तानां सूच्यान्तु षोडशप्रकारका नृत्तहस्ता उल्लिखिताः, किन्तु ग्रन्थमध्ये द्वाविंशतिप्रकारा नृत्तहस्ताः सन्ति विवेचिताः ।[२] 'सरस्वतीमहल' नामके पुस्तकालये विद्यमाने हस्तलेखे षोडशनृत्तहस्तातिरिक्ताः षडन्ये नृत्तहस्ताः वर्णिताः सन्ति । एवं पाण्डुलिपिनिर्दिष्टानां षण्णां नृत्तहस्तानां संयोजनेन द्वाविंशतिविधा जायन्ते

---

१. ,, , श्लोक १ ।
१. भरतार्णव, अध्याय ३ ।

नृत्तहस्ताः । अभिनयदर्पणे त्रयोदशविधा नृत्तहस्ताः तथा नृत्तहस्तानां पंचधा गतयश्च सन्ति निर्दिष्टाः । नाट्यशास्त्रे तु त्रिंशद्विधा नृत्तहस्ताः सन्ति निरूपिता, भरतार्णवे नृत्तहस्तेषु केचिद्धस्ता संयुतहस्तैस्सह योजिताः, नाट्यशास्त्रे च ते नृत्तहस्तेषु सम्मिलितीकृताः । अतो भरतार्णवे नृत्तहस्तानां संख्या न्यूना नाट्यशास्त्रे चाधिका वर्तते । एतदतिरिक्तं भरतार्णवे बृहस्पतिमतेनापि हस्ताभिनयस्य सप्तविंशतिभेदा निरूपिताः सन्ति ।

**पादाभिनयः**—

आचार्य नन्दिकेश्वरेण हस्ताभिनयस्येव पादाभिनयस्यापि महत्त्वमंगीकृतम् । भरतार्णवे चतुस्त्रिंशत्पादभेदाः सन्ति निर्दिष्टाः ।[1] अभिनयदर्पणेतु मण्डलमुत्प्लवनं भ्रमरी पादचारिका चेति चतुर्धा पादभेदाः निरूपिताः । नाट्यशास्त्रेऽपि एत एव पादभेदाः सन्ति वर्णिताः । किन्त्वेते भेदोपभेदैरनेकविधा भवन्ति ।

एवं च नन्दिकेश्वरमतेन चतुर्दशधाः मतान्तरेण च पंचधा एवचैकोनविंशतिविधा शिरोभेदाः निरूपिताः भरतार्णवे । ततश्च षट्त्रिंशत् दृष्टिभेदाश्चापि विवेचिताः सन्ति ।

**नृत्यविवेचनम्** —

भारतीयनाट्यपरम्परायां संगीतस्य महत्त्वपूर्णभूमिका वर्तते । संगीतमभिनयस्य जीवनाधायकं तत्त्वमस्ति । अतएवाचार्यनन्दिकेश्वरेण नाट्येन सह संगीतमपि विचारितम् । संगीतस्य तु महत्वं सर्वैरेवाचार्यैः स्वीकृतम् । न केवलं भारतीया एव, अपितु पाश्चात्यविद्वांसोऽपि संगीतस्य महत्त्वं स्वीकुर्वन्ति । भारतीयपरम्परा संगीतस्यान्तर्गते गीतस्य वाद्यस्य नृत्यस्य च प्रयोगं समर्थयति । यथा—

गीतं वाद्यं च नृत्यं च त्रयं संगीतमुच्यते ।[2]

संगीतस्य प्रमुखतत्त्वं नृत्यमस्ति । नृत्यं विना संगीतस्यापूर्णतैव मन्यते । नृत्येन सह प्रयुज्यमानं गीतं वाद्यं च समधिकं मनो रंजयति । नाट्यशास्त्रानुसारं नाट्ये नृत्यस्य प्रयोगो भगवतः शंकरस्य प्रेरणया संजातः । भरतेन प्रयुक्तस्य 'त्रिपुरदाह' नाम्नो डिमस्य पूर्वरंगो नृत्येन हीनत्वात् 'शुद्ध' एवासीत् । भगवता शंकरेण तद्गीत-वाद्ययुतस्य नृत्यस्य प्रयोगेन समलंकृत्य 'चित्र' रूपेण प्रस्तुतीकरणाय समाज्ञप्तः 'तण्डुः', यत्स भरताय अशिक्षयत् ।[3] तण्डुना प्रयुक्तं तन्नृत्यं 'ताण्डव' नाम्ना प्रथितम् । ताण्डवनृत्यं नानाप्रकारैः करणैरंगहारैश्च युक्तं भवति । अंगहारः करणं रेचकमिति सन्ति नृत्यसम्बन्धीनि तत्त्वानि । नृत्ये ताल-लय-गीत-वाद्यानामपि सन्निवेश औचित्येन राजते ।

---

१. भरतार्णव, अध्याय ४, श्लोक २८८-२८६, ३०१-३०४, ३३० ।
२. संगीत रत्नाकरः, प्रथमाध्याय, स्वरगताध्याय, श्लोक २१ ।
३ नाट्यशास्त्र ४।१२-१८ (बड़ौदा संस्करण)

**करणनिरूपणम्**—

नाट्यशास्त्रे प्रतिपादितं यत्समस्तानामेवांगहाराणां निष्पत्तिः करणादेव जायतेऽतोऽङ्गहारविवेचनात्प्रागेव करणविवेचनमावश्यकमिति ।[1] भरतार्णवेऽङ्गहारान्तर्गतं करणविवेचनमपि कृतम् । नृत्ये हस्तपादादीनां गतयः 'करण' व्यपदेशं लभन्ते ।[2] प्रतिकरणे हस्तपादानां मुद्रारचना जायते । नाट्यशास्त्रेऽष्टोत्तरशतप्रकारकाणां करणानामुल्लेखो वर्तते । स्थानकम्-चारी-नृत्तहस्तादीनि सन्ति करणानां विभिन्नानि तत्त्वानि । भरतार्णवे विस्तृततया विचारितानि तत्त्वानीमानि ।

**स्थानकम्**—

विद्यते 'स्थानकं' करणानामेकं तत्त्वम् । नृत्ये स्थितेर्मुद्रा स्थानकमुच्यते । हस्तपादानां स्थितयः करणमुच्यते । स्थितेर्मुद्रापि विद्यत एकविधा पादस्थितिरेव । अतएवोच्यते स्थानकं करणस्य तत्त्वमिति । भरतार्णवे द्वात्रिंशद्विधानि स्थानकानि प्रतिपादितानि ।[3] यत्र च स्थितेर्विभिन्नानां मुद्राणां स्वरूपाणि मुद्राश्च विस्तृततया विवेचिताः । अत्र सप्त पुरुषजातीयाः सप्त स्त्रीजातीयाः अष्टादश च मिश्रजातीयाः सन्ति । नाट्यशास्त्रे षण्णां पुरुषजातीनां तिसृणांच स्त्रीजातीनां समुल्लेखो वर्तते, नात्र मिश्रितजातयो वर्णिताः । 'भरतार्णवे' नृत्यवर्णनाय यासां स्थितीनां वर्णनं विद्यते तासां प्रतिपादनं नवमाध्याये विराजते । नृत्यार्थमतीवावश्यका इमाः । आसु या 'सप्तमस्थितिः' विद्यते तस्या वास्तविकाभिधानपरिज्ञाने काठिन्यं प्रतीयते यतः केषुचित् स्थलेषु 'चान्द्रिक' इत्यभिधयापरत्र च 'चाण्डिक' इत्यभिधया च वर्णितैषा । सप्तस्थितीनां मूललेखकरूपेण सप्तदेव्यो मातरो वा परिगणिताः, यासां नामानीमानि प्रसिद्धानि— 'ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी वाराही-इन्द्राणी-चामुण्डा चेति । अतएव सिद्धचतीदं यच्चाण्डिकमिति नामैव समुपयुक्तं न तु चान्द्रिकमिति ।

**चारीनिरूपणम्**—

'चारी' इत्यपि विद्यते करणानामेवैकं तत्त्वमिति । नृत्ये चास्य सविशेषं महत्त्वमंगीकृतम् । भरतेन नाट्य-नृत्ययोरुभयोरपि कृते निरूपितं चार्याः महत्त्वम् । नाट्यशास्त्रे कटिभ्यामुरूभ्यां जंघाभ्यां पादाभ्यांच विहितस्याभिनयस्य समानीकरणं 'चारी'

---

१. सर्वेषामंगहाराणां निष्पत्तिः करणैर्यतः ।
(नाट्यशास्त्र ४।२९)

२. हस्तपादसमायोगो नृत्यस्य करणं भवेत् ।
(नाट्यशास्त्र ४।३०)

३. भरतार्णव ५।३३३-३३८ ।

इति नाम्ना व्यपदिष्टम् ।[1] भरतार्णवे नन्दिकेश्वरेण पादैकेन क्रियमाणस्याभिनयस्य चारीति व्यपदेशः कृतः ।[2] चारीद्वारैवांगहाराणां करणानां च रचना जायते । भरत-नाटयशास्त्रानुसारमेकपादेन क्रियमाणः पाद प्रचारः 'चारीति' व्यपदिश्यते । पादद्वय-क्रियमाणा च चेष्टा करणमिति निर्दिश्यते । करणानां समायोगेन 'खण्डस्य', त्रयाणां चतुर्णां वा खण्डानां योगेन 'मण्डलस्य' च परिकल्पना क्रियते ।[3] भरतार्णवे चाकाश-चारी भूचारी चेति रीत्या वर्गद्वये विभागो विहितश्चार्याः । नाटयशास्त्रे चाकाशचार्याः षोडशभेदाः भूचार्यश्चापि षोडशभेदास्संकलनेन द्वात्रिंशद्भेदा निरूपिताश्चार्याः । अभि-नयदर्पणे तु केवलमष्टावेव चार्यो निर्दिष्टाः, न तत्राकाशचारी भूचारीति विभागो दृश्यते । भरतार्णवे चाकाशचारी भूचारीति भेदद्वयं प्रकल्पितम् । तत्राकाशचार्याः नवधा भूचार्यश्च षोडशभेदा निरूपिताः । आकाशचार्यामाकाशमभिलक्ष्य भूचार्यांच भुवमभि-लक्ष्य प्रयोगो विधीयते । एतदतिरिक्तं भरतार्णवे चारीयुक्तस्य हस्तस्यापि निरूपणं कृतम् । भरतार्णवस्यानुसारं नृत्ये हस्तप्रचारस्य पादप्रचारस्य चोभयोरपि प्रयोगो विधी-यते । अनयोः कदापि हस्तप्रचारस्य कदाचन पादप्रचारस्य प्राधान्यं भवति ।

नृत्तहस्ता अपि करणानां महत्वपूर्णानितत्त्वानि सन्ति । करणेष्वेव नृत्तहस्तानां प्रयोगो विधीयते । नृत्तहस्तानां मुद्राणां परिज्ञानाय करणज्ञानमत्यावश्यकम् ।

**रेचकः—**

'रेचकः' नृत्यस्य प्रमुखतत्त्वतां बिभर्त्ति । रेचकोऽङ्गस्य सम्बन्धिना चेष्टा वर्तते । असौ करणेभ्यश्चारीभ्यश्च पार्थक्यं वहति । रेचकस्य क्षेपणम्, पृथक्करणम्, नम्रीभवनं वा विद्यतेऽर्थः । हस्तपाद-कटि ग्रीवाणां विभिन्नमुद्रासु संचालनं रेचकपदवाच्यमस्ति । नाटयशास्त्रे पादरेचकः कररेचकः कटिरेचकः कण्ठरेचकश्चेति चत्वारो प्रकाराः

---

१. एवं पादस्य जंघाया ऊर्वोः कटयास्तथैव च ।
समानकरणे चेष्टा चारीति परिकीर्त्तिताः ॥
(नाटयशास्त्र. बड़ौदा संस्करण १०।१)

२. यत्केवलेन पादेन नृत्तं सा चार्युदाहृता ।
(भरतार्णव ८।५२१)

३. एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता ।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डेस्त्रिभिश्चतुर्भिर्वा संयुक्तैर्मण्डलं भवेत् ॥
(नाटयशास्त्र, बड़ौदा संस्करण १०।३-४)

निरूपिताः ।[१]

**तालविवेचनम्—**

'ताल' शब्दः 'तल्' धातोर्निष्पद्यते, यस्यार्थो 'हस्ततल' इति वर्तते । भरतकोशे लिखितमस्ति यत् 'ता' इति शिवस्य 'ल' इति शक्तेश्च प्रतीकतां बिभर्त्ति । एवं शिवशक्तिसमायोगेन च तालस्योत्पत्तिर्भवति ।[२] 'ताल' शब्दोऽयं गीतं वाद्यं नृत्यमिति संगीतस्य तिसृणामपि विधानां कृते लयात्मिकामाकृतिं वितनुते । भरतार्णवानुसारं द्रुत-लघु-गुरु-प्लुत-काकपद (हंसपद)—विरामा इति षडंगानि तालस्य प्रोक्तानि । एषु द्रुतस्यार्धमात्रा भवति । शास्त्रेऽस्याभिव्यक्तिर्व्योमव्यंजन-विन्दुक-तारक-नयन वृत्तैर्जायते । लघोरेका मात्रा विद्यते । सरल-ह्रस्वव्यापक-इषु-दारितानि सन्त्यस्य नामधेयान्यपराणि, गुरोर्मात्राद्वयं भवति । अस्यापरं नाम वक्रश्चन्द्रजन्मा च वर्तते । प्लुते सन्ति तिस्रो मात्राः । अस्यापरं नाम सामोद्भवः त्र्यंकः दीप्त इत्यपि वर्तते । हंसपदे भवन्ति चतस्रो मात्राः । इदं निःशब्दमप्यभिधीयते । विरामो यति-चरणांघ्रिपद-त्रुटि-वन्धशब्दैरपि ज्ञायते ।[३] तालेषु यतेः प्रयोगो द्रुतस्य लघोश्चानन्तरं भवति । एष द्रुतलघ्वोरग्रिमसोपानमभिधीयते । यतेः प्रयोगो तालस्य साधु समापनाय भवति । द्रुतस्य लवोश्चार्द्धभागो यतिरिति निगद्यते । अर्धद्रुतमर्धलघुरप्युच्यत एषः । केचिद्विद्वांसो द्रुतस्यानन्तरं लघोर्वानन्तरं प्रयुज्यमानमिममर्धद्रुतमेव वदन्ति । भरतार्णवेऽष्टोत्तरशततालानिरूपिताः । नाट्यशास्त्रे तु नाष्टशततालाः प्रोक्तास्तत्र गीतैः वाद्यैश्च सम्बद्धास्तालाः । भरतार्णवे चेमे ताण्डवेन लास्येन च सम्बद्धाः । नृत्ये संगीतापेक्षया तालस्यावश्यकता सविशेषा वर्तते ।

**अंगहारविवेचनम्—**

आचार्यनन्दिकेश्वरेण भरतार्णवेऽङ्गहाराः सविस्तरं वर्णिताः । प्रयोगविधिश्चैषां नन्दिकेश्वराय (ताण्डवे) शिवेन निर्दिष्टः । नन्दिकेश्वरश्च भरतानशिक्षयत् । भरतार्णवेऽङ्गहाराणां निष्पत्तिरित्थं वर्णिता—

> आश्चर्यशब्दवचनैस्तत्तत्तालयोद्यतैः ।
> करणानां मेलनं स्यादंगहारनृतिक्रमः ।।[५]

---

१. पादरेचक एकः स्याद् द्वितीयः कटिरेचकः ।
करेरेचकस्तृतीयस्तु चतुर्थः कण्ठरेचकः ।।
(नाट्यशास्त्र, बड़ौदा संस्करण, ४।२४८)

२. शिवशक्तिसमायोगात्तालनामाभिधीयते । (भरतकोष, पृष्ठ ८)

३. भरतार्णव ७।४३०-४३४ ।

४. लघुद्रुतयोश्चापि विरामः परियुज्यते ।
(भरतार्णव ५।४३६)

५. भरतार्णव ६।५७६ ।

भरतार्णवेऽन्यमतेनापि निगदितांगहाराणां निष्पत्तिः । तत्र केचन विचक्षणाः प्रातःकालीनकार्यक्रमे क्रियमाणं नृत्यमंगहारं निरूपयन्ति ।[1] अपरे च विज्ञा अभिनयैक-भागसमाप्तौ हाव-भावादियुताभिर्मुद्राभिः क्रियमाणं नृत्यमंगहारं वदन्ति ।[2] भरतार्णवे नवधांगहारा विवेचिताः । प्रत्येकस्यांगहारस्य सम्बन्धो रसेन योजितः, सौन्दर्यशास्त्रेणापि सम्बद्धा निरूपिता इमे । तालानां गतिविशेषवशादंगहारा द्वेधा विभजितुं शक्यन्ते । त्र्यो वा भवन्तु पादप्रचारास्तत्र चत्वारो वा । प्रतिवर्गे षोडशांगहारा भवन्ति । एवं संकलनेन द्वात्रिंशद्विधा अंगहारा भवन्ति । भरतार्णवे तु ये नवांगहाराः प्रदर्शितास्ते रस-परत्वाद्रससंख्यानुगततया प्रतीयन्ते । वस्तुत इमे विशेषा अपि भवितुं शक्यन्ते । प्रत्यं-गहारे करणसंख्या निर्धारिता, करणानि चांगहारान्तर्गतानि । नाट्यशास्त्रप्रभृतिग्रन्थेषु द्वात्रिंशद्विधाअंगहारा वर्णिताः । षोडशत्रयस्तालाः त्रिधा लयस्थितिसहिताः निष्पाद्यन्ते । षोडश चतस्रतालाश्च चतुर्धा लयस्थितिभिस्सह निष्पाद्यन्ते । प्रत्येकांगहाराणां नृत्यानांच चालनं निरन्तरं क्रियाशीलतां विधातुं स्थितिं प्रदर्शयितुं च ये ये वर्ण्यास्तालाः सन्ति ते नाटयशास्त्रे प्राच्य-पुस्तकेषु च नोपलभ्यन्ते; किन्त्वेकस्मिन् हस्तलेखे ते सुरक्षिताः लभ्यन्ते । देवेन्द्राचार्येण प्रणीतोऽयं हस्तलेखः 'संगीतमुक्तावली' नाम्ना विराजते 'सरस्वतीमहल' नामके पुस्तकालये ।[3] किन्तु भरतार्णवे येऽङ्गहारा दृष्टिगोचरा भवन्ति ते सर्वथा विभिन्ना एवेतेभ्यः । भरतार्णवे वर्णितेष्वंगहारेषु विशिष्टहावभावानां प्रदर्शनं प्रत्येकरूपस्य सोद्देश्यप्रयोगश्चान्तर्निहितो वर्तते । एषां नामकरणमपि निश्चितवर्ण्य-विषयस्य वर्ण्य रसस्य चाश्रयेण विहितं वर्तते । 'एषु' 'ललित' नाम्नोऽङ्गहारस्य यानि पंचरूपाणि सन्ति तेषामुद्देश्यः शृंगाररसो वर्तते । एवं 'विक्रम' नाम्नोऽङ्गहारस्य ये त्रयो विभागाः कृतास्ते वीररसं सूच्यन्ति । 'कारुणिक' नाम्नोऽङ्गहारस्य यानि चत्वारि रूपाणि निर्दिष्टानि तानि करुणरसेन सम्बद्धानि । 'विचित्रांगहारस्य' रूपद्वयमद्भुतेन सम्बद्धम् । एवं 'विकलांगहारस्य' रूपद्वयं हास्यरसजनकम् । 'एवमेव' भीमांगहारस्य' रूपद्वयं भया-

---

१. वदन्ति केचिद्विबुधा भरतार्णवविक्षणाः ।
प्रातर्नृत्तप्रकटनैरंगहारो विधीयते ।।
(भरतार्णव ६।५८०)

२. एवं वदन्ति च परे तयोरुत्पत्तिरिष्यते ।
अर्थाभिनयमार्गेण सम्भूतो यो नृतिक्रमः ।।
(भरतार्णव ६।५८१)

३. 'संगीत मुक्तावली' नामक दो हस्तलेख एक ही लेखक के प्राप्त हुये हैं । उनमें प्रथम तो ताड़पत्र पर लिखित है जो विषय की सैद्धान्तिक रीतियों का प्रतिपादन करता है । दूसरा सामान्य कागज पर लिखित है जो सिद्धान्त की अपेक्षा प्रयोगात्मक विवरण प्रस्तुत करता है । यह ताल और अंगहार विषय पर एकमात्र पुस्तक है ।'
(भरतार्णव की भूमिका पृष्ठ १२ से अनूदित)

नकरसं, 'विकृतांगहारस्य' रूपद्वयं बीभत्सरसम्, 'उग्रतरांगहारस्य' रूपद्वयं रौद्ररसम्, शान्तजस्य च रूपद्वयं शान्तरसं च सूच्यन्ति ।[1] स्थितयोऽङ्गहाराश्च यद्यपि सामान्य रूपेण निर्दिष्टाः किन्तु जीवन एषां विशेष प्रभावो दृश्यते । योऽयमंगहारशब्दो नाटचशास्त्रे-न्येषु ग्रन्थेषु चोपलभ्यते तस्यैका सीमा निर्धारिता विद्यते । यस्यां नृत्यस्याष्टानां नवानां दशानां तदधिकानांच व्यष्टीनामेवं परमशिवेन नृत्ये परीक्षितानामष्टोत्तरशतकरणानांच प्रतिपादनं दृश्यते । प्रतिकरणेषु स्थितीनां मिश्रणं हस्तपादानां संचालनं शिरश्चालनं सोद्देश्यं दृष्टिपातनं च संयुज्यते । नृत्याभ्यासे करणानामावश्यकताऽनिवार्या वर्तते । एषां क्रियान्वितिदर्शनं मूर्त्तिकलासु जायते । आसु चिदम्बरे तंजौरप्रदेशे च विद्यमानानां मन्दिराणां कला प्रसिद्धा ।[2] एवमिदं कथयितुं शक्यते यन्नाटचशास्त्रे ग्रन्थान्तरेषु च निर्दिष्टा । द्वात्रिंशदंगहारा भगवता शिवेन भरतार्णवे प्रोक्ताश्चांगहारा भगवत्या पार्वत्या च प्रदत्ताः सन्ति । किन्तु केचिद्विद्वांसः भरतार्णवे वर्णितानंगहारानपि शिवेनैव दत्तान्मन्य-न्ते । वस्तुतो भरतार्णवे वर्णिता अंगहारा रसपराः सन्ति । नाट्ये निरूपितान् नवरसा-नभिलक्ष्येमे नवांगहारा विवेचिता नृत्यरूपता चैषां मानिता । नाटचशास्त्रे च वर्णनमेषां केनाप्यन्येनोद्देश्येन कृतं प्रतिभाति ।

**सप्तलास्यनिरूपणम्—**

नाटचशास्त्रे ताण्डवलास्यभेदेन द्विधानृत्यनिरूपणं कृतम् । ताण्डवं शिवेन लास्यं च पार्वत्या सह सम्बद्धम् । ताण्डवलास्ययोरुद्भावनायां शिवपार्वत्योर्द्वयोरेव योगदानमभूत् भरतेन लास्यस्य दशधोल्लेखो व्यधायि ।[3] भरतार्णवे नृत्यरूपाणां सप्तसमूहरूपाणां या वर्णना विहिता सा सप्तलास्यपदवाच्या विद्यते । एतेषां संख्याः सप्त निर्दिष्टाः—शुद्ध-देशी-पेरुणी-प्रेंखणी-कुण्डली-दण्डक-कलशाश्चेति ।

---

१. भरतार्णव ९।५४९-५७७ ।

२. 'चिदम्बरम्' के मन्दिर में नटराज मन्दिर के पूर्व और पश्चिम के गोपुरो पर चट्टानों को काटकर 'करण' बनायें गयें हैं । प्रत्येक चित्र के नीचे नाटचशास्त्र के तत्सम्बन्धी श्लोक भी दिये गये हैं । इसी प्रकार तञ्जौर के मन्दिर में एक दूसरी कृति है ।...इसकी ड्योढ़ी मैं चारों ओर करणों की स्थितियाँ खोदी गई हैं । ये करण लगभग इक्यासी हैं । इसके अतिरिक्त सत्ताइस करण और भी हैं, परन्तु वे अपने रूप से उत्कीर्ण नहीं हैं । इन स्थितियों में प्रत्येक के चार हाथ हैं, जो शिव के नृत्य को सूचित करते हैं । प्रत्येक स्थिति लगभग तीन फुट की है । नाटच के वर्णन में यह चिदम्बरम् से भी बढ़ कर है ।

(भरतार्णवं की भूमिका से उद्धृत)

३. लास्यं दशविधं ह्येतदङ्गनिर्देशलक्षणम ।

(नाटचशास्त्र, बड़ौदा १९।१२०)

शुद्धनाट्ये सप्तविधास्ताण्डवाः सम्मिलिताः।[1] एषु प्रत्येकस्ताण्डवो गति-करणचारीतालैर्युक्तो भवति । 'गतिः' चलनस्यस्थितेश्च संयोगरूपो विद्यते । भरतार्णवे शुद्धनाट्याय षड् गतयो निर्दिष्टाः।[2] एषु दक्षिणभ्रमणं नाम ताण्डवो त्रिगतिभिर्मिश्री भूतम् । शेषेषु च ताण्डवेषु द्वयोर्मध्यगामिनी गतिरेका भवति । एवं षट्सु ताण्डवेषु निस्रो गतयो भवन्ति । गतिविरामेच करणानि प्रयुज्यन्ते । हस्तपादसंचालन क्रियायोग करण-मिति व्यपदिश्यते । करणान्ते च चारीणां प्रयोगो निर्दिष्टः । भरतार्णवे षट् करणानि चार्यश्च निर्दिश्यन्ते ।[3]

प्रत्येकताण्डवस्य तालयुक्तत्वमनुनिर्दिष्टम् । तालाय च वाद्यनियमाः समुल्लि-खिताः । एवं 'दक्षिणभ्रमण' नामकं शुद्धनाट्य तिसृभिर्गतिभिस्त्रिभिः करणैस्त्रिसृभि-श्चारीभिस्त्रिभिस्तालैश्च मिश्रितं भवति । शिष्टेषु षट्सु ताण्डवेषु द्वयोर्मध्ये एका गति-रेकं करणमेकाचारीएकस्तालश्च वर्तते । एवं शुद्धनाट्यस्य सप्तताण्डवेषु षड् गतयः

---

१. दक्षिणभ्रमणं पूर्वं वामस्यभ्रमणं पुनः ।
लीलाभ्रमणमेव स्यात्भुजंगभ्रमणं ततः ।।
विद्युद्भ्रमणमेव स्याल्लताभ्रमणमेव च ।
ऊर्ध्वताण्डवमित्याहुः सप्तधाताण्डव क्रमः ।।

(भरतार्णव १३।७०९-७१०)

२. मयूरगतिरादौ स्याद्राजहंसगतिस्तथा ।
कृष्णसारगतिः पश्चात्कीर्तिता भरतादिभिः ।।
गजस्य गतिराख्याता तदनन्तरमेव च ।
सिंहस्य च गतिः कार्या ताण्डव परिकल्पितम् ।।

(भरतार्णव १३।७१२-७१३)

३. मयूरललिते चारीं समपादाभिधानकाम् ।
हरिणप्लुतके चारीं स्थितावर्तां तथोदिताम् ।।
गंगावतरणं चारीमूरुद्वृताभिधानकाम् ।
करिहस्ताख्यकरणं चारीं तां वक्त्रबन्धकाम् ।।
सिंहविक्रीडितं चारीं स्यंदितेति प्रकीर्त्तिताम् ।
कीरभूषणकं चारीमुत्स्यन्दित प्रकीर्त्तिताम् ।।

(भरतार्णव १३।७१८-७२०)

षट्करणानि षट् चार्यः षट् तालाश्च निर्दिष्टाः । देशीनाट्ये तु पंचधा ताण्डवाः सम्मिलिताः ।[१] एषु प्रत्येक एव ताण्डवो गति करणचारीतालैर्युज्यते । भरतार्णवे देशीनाट्याय पंचगतयो निर्दिष्टाः[२] गत्यन्ते करण-चारीणां प्रयोगो भवति । अतः पंचभ्यो देशीताण्डवेभ्यः पंचकरणानि पंचैव चार्यः निर्दिष्टाः ।[३] भरतार्णवे निर्दिष्टानां निकुंचितादि पंचप्रकाराणां देशीताण्डवानां कृते पंचगतयः, पंचकरणानि, पंच चार्यः, पंच तालाश्च निर्दिष्टास्तथा तेषां प्रयोग विधयोऽपि निर्दिष्टाः ।

सप्तलास्येषु शुद्धदेशीनाट्याभ्यां भिन्नाः पेरूणी-प्रेङ्खणीकुण्डली-दण्डिक-कलशाश्च पंचलास्याः क्रमशो ब्रह्म-सरस्वती-विष्णु-लक्ष्मीभ्यश्च प्रकाशिताः सन्ति । एषु पेरुण्याः ब्रह्मणः, प्रेंखण्याः सरस्वत्याः, कुण्डल्याः विष्णोः, दण्डिककलशयोर्महालक्ष्म्याः सपुत्पत्तिर्निर्दिष्टा भरतार्णवे ।[४] पेरुण्यादिकलशपर्यन्तपरिगणिताः पंचलास्याः शब्दस्य ध्वनिना सह नृत्यन्तेऽन्ते च करणचारीभ्यां योजनां परिभावयेत । भरतार्णवे पंचलास्यानां कृते हेरम्ब-शंख-नारायणविष्णुक्रान्त-गरुड़प्लुतनामानि पंचकरणानि एवमस्पन्दित-समोत्सारितमण्डली-मत्तलिका-अध्यर्चिका-एडकाक्रीडितेति पचचार्यश्च निर्दिष्टाः सन्ति । भरतार्णवानुसारं पेरुणीतः कलशपर्यन्तानां पंचलास्यानां सम्मिश्रणश्चारी दर्पणपदभाक् भवति। सप्तलास्येषु गति-करणचारीयुक्तो यो देशी शुद्धश्च ताण्डवो निर्दिष्टस्तस्य संयोगश्चारी-

---

१. निकुञ्चितं कुञ्चितं च सम्यगाकुञ्चितं तथा ।
पार्श्वकुंचितमेव स्यादर्धकुंचितकं तथा ।।

(भरतार्णव १३।७२१-७२२)

२. केकिनीगतिरादौ स्याद्राजहंसी गतिस्तथा ।
हरिणीगतिराख्याता करिणीगतिरेव च ।
सारिकागतिराख्याता...... ..........।।

(भरतार्णव १३।७२३-७२४)

३. मान्मथं करणं चारीं नाम्बा चाषगताभिधाम् ।
सौन्दरं करणं चारीं विच्यवामपि तादृशीम् ।।

वारुणं करणं चारी नाम्नाप्याङ्कितसंज्ञकाम् ।
गजविक्रीडितं चारीं जनितामपि कीर्त्तिताम् ।
चान्द्रं च करणं चारीं शकटाख्यां तथेरिताम् ।।

(भरतार्णव १३।७२६-७२८)

४ प्रेरुणीं पद्मसंभूतः पेङ्खणीं शारदापि च ।
कुंडलीनाट्यकलनां कलयामास माधवः ।
दण्डिकाकलशे नाट्ये ननर्त कमलालया ।।

(भरतार्णव १३।७६०-७६१)

भूषणपदाभिधेयो विद्यते ।[1]

एवमुच्यते—यद्भरतार्णवे यौ द्वौ ताण्डवौ निर्दिष्टौ तयो: शुद्धनाट्यस्य शिवेन देशीनाट्यस्य च पार्वत्या विहितोऽभिनय: । अतएव नन्दिकेश्वरेणानयोरुत्पत्तिराभ्यां-शिवपार्वतीभ्यां प्रतिपादिता—शुद्धनाट्यं शिवश्चक्रे देशिनीं पार्वती तथा ।[2]

भरतार्णवे ताण्डवस्य लास्यस्य च प्रयोग: स्त्रीपुरुष संयोगनिर्वाह्ये नृत्ये कृत प्रतिभाति । एषां समष्टि: सप्तलास्यपदाभिधेया भवति । प्रारम्भे निर्दिष्टयोर्द्वयोर्देशी-शुद्धनाट्ययो: मौलिकतत्त्वं ताण्डवनाम्नाभिहितम् । शेषाणि च पेरुणी-प्रभृतीनि लास्य-तया परिगणितानि ।

**शृंगनाट्यम्—**

भरतार्णवे निर्दिष्टमेतद् यद् द्विविधानां चारीणामंगहाराणां स्थानकानां च संयो-गेन यन्नृत्यं प्रयुज्यते तदेव शृंगनाट्यं निगद्यते ।[3] अस्य शृंगनाट्यपदाभिधेयत्वे हेतुरयं यत्कदापि बसन्तर्त्तौ भगवता शिवेन मनोरमोद्यानसुशोभिते कैलासगिरे: रम्ये शृंगे पार्वती प्रार्थनया नृत्यप्रयोगोऽयं विहित: । शिवेन च स्थानकै: सार्धं तालध्वनीनामनुसारेण नर्तनं विहितम् । नृत्येऽस्मिन्नादावाकाशचारीणां मध्येऽङ्गहाराणां समवसाने च भूचारीणां प्रयोगो भवति ।[4] भरतार्णवे शृंगनाट्यस्य नवधा भेदोपवर्णिता: सन्ति ।

**पुष्पांजलि:—**

अभिनयदर्पणानुसारं रंगपूजां पुष्पांजलिविधिं च सम्पाद्य नृत्यं समारभेदित्युच्यते । भरतार्णवे सप्तलास्यादौ पुष्पांजलि:' प्रयोक्तव्य इत्युक्तम् । तन्दिकेश्वरेण दैविक-मानुष-भेदेन द्वैविध्यमुक्तं पुष्पांजले: । तयोर्दैविके प्रथमं पुष्पांजलि: प्रस्तूयते पश्चाच्च मौलिक-विषयानुसारं नृत्यं प्रयुज्यते । मानुषे तु पुष्पांजलिविधेरनन्तरं 'मुखचालि' नामकं नृत्यं प्रस्तूयते । शृंगनाट्ये च द्वयोरनयो: प्रयोग. प्रारम्भे भवति । तत्र दैविक दिव्यपुरुषै: मानुषं च मानवै: प्रस्तूयते । यदि दैविकं कश्चिद्राजा प्रयोक्तुमर्हति, तदाऽङ्गपूजां विधाय तत्प्रस्तूयेत । मानुषे च सर्वदा शिवपार्वत्यो: पूजां विधाय सप्तलास्यादिनृत्य समारभेत् । नृत्यविधे: निर्विघ्नसमाप्तिहेतवे प्रयोगोऽयं विधीयते ।[5]

---

१. भरतार्णव ७५२-७५६ ।

२. वही १३।७६० ।

३. चारी द्वयैरंगहारै: स्थानकानां तु मेलनात् ।
शृंगनाट्यमिदं सर्वे वदन्ति सुमते बुधा: ।।
(भरतार्णव ११।६३७)

४. भरतार्णव, अध्याय १२ ।

५. भरतार्णव, अध्याय १५।८८९-८९७ ।

**अन्ते च पुनः—**

'ननु वक्तृविशेषनिः स्पृहा गुणगृह्या वचने विपश्चितः' इति न्यायेन मम संस्कृतज्ञानमविगणय्य मम सुरगवीश्रद्धांचावगत्य यन्मदीयं विनीतनिवेदनं श्रीमद्भिः शान्तभावेन समाकर्णि, तदर्थं भवद्भ्यो धन्यवादान् वितरन् विरमामि ।

जयतु जयतु वन्द्या संस्कृता देववाणी ।
भवतु भवतु भूयो भारतं भारतं नः ।।

वसतु वसतु विश्वे सर्वदा बन्धुभावः ।
लसतु लसतु लोके संस्कृतालोक एषः ।।

# अर्वाचीन-जगति योग:

केदारनाथ त्रिपाठी

न तस्य रोगो न जरा न मृत्यु: प्राप्तस्य योगाग्नि मयं शरीरम् ।
(श्वेताश्वतरोपनिषद्)

माननीया: सभाध्यक्षा:, आदरणीया: सम्मेलन सदस्या, अद्येह समवेता: प्रेयांस: पारिषद्याश्च—

"अर्वाचीन जगति योग:" इति विषयमवलम्ब्य किञ्चिद्वक्तुकामस्य मे मनसि केचन प्रश्ना: समुदिता:, यदावर्जितान्त: करणो निबन्धमिमं तत्रभवतां पुरस्तात् प्रस्तोतुमहमुपस्थित: । इतरविद्यानामिव योगविद्याया अपि भारतमेवाद्या भूमिरिति मन्यन्ते सर्वे विपश्चित: । यतो व्यवस्थित रूपेण योगस्य साङ्गोपाङ्गवर्णनमिहैव कृतमुपलभ्यते पातञ्जलदर्शनादिषु । योगिनोऽपीहैव भूयांसोऽभूवन् । किन्त्विदानीं सिद्धान्तरूपेण समुपलभ्यमानाऽपि कालप्रभावात् क्रियारूपेण लुप्तप्रायेति निश्चप्रचम् । अत: कथङ्कारमस्या विद्याया: पुनरुद्धारो भवेदित्ययमेव प्रमुख: प्रश्नोऽस्माकं समक्षमास्ते । अथ च को योग: के च तदुपाया: । किञ्चेदानीं ततो लौकिकं पारलौकिकञ्च प्रयोजनं संसाधितं भवेदित्यादयोऽपि विषया: सन्ति विवादास्पदीभूता: । त एवात्र विचार्यन्ते ।

तत्र 'युजिर् योगे' 'युज् समाधौ' इति धातु द्वयात् योगशब्दो निष्पत्तुमर्हति । किन्तु योगार्थको युजिर्धातु: साधारणव्यवहारविषयीभूतं योगं (संयोगं) प्रतिपादयति । समाध्यर्थकस्तु युज्धातु: कञ्चिद् विशिष्टं योग प्रतिपादयति । यत्र सर्वाऽपि योग प्रक्रिया गर्भिता प्रतीयते । तस्मात् समाध्यर्थक युज्धातुप्रकृतिक एवायं योगशब्द इति मन्तव्यम् । अतएव भगवान् पतञ्जलि: को योग: ? अर्थात् क: समाधि: ? इति प्रश्नाभिप्रायेणैव सूत्रयाञ्चकार "योगश्चितवृत्तिनिरोध:" इति । सामान्य योगस्य तु सर्वविदितत्वात् तद्विषयकजिज्ञासाया एवानुदयात् योगानुशासनमुन्मत्त प्रलापायितं स्यात् । एवं, समाधौ साधारणयोगार्थोऽपि घटत एव—जीवपरमात्मनोर्योगो वा, जीव शिवयोर्योगो वा, शिवशक्त्योर्योगोवेति । युज्यते समाधीयते चित्तमनेनेति करणेऽपि

योगशब्दो निष्पद्येत, येन योग साधनान्यपि योगपदेनोच्यन्ते । तानि च योगसाधनानि मुख्यगौणभेदेन अनेकानि भवन्ति, यथा—क्रिया योगः, समाधियोगः, मन्त्र योगः, जपयोगः, लययोगः, हठयोगः, राजयोगः व्यक्त कुण्डलिनीयोगः, अव्यक्त कुण्डलिनीयोगः, भक्तियोगः, प्रपत्ति योगः, ज्ञान योगः, निष्काम कर्म योग इत्यादीनि ।

भगवद्गीताकारा वर्तमानमहापुरुषाश्च साधारणतो योगं कर्मयोग ज्ञान योग भक्तियोगभेदै विभजन्ति । एषामाशयोऽस्ति—ज्ञानेन कर्मणा, भक्त्या च परमात्मना सह सम्बन्धः स्थापनीय इति । इहैव हि लोककल्याणमपि निहितमस्ति । प्राचीन ग्रन्थेपु हठयोगं, लययोगं, राजयोगमिति त्रीन् भेदान् पश्यामः । एषु हठयोगिनः नेति, धौति, वस्ति, कपालभाति, मुद्रासन प्राणायामादि शारीरक क्रियासु सविशेषं सावधानाः सन्तो देहं स्वस्थ बलिष्ठं कार्यशीलञ्च कर्तुं विशेषेण चेष्टन्ते । केचित्तु विचारं प्रस्तुवन्ति यद् वर्तमानकाले हठयोगो नानुकूलः प्रत्युत प्रतिकूल एवास्ति । अधुना हठयोगेभ पूर्णताधिगमः सर्वथाऽसंभवः । यतो हि हठयोगे निर्विकल्पकः समाधिर्न क्वचित् सिद्धयन् दृश्यते, केवलं सविकल्पकसमाधिपर्यन्तमेव कथञ्चित् साधयन्तो दृश्यन्ते तदभ्यासिनः । यद्यपि कस्मिश्चित् समये हठयोगतोऽपि पूर्णताधिगमः संभव आसीत् । तदर्थमपेक्षिता वीर्य शुद्धिः शारीरिकी शक्तिश्च सर्वथेदानीं दुर्लभे, गुरुरपि सिद्धो दुर्लभ एवेति ।

लययोगिनः समस्त कामनावासनाऽऽसक्त्यादि जालैर्मुक्ताः भूत्वा चित्तं वृत्तिशून्यं विधाय शान्तावस्थां प्राप्तुमुद्युञ्जते । तेषामयं विश्वासोऽस्ति यत् नित्यसिद्धं स्वयं प्रकाशात्मतत्त्वं शुद्धे शान्ते च चित्ते स्वयमेव स्फुरति ।

राजयोगिनस्तु देहमन आत्मतत्त्वानि सम्यग् विज्ञाय स्वरूप प्रतिष्ठिताश्च भूत्वा देहेन्द्रियादिषु स्वाधिकारं सम्पाद्य मुक्तराजवद् विराजन्ते । इतरे च मन्त्र जपासनादि योगा एष्वेव त्रिषु अन्तर्भवन्ति । केचित् मन्त्रयोगस्य स्वातन्त्र्येण प्राधान्यं मन्यन्ते । मन्त्राक्षराण्यपि सविधि अभ्यस्यमानानि स्वाभीष्टतत्त्वप्रकाशकानि भवन्तीति ।

कुण्डलिनीं प्रबोध्य सुषुम्ना द्वारा क्रमशः सहस्रार चक्रे तस्या नयनमेव कुण्डलिनीयोगः । यद्यपि कुण्डलिनी शक्तिसम्बन्धे योगसूत्रेषु काचित् चर्चा न दरीदृश्यते तथापि ग्रन्थान्तरेषु अस्या बहु माहात्म्य वर्णितम्, तज्जागरणरीतिश्च प्रतिपादिता । कथयन्ति, अस्याः शक्तेर्जागरणेन न किञ्चिदवशिष्यते प्राप्यजातम् । हठयोगप्रदीपिका-घेरण्ड संहिता-योगकुण्डल्युपनिषद्-योग शिखोपनिषद्-ज्ञानार्णव तन्त्र-वामकेश्वर तन्त्रेषु वर्णितैषा कुण्डलिनी शक्तिः । कुण्डले-इडापिङ्गले वामतो दक्षिणतश्च वर्तेतेऽस्या इति कुण्डलिनी । इडापिङ्गलयोर्मध्ये सुषुम्नानाडी भवति । तदन्तर्गता चित्रा नाडी चास्ति, तदन्तर्गत एव कुण्डलिन्या मार्गः । समष्टिरूपेण सम्पूर्णं जगच्चालयन्ती अव्यक्तकुण्डलिनीत्युच्यते व्यष्टिरूपेण जीवान् चालयन्ती व्यक्तकुण्डलिनीत्युच्यते ।

मूलाधारस्थ वह्न्यात्मतेजोमध्ये व्यवस्थिता ।
जीवशक्तिः कुण्डलाख्या प्राणाकाराथ तैजसी ॥

महाकुण्डलिनी प्रोक्ता परब्रह्म स्वरूपिणी ।
शब्द ब्रह्ममयी देवी एकानेकाक्षराकृतिः ।।

शक्तिः कुण्डलिनी नाम विसतन्तुनिभाशुभा । (योगकुण्डल्युपनिषत्)
मूलाधार आत्मशक्तिः कुण्डली परदेवता ।
शयिता भुजगाकारा सार्धत्रिवलयान्विता ।। (घेरण्ड संहिता)

कन्दोर्ध्वं कुण्डलीशक्तिः सुप्ता मोक्षाय योगिनाम् ।
बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् ।।
कुण्डली कुटिलाकारा सर्पवत् परिकीर्तिता ।
सा शक्तिश्चालिता येन स युक्तो नात्र संशयः ।।
(हठयोगप्रदीपिका)

मूलाधारे मूलविद्यां विद्युत्कोटि समप्रभाम् ।
सूर्यकोटि प्रतीकाशां चन्द्रकोटिद्रवां प्रिये ।।
विसतन्तुस्वरूपां तां बिन्दुत्रिवलयां प्रिये ।
(ज्ञानार्णवतन्त्रम्)

ध्यायेत कुण्डलिनीं सूक्ष्मां मूलाधार निवासिनीम् ।
तामिष्टदेवतारूपां सार्धत्रिवलयान्विताम् ।।
कोटिसौदामिनीभासां स्वयम्भू लिङ्गवेष्टिनीम् ।
तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः ।। (तन्त्रसारः)

इदमत्र रहस्यम्—देहे ऽस्मिन् षट् चक्राणि सन्ति । १—मूलाधारचक्रम्, २—स्वाधिष्ठानचक्रम्, ३—मणिपूरचक्रम्, ४—अनाहतचक्रम्, ५—विशुद्धचक्रम्, ६—आज्ञाचक्रञ्चेति । तत्र पायु-जननेन्द्रिययोर्मध्यभागो मूलाधारचक्रमभिधीयते । मूलाधारचक्रादुपरि लिङ्गमूले स्वाधिष्ठानचक्रम् अस्ति । तत ऊर्ध्वं नाभिमूलदेशे सुषुम्नासम्बद्धं मणिपूरचक्रमस्ति । तत ऊर्ध्वं हृदय स्थाने ऽनाहतचक्रं वर्तते । तत ऊर्ध्वं कण्ठदेशे विशुद्धचक्रं तथा तत ऊर्ध्वं भ्रूमध्ये आज्ञाचक्रमस्ति । उक्तं च—

मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धञ्च तथाज्ञां च षट्चक्राणि विभावयेत् ।।

एतत्सर्वोपरि मूर्ध्नि सहस्रारचक्रमस्ति, तदेव कुण्डलिन्या अन्तिमं विश्रामस्थानम् । तत्र तस्यां प्रविष्टायां योगिनो न किञ्चित् कर्तव्यं, द्रष्टव्यं, प्राप्तव्यं वाऽवशिष्यते ।

**'बौद्ध योगः'**

प्राचीन-बौद्ध-योगः पातञ्जल योगेन बहुधा साम्यं भजते। भगवान् बुद्धो हि निःसन्देहमेको महान् योगी आसीत्। तेन च समाधि सिद्ध्योरुभयोरप्युपदेशो विहितः। तत्सम्बन्धे वर्णनमिदं प्राप्यते यत् समाधेरुच्चतमावस्थाप्राप्त्यनन्तरमेव तेन सिद्धिरधिगतेति तथापि सिद्धीः प्रति भगवतो बुद्धस्य समादर बुद्धिर्नासीदेव। बौद्ध धर्मस्य मूलसिद्धान्तेषु ध्यानापेक्षया सिद्धीनां स्थानं महत्त्वपूर्णं नस्वीकृतम्। न वा निर्वाणलाभाय ता आवश्यिका अमन्यन्त। तास्तु योगाभ्यासस्यानुषङ्गिक फलरूपेणैव प्राप्ता भवन्तीति। यद्यपि भगवान् बुद्धः स्वशिष्य मोग्गलायनं सिद्धपुरुषेष्वग्रगण्यम्, अनिरुद्धं दूरदृष्टिसम्पन्नेषुश्रेष्ठं, पन्थकञ्च बहुकायनिर्माणे प्रमुखमुक्त्वा तान् प्रशंसतिस्म, तथापि पिण्डोलमेतदर्थं बहुभर्त्सितवान् यतः स केनापि गृहस्थेन प्रेरितो वायावुड्डीनो ऽभवत्। अन्यैरागृहीतोऽपि भगवान् बुद्धः स्वधर्मविस्तरार्थं सिद्धीनामुपयोगं नाकरोत्, प्रत्युत तदुपयोगस्य विरोधमेवाकरोत्। विनयपिटके भिक्षूणांकृते एष आदेश आसीद् यत्ते गृहस्थानां समक्षं सिद्धीनां प्रदर्शनं न कथमपि कुर्युरिति। किन्तु सत्यप्येवं, लोककल्याणेषु तूपयोगो भवितुमर्हत्येव सिद्धीनामिति।

बौद्धेषु राजयोगहठयोगयोर्मूलभित्तावेव तन्त्राणि निर्मितान्यभूवन्। उभयविधयोगसाधनानां स्पष्टं दिग्दर्शनं "गुह्यसमाजतन्त्र" नामकात् तन्त्रग्रन्थात् लभ्यते। ग्रन्थोऽयं ख्रीस्ताब्दस्य तृतीयशतकस्य संभाव्यते। प्रकाशनमस्य गायकवाड़ प्राच्यग्रन्थमालातो जातमस्ति। अत्र योगस्य षडङ्गानि वर्णितानि सन्ति—प्रत्याहारो, + ध्यानं + प्राणायामो, धारणा, ऽनुस्मृतिः, समाधिश्चेति। अयं हि प्रथमः साक्षात्कारोपायभेदः उत्तमसेवेति कथ्यते। अयमेव राजयोगः। द्वितीय उपाय उपसाधनं, यस्याधारो हठयोगोऽस्ति। यदि राजयोगत इष्टदेवतासाक्षात्कारो न जायेत तदा हठयोगस्याभ्यासः सम्पादनीयः। तन्त्रस्य तृतीयं प्रमुखमङ्गं सा क्रिया भवति, यद्द्वारा साधकः वाञ्छितार्थप्रदातुः स्वेष्टदेवस्य दर्शनार्थमुद्युङ्क्ते।

परचित्तज्ञानं बौद्धा चेतः पर्यायज्ञानमामनन्ति। महापरिनिर्वाणसूत्राभिधर्मकोशादिग्रन्थेषु ऋद्धीनामनेके भेदाः समुल्लिखिता लभ्यन्ते। एकस्मादनेकभवनम्, अनेकस्मादेकभवनम्, आविर्भावस्तिरोभावादिरिति। यद्यपि भगवता बुद्धेन प्रत्यपादिजरामृत्युरोगजन्मान्तराणि सर्वथा अपरिहार्याणि सन्ति न तु योगोऽपि तानि निवर्तयितुं क्षमते तथापि देहोपादाने शोधिते सति तानि विशेषतो नानुभूयन्त इति नानर्थकःमभ्यासानामिति।

बौद्धेषु लीलाव्रजनामको विक्रमशिला विश्वविद्यालयस्याचार्यः स्वमन्त्र बलात् तुरूष्काणामाक्रमणं निष्फलमकरोत्। आचार्यकमलरक्षितेन स्वयोगबलादेव तुरुष्काणां पञ्चशती परास्ता कृतेति श्रूयते। अनेन तेषामुपरि पूर्ण-कुम्भाः प्रक्षिप्ताः, येन ते मुखाद् रक्तं वमन्तः कथञ्चित् प्राणानादाय पलायिताः। (द्रष्टव्या-सरस्वती पत्रिका १६१५) बख्तियार खिलजीनामकेन यवनशासकेन विक्रमशिला लुण्ठिता तत्रत्यो

वेशालग्रन्थसंग्रहश्च वह्निसात् कृतः । तत एव बौद्धतान्त्रिका भारताल्लुप्ता देशान्तरे वा गताः ।

जैन-सम्प्रदाये योगः

जैनसम्प्रदायेऽपि समाध्यर्थकादेव युज्धातोर्निष्पन्नम् योगपदम् अस्ति । यथोक्तम् तत्वार्थ वार्तिके—योगः समाधिर्ध्यानमित्यनर्थान्तरम् । लक्षणमपि योगस्य पातञ्जलानुसार्येव दृश्यते—योगश्चित्तैकाग्रनिरोधनम् इति । (तत्त्वानुशासनम् ६१) सिद्धिश्चास्मिन् मते स्वात्मोपलब्धिः, तां प्राप्तः सिद्धः । अर्थात् आत्मनो वैभाविक परिणमनमत्यन्तं दूरीकृत्य तस्य स्वीये शुद्धस्वरूपेऽवस्थापनमेव स्वस्वभावोपलब्धिः सिद्धि. मुक्तिरिति च कथ्यते । तदर्थञ्च यत्नो विधेयः । स च यत्नः स्वशुद्धस्वरूपं प्राप्तानां सिद्धानां ध्यानादिविधिनोपासनमेवास्ति । एवं स्थिरात्मतत्त्वध्यानेनैव जीवनं सफलं भवति—तदुक्तम्—

तेषां जन्म च जीवनञ्च सफलं ध्यात्वात्म तत्त्वं स्थिरम् । (योगसार प्राभृतम् अधि० ९ श्लो० ८२) मूलच्छेदे (पुण्यपाप रूप मूल द्वयच्छेदे) विविक्तं वियदिव विमलं ध्यायति स्वरूपम् । सम्प्राप्तासन्नमार्गा न परमिह पदप्राप्तये यान्ति मार्गम् । (यो. सा. प्रा. अधि० ९ श्लो० ८१) तस्य स्वस्वरूपध्यायिनो मुक्तिमार्ग आसन्नो भवतीत्यर्थः ।

पुनश्च—

येन येनात्मभावेन युज्यते यन्त्रवाहकः ।
तन्मयस्तत्र संयाति विश्वरूपो मणिर्यथा ॥

तेनात्मभावनाऽभ्यासे संनियोज्यो विपश्चिता ।
तेनात्ममयतां याति निर्वृत्यापरभावतः ॥

धुनोति क्षणतो योगी कर्मावरणमात्मनि ।
मेघस्तोममिवादित्ये पवमानो महाबलः ॥

विविक्तात्मपरिज्ञानं योगात् सञ्जायते यतः ।
स योगो योगिभिर्गीतो योगनिर्धूतपावकैः ॥

निरस्तमन्मथातङ्कं योगजं सुखमुत्तमम् ।
शमात्मकं स्थिरं स्वस्थं जन्ममृत्युजरापहम् ॥
यो. सा. प्रा. अधि. ९ श्लो. ५१, ५२, ९, १०, ११

सर्वेन्द्रियाणि संयम्य स्तिमितेनान्तरात्मना ।
यत्क्षणं पश्यतो भाति तत्तत्त्वं परमात्मनः ॥ समाधि तन्त्रं श्लो. ३०

निषिध्य स्वार्थतोऽक्षाणि विकल्पातीतचेतसः ।
तद्रूपं स्पष्टमाभाति कृताभ्यासस्य तत्त्वतः ।।
यो. सा. प्रा. अ. १ श्लो. ४५

शुष्काशुष्का यथा वृक्षा दह्यन्ते दववह्निना ।
पक्वापक्वास्तथा ध्यानप्रक्रमेणाघसञ्चयाः ।।
आत्मतत्त्वरतो योगी कृतकल्मषसंवरः ।
यो ध्याने वर्तते नित्यं कर्म निर्जीर्यतेऽमुना ।।
यो. सा. प्रा. अ. ६ श्लो. ३,५

स्फुटाभिप्रायाः श्लोका एते । अतो न विवरणमर्हन्ति । ग्रन्थोऽयं योगसार प्राभृतनामा एकादश शतके महात्मना अमितगतिना रचित इदानीं मुद्रितः समुपलभ्यते ।

"ख्रीस्त-धर्मे योगः"

सम्प्रदाये ऽस्मिन् योगशब्दस्यार्थः—परमात्मना सह स्वस्यैक्यं पूर्णसाहचर्यसम्बन्ध इति यावत् । ईसामसीहेनोक्तम्—I and my father are One. अर्थात् अहञ्च मम पिता (परमात्मा) चैक एव स्व इति । नहीदं वाक्यमद्वैतार्थाभिप्रायकं, तथा सति "अहं च मम पिता च" इति द्वैतप्रयोगो मा भूत् । अर्थात् उभयोरनुपमो घनिष्ठः सम्बन्धो वर्ततेतराम् परन्तु सर्वथाऽभेदो नास्ति । परमात्मना सह स्वस्यैकताया अयमर्थः—ईश्वरेच्छैव मम जीवनस्य सञ्चालिका पथप्रदर्शिका चास्तीति भावनम्, तथा परमात्मनो मनसि विचारे च स्वीयं पूर्णार्पणमिति च । महात्मनः पालस्य वचन मस्ति—I live and yet no longer, but Christ liveth in me. अर्थात् अहं जीवामि, परमिदानीं नाहं जीवामि, किन्तु ममाभ्यन्तरम् ईसामसीहो जीवतीति । एवञ्च ख्रीस्ते धर्मे परमेश्वरेण सह पूर्णं साहचर्यमेव योगोऽस्ति । ईसामसीहस्य जीवनवृत्तान्ते योगसम्बन्धिनीनां साधनांनां कोऽपि विशेषोल्लेखोनास्ति । तद्दृष्टौ ध्यानं न किमपि बहिरङ्गं साधनम्, प्रत्युत मनोवृत्तेरनवरतं भगवदुन्मुखीकरणमेव ध्यानम्, येन सनातनसत्यस्य तस्य सान्निध्यमनुभूयेतेति । प्रार्थना, भगवन्निर्भरता, वश्यता प्रेमैव च योगसाधनानि सन्ति, यानि ईसामसीहेन परमात्मनोऽधिकाधिकसाहचर्ये सहायकानि प्रतिपादितानि । इत्थञ्च ख्रीस्तधर्मः चित्तवृत्तिनिरोधात्मकं पातञ्जलं योगं साक्षादस्वीकुर्वाणोऽपि तं परम्परया स्वीकरोत्येव, स्वीकरोत्येव च तदन्तरङ्गसाधनं ध्यानमपीति नास्ति सन्देहः ।

आस्तान्तावत् प्राचीनविचारप्रकाशनातिशयो ऽर्वाचीनविचारप्रदर्शन प्रवृत्तस्य । यच्च पूर्वमुदलेखि तत्तूपोद्घातरूपेणैव आवश्यकतयेति । प्रकृतमनुसरामः—

सन्त्यस्मिन्नपि युगे देशे विदेशे च समुत्पन्नाः स्वयमनुभूतयोगाभूयांसो योगिनो ये लोक-कल्याणाय तमेव प्रसिद्धयोगं स्वानुभवेन नवेन जगति प्राचीकशन् । तद्विचारानिह प्रदर्श्य मुख्यप्रश्नोपरि विदुषां ध्यानमावर्जयामि ।

'महर्षेररविन्दस्य योगः''

योगिनोऽरविन्दस्य मते योगमार्गस्य लक्ष्यं न केवलं सामान्यतः सांसारिकाद् देहात्मभावादुत्थाय परमात्मभावाधिगम मात्रमस्ति । प्रत्युत परमात्मभाव एवास्मिन् मानवीये मनसि बुद्धौ, प्राणे, जीवने चावतारणीयो भवति । अस्मिन् भगवतः प्रकटी-करणम्, जडपार्थिवप्रकृतौ दिव्यजीवनस्य निर्माणञ्चास्य लक्ष्यमस्ति । अरविन्दस्य योग-साधनायां कश्चिन्नियतो मानसिकाभ्यासक्रमो नास्ति, नवा ध्यानस्य कश्चिन्नियतः प्रकारो मन्त्रादिर्वा कश्चिदस्ति । किन्तु एतदीययोगसाधनाया आरम्भः, साधकस्य प्रबलारोहणेच्छया, बहिरन्तश्च परमात्मध्यानेन तथा भगवतः प्रभावस्य, तत्कार्याणाम्, अस्माकं हृदये वर्तमानाया भगवत्सत्तायाश्चाभिमुखं स्वप्रवर्त्तनेनैव भवति । एवंविधा भगवदुन्मुखता श्रद्धया, विश्वासेन, आरोहणेच्छया, आत्मसमर्पणेनैव हि समायाति, नान्यथा । अत्रैवं वक्तुं शक्यते यदस्माकं योगो न निजाय प्रत्युत परमात्मनेऽस्ति । न हि वयं योगसाधनाद्वारा सर्वतन्त्रस्वतन्त्र सर्वबन्धविनिर्मुक्तरूपेषु आत्मनोऽभिव्यक्ति सम्पादयामः किन्तु मयि स्वयं भगवानेवाभिव्यक्तो भवतीति । साधनाद्वारा ऽस्माकं मुक्तिः पूर्णकामता, परिपूर्णता वा मयि भगवदभिव्यक्तेरेव परिणामोऽस्ति, सोऽपिनास्मभ्यं किन्तु परमात्मने एव भवति ।

तदर्थमाभ्यन्तरिकस्य विशिष्टाभ्यासस्यावश्यकताऽस्ति यो निश्चितं केवल सदाचारतः कृच्छ्रचान्द्रायणादिकायिकतपोभ्यश्च भृशं कठिनोऽस्ति । स्वस्मिन् भगवच्छक्तेरवतरणाय स्वीयां पूर्वगितां निम्नां प्रकृतिं संशोध्य मार्गे सभावनीयबाधानामपसारणं करणीयं भवति, किन्तु इदं साधनाया अभावपक्ष (पूर्वाकोटिः) एवास्ति । साधनाया भावपक्षस्तु परायाः शक्तेरवतरणस्यानुभव एवास्ति । अयमेव च मुख्यः । इदन्तु सत्यमस्ति यदस्माकं निम्नप्रकृतौ यावन्मात्रया शुद्धता सम्पद्यते तावन्मात्रयैव परायाः प्रकृतेरवतरणे सौकर्यं भविष्यति । परमिदन्तु ततोऽप्यधिकं सत्य वर्तते यत् परप्रकृतेरवतरणं यावन्मात्रया भविष्यति तदनुसारमेव निम्नाप्रकृतिर्निर्मला भविष्यतीति । इदं कथमपि न संभवि यत् सहसैव निम्नप्रकृतिः पूर्णशुद्धा भवेत्, सहसैव परमात्मनः स्थिर-रूपेण पूर्णावतरणं वा भवितुं शक्नुयात् । इदं कार्यद्वयमपि दीर्घकालेन [illegible] क्रमश एव भवतीति । चित्तशुद्धि भगवच्छक्त्यवतरणरूपकार्यद्वयं सहैव चलति, दिनेदिने अधिकाधिकस्थिरतया दृढतया च एकैकमन्योन्यमालिङ्गति चेति अयमेव सामान्यतः साधनायाः क्रमः । एवं प्रकारा च स्थितिः दिव्यीकरणमुच्यते । एवं [illegible] रविन्दमहर्षेर्योगस्य प्रथमं सोपानमस्ति ।

अनन्तरं सदात्मनोऽनुभूतिर्भवति । सदात्मनो रूपद्वयमस्ति—एक आत्मा, द्वितीयश्चान्तरात्मा-हृत्पुरुष इति । आत्मानुभूतौ आत्मा विश्वस्मिन् व्याप्तः प्रतीयते तथा स सर्वपदार्थेभ्यः पृथग्भूतः, स्वरूपेऽवस्थितः, संसारतः सर्वथा ऽसक्तो दृश्यते । परन्तु अन्तरात्मानुभूतौ तु भगवता सहैकत्वं दृश्यते स्वस्मिन् भगवच्छक्तिरनुभूता भवति अत्रैवाहङ्कारस्य कार्यं समाप्तं भवति, तस्य काचिदुपयोगिता नावशिष्यते, अतस्तस्यान्तो

भवति। अहङ्कार (अहम्) स्य स्थाने सदात्मनो ऽनुभूतिर्भवति। यतोहि सदात्मना एकीकरणस्य या स्थितिस्ततः पूर्वमेवाहङ्कारस्यावश्यकता भवतीति।

**"रमणमहर्षे विचार:"**

एतद् विचारानुसारं सामान्यतो निदिध्यासनमेवयोगो ऽस्ति। यद्यपि तस्य नैके प्रकाराः प्रचलिताः सन्ति, किन्तु निम्नोक्ताः पञ्चविधप्रकारा एव विशिष्टाः सन्ति। १—महायोगः, २—मन्त्रयोगः, ३—स्पर्शयोगः, ४—भावयोगः, ५—अभावयोगश्चेति। तस्मिन्नन्तर्यामिनि सदात्मन्येव स्थितिर्महायोगः कथ्यते। महायोगे साध्यसाधनभेदो नास्ति। यदेव महायोगस्य साध्यमस्ति तदेव तस्य साधनमप्यस्ति। अर्थात् साधकेन स्वविचाराणां बाह्यप्रवाहानवरोध्य "अहं कोऽस्मि" इति मूलविचारे आगन्तव्यं भवति। अयं मूलविचार एव साधकं हृच्चक्रे प्रापय्य तत्रैव तं त्यजति। ततः साधकेन तत्रैव निजासनं समवकल्प्य स्थेयं भवति। यतस्तत्रैव हृच्चक्रे साधकस्य गृहस्थितिः सनातनात्मनोऽस्तित्वञ्चास्ति। अस्य महायोगस्य मार्गो यद्यपि सरलः स्वच्छश्चास्ति तथापि बुद्धावागतोऽपि शीघ्रं नावबुध्यते, अनुष्ठानन्तु ततोऽपि अधिकं कठिनमस्ति। किन्तु साधकस्य सविधे भगवतो दयारूपं बलं भवेत् तदाऽस्य सर्वं सुसम्पन्नमेव जायते। यतो भगवद्दयाबलात् तेन कश्चिदुत्तमो गुरुर्लब्धो भवतीति। अत एतद्दृष्टया इतर साधनानि कठिनानि कष्टसाध्यानि च सन्तीति। एतत्सर्वं सङ्गृहीतमेकस्मिन् रमणगीताश्लोके। यथा—

हृदयकुहरमध्ये केवलं ब्रह्ममात्रं,<br>
ह्यहमहमिति साक्षादात्मरूपेण भाति।<br>
हृदि विश मनसा स्वं चिन्वता मज्जता वा,<br>
पवनचलनरोधादात्मनिष्ठो भव त्वम्॥ इति

अवशिष्टेतरचतुः प्रकारेषु मध्ये—स्वराणां यानि मूलानि तेषामात्मन्यन्वेषणम् मन्त्रयोगोऽस्ति। कुण्डलिनीं प्रबोध्य सुषुम्ना द्वारा तस्याः सहस्रारचक्रे प्रापणम् स्पर्शयोगो ऽस्ति। भावानां ध्यानमेव भावयोगः कथ्यते। यथा-भूः पादौ, यस्य नाभि र्वियत्, असुरनिलः, चन्द्रसूर्यौ च नेत्रे इत्यादि। परात्परब्रह्मणो ध्यानमेवाभावयोग इत्यादि। एषु प्रथमं महायोगमेव सर्वोत्कृष्टं मन्यते रमणमर्हषि रिति।

**"योगे पाश्चात्यविचारा:"**

इतर भारतीयविद्यास्विव योगविद्यायामपि अर्वाचां पाश्चात्यमनीषिणां प्रयासोपकारं न वयं विस्मर्तुं शक्नुमः। ते ह्येतद्विद्याप्रभाविता योगसाधायां स्वजीवनं समर्प्य यदनुभूतवन्तस्तदपीह समासत उद्धरामि। ते च कुण्डलिनीयोगतो विशेषतः प्रभाविता दृश्यन्ते। कुण्डलिनीमिमां ते Serpent fire (सर्पवत् वलयान्वितोऽग्निः) इति कथयन्ति। ऋषिशिष्या मैडम ब्लैवेटस्की कुण्डलिनीं विश्वव्यापिनीं विद्युत

शक्ति [Cosmic Electricity] प्रतिपादयतिस्म । यतः कुण्डलिनी विश्वविद्युत्सजातीयाऽत्यन्तप्रचण्डशक्तिरेकास्ति । तयोक्तम्—

Kundalini is called the serpentine or annular power, on account of its spiral-like working or progress in the body of the ascetic, developing the power in himself. It is an electric firy occult power, the great pristine force which underlies all organic and inorganic matter.

(The voice of the silence, p. 27)

अर्थात् कुण्डलिनी सर्पाकारा वलयान्विता वा शक्तिरुच्यते । यतो ह्यस्या गतिः सर्पस्येव वलयाकारा वरीवर्ति । योगाभ्यासिनो यतेः शरीरे इयं चक्राकारा चरति तस्मिन् शक्तिमुद्योतयति । इयमेका वैद्युती अग्निमयी गुप्ता शक्तिरस्ति । इयं प्राक्तनाशक्तिः सेन्द्रियनिरिन्द्रियेषु सृष्टपदार्थमात्रेषु तन्मूलेऽस्ति ।

अस्याः कुण्डलिन्या गतिः प्रकाशगतेरप्यपेक्षया ऽतितीव्रास्ति । मैडम् ब्लैवेट्स्की कथयति—Light travels at the rate of—185000 miles a second, Kundalini at 345000 miles a second.

अर्थात् प्रकाशस्य गतिः प्रतिपलम् १८५००० अर्धक्रोशाः सन्ति, कुण्डलिन्याश्च ३४५००० अर्धक्रोशाः प्रतिपलम् ।

प्रकृतेर्निगूढ विधानानुसारमियं प्रचण्डशक्ति मूलाधारचक्रे सुप्ता मेरुदण्डाधोभागेऽवस्थिता निवसति । मानव पिण्डदेहस्य विशेष प्रत्यङ्गेषु सम्बद्धानि चक्रवद् भ्रमणशीलानि षट् शक्तिकेन्द्राणि सन्ति, तेष्वेव षट्चक्रेषु मूलाधारचक्रमेकमस्ति । षट् चक्रनामानि पूर्वमुक्तानि । चक्राणां सम्बन्धे हड्सनमहोदयेनोक्तमस्ति—

They are the force-centres in the human body and are so called, because in clairvoyent sight, they have the appearance of spinning vortices. They are the six plexuses.

अर्थात् मानवदेहे शक्तिकेन्द्राण्येतानि सन्ति तथा चक्रपदाभिधेयानि अतः सन्ति, यतोऽन्तर्दर्शिभिः तन्तुचक्राणीव दृश्यन्ते । एतानि षड् नाडिजालानि सन्ति ।

पुनश्च—In the heart of this chakram lies the serpent-fire (Kundalini), and there it so sleeps through the ages until the time is ripe for it to be roused.

(Hodson)

अर्थात् अस्य मूलाधार चक्रस्यान्तस्तले सर्पाकारोऽग्निः (कुण्डलिनी) तिष्ठति, तथा तावद्युगं स्वपिति यावदस्या जागरणसमयो नोपतिष्ठते । अग्रेचोक्तम्—यदेयं कुण्डलिनी मेरुदण्डतो भूत्वोपरितो याति तदा एकैक चक्रम् जागरयन्ती चरति, तेन च तत्तच्चक्रमुद्घाटितं जायते भौतिकोत्तर जगतोऽभौतिक जगत् पर्यन्तं मार्गश्च निर्मितो भवति इत्थम् कुण्डलिनी—जागरणेन भौतिकोत्तरस्पन्दानां वहनसाधनानि उपतिष्ठन्ते पुरुषस्य सर्वा शक्तयश्चोद्घाट्यन्ते । अतः परं तासां शक्तीनामुपयोगः कर्तुं शक्यते साधकेन । एवन्दशायामपि मनुष्यः स्वभौतिके देहे जार्गतितराम् ।

(Hodson, p. 213)

मूलाधारादनन्तरं स्वाधिष्ठानचक्रमस्ति, अस्य स्थानं प्लीहासन्निकटेऽस्ति । स्वाधिष्ठानादूर्ध्वं मणिपूर चक्रं नाभिस्थानेऽस्ति । एतद्विषये ब्लैवेट्स्क्याः कथनमस्ति—

There are three principal centres in man—the heart, the head and the navel.

अर्थात् मानवदेहाभ्यन्तरं त्रीणि प्रधान केन्द्राणि सन्ति—हृदयं, मस्तकं नाभिश्चेति । स्वाधिष्ठान मणिपूरयोः कुण्डलिनीद्वारा प्रज्वलितयोः सतोः जीवनक्रमो बलयुक्तो नवशक्तिसम्पन्नो नियतश्च (Normalised) भवति । एवमधिष्ठान चक्रे प्रदीप्ते सति मनुष्यः सूक्ष्मतरलोके स्वच्छन्दतोविहाराधिकारमाप्नोति । मणिपूर प्रदीप्त्या च आत्मरक्षायाः क्षमता विशेषतः प्रवृद्धा भवति । अर्थात् मनोविकाराणामुपरि सबुद्धि-प्रभुत्वप्रदानं करोति ।

मणिपूरादूर्ध्वं हृदयस्थाने विराजमानमनाहतचक्रम् ख्रीस्तसाधकाः 'Mystic rose' इति कथयन्ति । चक्रेऽस्मिन् उद्भासिते सति मनुष्य बुद्धेरुपरि वर्तमानायाः बोधिशक्तेः (intuition) उद्भवो जायते । It becomes the organ of intuition, through it flows the power of the intuitional worlds.

अर्थात् अनाहत चक्रस्योद्बोधेन अन्तर्दृष्टिरुत्पद्यते, तच्छक्तयश्च प्रवाहिता भवन्ति ।

अनाहतादुपरि कण्ठस्थाने विशुद्ध चक्रमस्ति । आधुनिकविज्ञाने थिरायडग्लैण्डस्य (Thyroid gland) अद्भुतकार्याणामाविष्कारोऽपि अनेन विशुद्ध चक्रेणैव सम्बद्धोऽस्ति । अस्मिन् विशुद्धचक्रे प्रज्वालिते सति साधका दिव्य श्रुतिशक्तिं प्राप्नुवन्ति ।

विशुद्ध चक्रादूर्ध्वं भ्रूमध्ये आज्ञाचक्रस्य स्थानमस्ति । चक्रमिदं द्विदलं भवति । एकं दलं पाश्चात्य विज्ञानस्य पाइनियल ग्लैण्डः (Pineal gland) द्वितीयञ्च दल पाइट्यटरी बौडी (Pituitory body) इति कथ्यते । साधारण जीवन विज्ञान ग्रन्थेषु

एतद्ग्रन्थिद्वयं मानवदेहे सञ्जातं निरर्थकं मांसपिण्डद्वयमिति प्रतिपादितम् । अध्यापको विचे महोदयस्तद्ग्रन्थिद्वयं बालुकावृतं कठोर मांस पिण्डमित्युक्त्वा समुपैक्षिष्ट । (Two horny warts covered with grey sand).

किन्तु मैडम ब्लैवेट्स्की तां बालुकां सूक्ष्मं निरीक्ष्य प्रतिपादितवती—The sand is very mysterious and baffles the enquiry of every materialist.

अर्थात् अस्यां बालुकायां महद्रहस्यं गुप्तमस्ति, यतो जडवादिनां बुद्धिः कुण्ठिता जायते इति ।

यस्मिन् क्षणे कुण्डलिनी शक्तिः प्रबुद्धा सती सुषुम्नामार्गतोऽस्मिन्नाज्ञाचक्रे प्रविशति, तस्मिन् क्षणे डा० हड्सनमतानुसारम् कुण्डलिनी इदं ग्रन्थिद्वयमित्थं सञ्चालितं करोति, येनैका ग्रन्थिः धनात्मिकां द्वितीया च ऋणात्मिकां गतिं धारयन्त्यौ महता वेगेन चाचलीतः, द्वे अपि च परस्परं मिलित्वा एकचक्रवत् सञ्जायेते । योग सिद्धा श्रीमती ब्लैवेट्स्की प्रसङ्गेऽस्मिन् लिखति—

The pulsation of the pituitary body, mounts upwards more and more until the current finally strikes the pineal gland and the dorment organ (आज्ञा चक्र) is awakened and set all glowing with the pure Akashic fire (कुण्डलिनी) ।

अर्थात् एतद्ग्रन्थिद्वयमध्ये निम्नस्थाया ग्रन्थेराधिक्येन ऊर्ध्वाभिमुखं स्पन्दनं भवति । तच्च स्पन्दनमुपरितनायां ग्रन्थौ आघातं करोति । तेन चाघातेन सुप्तमिवाज्ञाचक्रं जागर्ति, विशुद्धेनाकाशाग्निना (कुण्डलिन्या) देदीप्यमानं जायते ।

आज्ञाचक्रादूर्ध्वं ब्रह्मरन्ध्रे सहस्रार चक्रमस्ति । आज्ञाचक्रमुद्भासयन्ती कुण्डलिनी सहस्रारे समुपतिष्ठते । एतत्सहस्रार चक्रस्य प्रज्वालनमेव कुण्डलिनी साधनाया अन्तिमा सीमाऽस्ति ।

यदा सहस्रारचक्रं पूर्णरूपेण जागरितं सम्पद्यते तदा देहाभिमान्यात्मनि तादृशी शक्तिर्जायते यत् स यथेच्छं देहात् स्वं विप्रकर्षयेत् पुनः तस्मिन् स्वमावर्त्तयेद् वा । अय मेव स्वच्छन्दो विहार उपनिषत्सु कामचारः कथितोऽस्ति—तस्य सर्वेषु लोकेषु कामचारो भवति । इयमेव सर्वज्ञता सिद्धिरप्यस्तीति । इयमेवावस्था चैनिक योगदीपिकायां वर्णिता यथा—Then body and heart are completely controlled and one is quiet, letting go all entanglements. untroubled by the slightest excitement, with the Heavenly heart exactly in the middle.

अर्थात् तदानीं मानवस्य देहचित्तयोः पूर्णाधिकारः सम्पद्यते स सर्वथा सर्वावस्थासु स्वच्छन्दः सुखासीनो भवति, सर्वबन्धनान्मुक्तो भवति, क्षोभस्य नामापि नाव-

तिष्ठेत, मध्यवर्तिना दिव्यहृदयेन सह निवसति । योगस्येयं चरमा सिद्धिरस्ति—तदा द्रष्टुः स्वरूपेऽवस्थानमिति ।

"मेस्मेरिजम् हिप्नाटिजम्"

मेस्मेरिजम् हिप्नाटिजम्चापि मानसैकाग्रताया एव परिणामौ स्तः । मनुष्यस्य यया शक्त्या मेस्मेरिज-सम्बन्धिनी क्रिया समुत्पन्ना भवति सा शक्तिः इच्छाशक्तिरेवास्ति, यस्या नाम आङ्गलभाषायाम्—Will power इति कथ्यते । इयमिच्छा शक्तिः मनोयोगतः अर्थात् मनस एकाग्रताया अभ्यासेनैव प्राप्यते । अत इदमपि वस्तु भारतीयमहर्षीणामपरिचितं नासीत् । मेस्मेरिकहिप्नाटिकयोरवस्थायां बहिर्मनः शयितं जायते अन्तर्मनश्च तदानीं जा ति । अन्तर्मन एव च सर्वं करोति । मेस्मेरिकहिप्नाटिक शक्त्योर्विकास साधनानि यानि सन्ति, तेषु मुख्यानि—आत्मविश्वासः, दृढसङ्कल्पः शान्तचित्तञ्च । किन्तु सर्वाण्यप्येतानि योगप्रक्रियायामेवान्तर्गतानि सन्तीति नात्र संशयः ।

एतावता प्रबन्धेनेदमायातं यद् योगेन योग महिम्ना च निखिलमेव जगत् प्राप्तपरिचयं कदाचिदासीत् । विशेषतो भारतभूमिरियमितरविद्यावद् योग विद्यायामपि सर्वगुरुतां समाश्रयत इत्यपि निश्चप्रचम् । किन्तु याभ्यो विभूतिभ्योऽस्या एतावन्महत्त्वं कदाचिदवर्धिष्ठ संसारे ता एवाधुना असंभवकलङ्काङ्किताः सर्वत. परिहस्यमाना विद्यामेतामुपेक्षाविषयतां भृशं गमितवत्य इति विशेषतो विचारणीयमद्य विद्वद्भिः । वर्तमानसमये यौगिक्यो विभूतयश्चमत्कारमात्रं न तु वास्तविक्य इति शिक्षित समाजस्य केचिदाचक्षते । तेषां कथनमस्ति यत् जगति चमत्कारो (Miracle) वास्तविको भवितुं नार्हति, यतो नहि प्राकृतिक नियमविरुद्धा कापि घटना भवितुमर्हति ।

डा० हर्नाकः प्रत्यपादयत् यत् इदं ध्रूवसत्यं विद्यते यत् चमत्कारो नार्हति भवितुम् । यत् किञ्चिद् देशकालयो र्घटमानं दृश्यते तत् प्रकृतेः व्यापकनियमाधीनमेव घटते नान्यथा । दार्शनिकप्रवरः स्पाइनोजा अपि कथयति—प्रकृतौ न तादृशी कापि संभविनी या तद् व्यापक नियम विरुद्धा भवेत् । किन्तु कतिपय पाश्चात्यानां कथनमस्ति यत् चमत्कारास्तु अवश्यं सन्ति परन्तु ते प्रकृतौ पूर्वत एव वर्तमाना भवन्ति । तथा यथासमयं विधिना तेषां वाह्यजगति प्रकाशमात्रं भवति ।

कतिपये तु विभूतय. सिद्धयो वा विकृतमस्तिष्कस्य कल्पनामात्रमिति कथयन्ति । ते तु इदमपि कथयन्ति यत् सर्वेषु दर्शनेषु योगदर्शनं जल्पमात्रमविश्वसनीयञ्चास्ति । वैज्ञानिका अपीदानीमित्थमेव प्रतियन्ति । आसु धारणासु सतीषु योगदर्शनोपदिष्टा विभूतयो विशेषतः समीक्षणीया इति ताः सूत्रानुसारं संक्षेपेण निर्दिश्यन्ते—

"पातञ्जलदर्शनोक्त विभूतयः"

परिणामत्रय संयमात् अतीतानागतज्ञानम् । विभूतिपादे सूत्रसंख्या १६ धर्म परिणामः, लक्षणपरिणामः, अवस्थापरिणामः इतित्रयः परिणामाः सन्ति, तेषां संयमः=

धारणाध्यान समाधयः, तस्मात् संयमात् योगिनोऽतीतानागतज्ञानं भवतीत्यर्थः । विस्तरस्तु भाष्यादिभ्यो ज्ञातुं शक्यः । शब्दार्थ प्रत्ययानामितरेतराध्यासात् संकरस्तत्-प्रविभागसंयमात् सर्वभूतरुतज्ञानम् । वि. पा. १७ ।

संस्कार साक्षात्करणात् पूर्वजाति ज्ञानम् । सू० १८ अर्थात् संस्कारेषु संयमेन संस्कारहेतुभूतानां कर्मणां विधिवज्ज्ञानं भवतीति । प्रत्ययस्य परचित्तज्ञानम्—सू० १९ प्रत्ययस्य = रागादिमत्या स्वकीयचित्त वृत्तेरित्यर्थः ।

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुः प्रकाशासंप्रयोगेऽन्तर्धानम्—सू० २१ अर्थात् तथाविध संयमेन योगिनो देहरूपस्य ग्राह्यताधर्मोऽवरुद्धो भवति, तेन च परकीय चक्षुः किरणानां योगिदेहेन सह सम्बन्धो न भवति, ततश्चादृश्यो भवति योगी परेषामिति । एवमेव योगिनः शब्दमपि कश्चिदयोगी न श्रोतुमर्हतीति । बलेषु हस्तिबलानि—सू० २४ ।

भुवनज्ञानं सूर्ये संयमात्—सू० २६, सूर्ये-सुषुम्नायामिति यावत् ।

चन्द्रे ताराव्यूहज्ञानम्—सू० २७, चन्द्रे-चन्द्रद्वारे इत्यर्थः ध्रुवे तद्गतिज्ञानम्—सू २८, तद्गतिज्ञानम् = तारागति ज्ञानमित्यर्थः । नाभिचक्रे कायव्यूह ज्ञानम्—२९ । कण्ठकूपे क्षुत्पिपासा निवृत्तिः—३० सू ।

प्रातिभाद् वा सर्वम्, सू० ३३ अयमाशयः—विवेकजज्ञानात् पूर्वं तारक नामकं प्रातिभं ज्ञानं जायते, यथा सूर्योदयात् पूर्वं सूर्य प्रभा जायते । तारक नामके प्रातिभेज्ञाने संयमात् सर्वं जानाति योगीति । बन्धकारण शैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः—३८ ।

अर्थात् समाधिबलात् बन्धकारण कर्मणां शैथिल्यं जायते । शैथिल्यात् पूर्वं तु चञ्चलमपि मनः कर्माशयवशात् शरीरे बद्धंतिष्ठति, किन्तु समाधिप्रभावात् कर्मसु शिथिलेषु भवत्स्वेव शरीरान्तःसञ्चरण—विज्ञानात् मनः सर्वेन्द्रिय सहितं पर शरीरे प्रविशति । यथा सर्वा मक्षिकाः मधुकरराजमनुगच्छन्तीति ।

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च—सू० ३९ ।

समानजयाज्ज्वलनम् - ४० सू० ।

श्रोत्राकाशयोः सम्बन्ध संयमात् दिव्यं श्रोत्रम्—सू० ४१ ।

कायाकाशयोः सम्बन्ध संयमाल्लघुतूल समापत्तेश्चाकाशगमनम् - सू० ४२ ।

अर्थात् यत्र कायोऽस्ति तत्राकाशोऽप्यास्ति, यत आकाश एव कायस्यावस्था-नायावकाशं प्रददाति । अत उभयोः सम्बन्ध संयमात् तूलवत् लघुतासमापत्तेः जले पद्भ्यां विहरति, अनन्तरम् ऊर्णनाभ जालेषु विहरन् सूर्य किरणेषु विहरति, अनन्तरञ्च यथेच्छमाकाशे गमनं करोतीति ।

स्थूल स्वरूपान्वयार्थवत्त्व संयमात् भूतजयः—सू० ४४ । भूतजयः=अर्थात् यथा गावः स्ववत्सान् अनुसरन्ति तथैव योगिनः सङ्कल्पानुसारं भूतानि तदनुगमनं कुर्वन्तीति ।

ततोऽणिमादि प्रादुर्भावः कायसंपत् तद्धर्मानभिघातश्च—सू० ४५ । भूत धर्मः=पृथिव्यादेः मूर्ततादिः, तेन योगिनः कश्चिदवरोधो न भवति, शिलामप्यनुविशति योगी । जलं नार्द्रयति अग्निर्वा न दहति ।

ग्रहण स्वरूपान्वयार्थवत्त्वसंयमात् इन्द्रिय जयः—४७ सू० ।

ततो मनोजवित्वं, विकरणभावः, प्रधानजयश्च । सू० ४८ ।

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च । सू० ४९ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् । सू० ५० । अयं भावः—विवेकज्ञानमपि सत्त्वस्यैव धर्मः, सत्त्वञ्च हेयपक्षे एव वर्तते, पुरुषश्चापरिणामी शुद्धः सत्त्वादन्य इति ततो विरज्यमानस्य क्लेशबीजानि क्षीणानि भवन्ति । ततश्चात्यन्तिक गुणवियोगात् पुरुषस्य कैवल्यं सिद्ध्यतीति ।

उपरितन पङ्क्तिषु पातञ्जलदर्शनोक्ताः प्रायः सर्वाः सिद्धयो व्याख्यानमन्तरोद्देशमात्रेण दर्शिताः । अत्रायं प्रश्नः समुदेति यत् किमेताः सिद्धयो वास्तविक्यो भवन्ति ? अर्थशून्या एव वा सन्ति, यथा कैश्चिदाधुनिकैराक्षिप्यन्ते । अस्याक्षेपस्योत्तरं नहि शपथमात्रेण दृष्टान्तमात्रेण वा दातुं शक्यम् । "क्रियाकेवलमुत्तरम्" इति कस्यचित् कवेर्वचनानुसारं क्रियैव केवलमुत्तरं भवेत् । यथा हि विश्वविद्यालयेषु विज्ञानादिविभागे यदि सिद्धान्ता अध्याप्यन्ते तर्हि सहैव तत्समर्थकाः प्रयोगा अपि क्रियन्ते छात्रतः कार्यन्ते च । प्रयोगशून्यं विज्ञानाध्यापनन्तु न कस्मैचिदपि फलाय कल्पताम् । अध्येतारोऽपिन तत् श्रद्दधीरन् । तद्वदेव बहोः कालात् योगदर्शनं केवल—सिद्धान्तरूपेणैव जीवदायाति, प्रयोगाभावादेव च सुप्तप्रायमविश्वसनीयमश्रद्धेयं हसनीयञ्च संजातम् ।

अहन्तु मन्ये सिद्धान्त शास्त्रस्य सांख्यस्य पूरक मेवैतत् प्रयोगात्मकं योग शास्त्र मास्ते । अतएव सांख्ययोगयोर्मिलितमेवाभिधानं प्रायः श्रूयते । वस्तुतस्तु न केवलं सांख्यस्यैव पूरक मेतच्छास्त्रं प्रत्युत न्यायस्य, वेदान्तस्य, बौद्धदर्शनस्य, जैन दर्शनस्यचापि । अतएव सर्व एव तत्तच्छास्त्राचार्याः स्वयं योगिनोऽभूवन् योगोपदेशञ्चाकुर्वन् । किं वेदान्त व्याख्याता भगवान् शङ्कराचार्यो नासीद् योगी ? भगवतः श्रीकृष्णस्य योगीश्वरत्वं सर्वविदितम् । अगस्त्य विश्वामित्र वशिष्ठादीनां योगप्रभावमितिहास पुराणेभ्यो वयं प्रतीमः । बौद्धेषु बुद्धस्य समाधि लाभं सर्वे जानन्तीतिहासविदः शिलालेखविदश्च । तच्छिष्यो मौद्गलायनो महान् योग्यासीत्, नागार्जुनोऽसङ्गश्च योगिनावास्ताम् । पाश्चात्यदेशेषु एपोलोनियस-ईसा-मूसा प्रभृतयो योगिन एवाभूवन् । यदीतिहासादयो न प्रमाणं स्युस्तर्हि कतिपय वर्षानन्तरम् चन्द्रमसि गमनमपि अप्रमाणं मन्येत । तस्मात्

पूर्वाग्रहं परित्यज्य भौतिकाभौतिकस्य सर्वविधाभ्युदय जातस्य हेतुभूतं पातञ्जलदर्शनं प्रयोगभूमावानाय्य समुद्धरणीयमधिकाधिक विकासं च प्रापणीयम् । मन्ये, एतेन समाजस्य, राष्ट्रस्य, संसारस्य, व्यक्तेश्च महत्कल्याणं भवेत् । पुरातना योगिनोऽपि समाधिना स्वेन सह लोकस्यापि महान्तमुपकारं कृतवन्तः । अयमेव मुख्यः प्रश्नः समाधानमाकांक्षति । समाधानमपि क्रियारूपमेव नान्यत् । एतच्च कार्यं केन्द्रीय सर्वकारः स्वनिर्देशने सम्पादयितुमर्हति । यथा हि वैज्ञानिकाविष्कारार्थं विभागाः समुद्घाटिता स्तथैव कल्पविद्याया एतस्याः समुद्धाराय विकासाय च कश्चिद् प्रयासो विधेयस्तेनेति ममाभ्यर्थना । प्रसङ्गेऽस्मिन् काशीहिन्दूविश्वविद्यालये योगविधिभिरपि विविधरोग निवारणव्यवस्थोद्घाटनप्रयासः सर्वथा प्रशंसनीयोऽस्ति ।

विशेषस्तु तान् वैदेशिकविदुषोऽनुरुन्धे येषां पूर्वपरम्परामासाद्यैवाद्यास्माकं वेदसाहित्यदर्शनादयो निजमहिमप्रकाशेन समस्तं जगदेव चकितमकुर्वन् । अधुनाऽपि तत्परम्परायामेव वैज्ञानिकाः स्वबुद्धिवैभवेनादम्याध्यवसायेन च चन्द्रमण्डलादिषु स्वच्छन्दविहरणादि कार्यजातैः पूर्वोक्ताः विभूतीः सत्यापयन्त इव प्रत्यक्षतोऽनुभूयन्ते । विश्वसिमि, सिद्धान्तमात्रावशेषं दर्शनमिदं प्रायोगिकसोपानमारोप्य पुनरुन्नमयितुमपि त एवाग्रेसरतामङ्गीकृत्य प्रश्नस्यास्य समाधानमाशु गवेषयिष्यन्तीति शम् ।

# भाषाशास्त्रदृष्ट्या संस्कृतप्रभावः

के० एस्० शास्त्री

कोलंबिया, षिकागो, वाषिंग्टन् विश्वविद्याऽलयेषु विद्यमानाः भाषाशास्त्र-पंडिताः सुदीर्घ विमर्शनानंतरं स्वेषाम् निश्चय मेवं प्रकटितवंतः यत् —

"····न केवलमेषियाया एव, प्रत्युत समग्रस्याऽपि यूरोपस्य भाषाजिज्ञासुकानाम् संस्कृतवचोऽनुशीलन मावश्यकम् । यतः संस्कृतेन सह सर्वासां भाषाणाम् निकटतमः संपर्कः" इति । एवं "रूस" देशीयस्य "लूयीरेगु" पंडितस्य भाव एवं विधः ।

"····संसारस्य सर्वा एव भाषाः संस्कृतप्रभाविताः । एषियायाः अनेकदेशानां भाषाः संस्कृतशब्दान् वहन्ति ।"

अनेन वैदेशिकपंडिताऽभिप्रायेण सह भारतीय भाषाशास्त्रपारंगतानाम् द्विसहस्र-वर्षेभ्यः प्राक् विद्यमानानाम् यास्काचार्यादीनां भावः ऐक्यं भजति ।

**देशान्तरेषु संस्कृतव्याप्तिः—**

जर्मन् विश्वविद्यालये "महामहोपाध्याय"—पदवी विराजितः श्री "आल्डडोरफ्" पंडितः "जर्मन्याम् संस्कृताऽध्ययनम्" इत्येनम् विषयमधिकृत्य एवम् कथयामास—

"····जर्मन् देशीयः कश्चि देकः पंडितः (गेथे) कालिदासीयम् "शाकुन्तलम्" स्वशिरसि संस्थाप्य परवशस्सन् यदि नाट्य करोति, तत्रत्योऽन्यः पडितः मनुधर्मशास्त्र-पठनम् चिकीर्षति । एवमत्रत्येऽन्यतम पण्डितः उपनिषत्पारायणे शान्तिपाठपठनेन चित्तशान्तिम् उपलब्धुकामश्चेत्, अपरः पंडितः योगशास्त्राऽभ्यासेन दीर्घाऽयुष्यम् लिप्सते" इति ।

एवम् शार्मण्यदेशीयः "मेक्सुमुल्लर" महाशयः जर्मन्भाषाशास्त्रपारंगतः, संस्कृतभाषाऽध्ययने, तत्सेवायां च स्वजीवितकालम् यापयित्वा तदध्ययनप्रभावप्रभावितः

"Sacred Books of the East Series" नाम्नीं ग्रन्थमालाम् संस्थाप्य तन्नाम्ना एकपंचाशन्मितानां स्वेन मुद्रितानाम् जर्मन्भाषावृहत्संपुटानां संपादनेन भारतीयविज्ञानस्य, गुरुत्व, महत्व, पटुत्वप्रकाशैः निखिलप्रपंचस्य-आश्चर्यविस्मितस्य-नेत्रोन्मीलनम् कृतवान्, निरुपितवांश्च यत् भारतदेशः सोदरदेशीयेभ्यः इहपरसाधकं प्रकाशमार्गं कथं संदर्शयामास इति ।

एव मेष महाशय , संस्कृतेन आध्यात्मिकप्रभावसंपन्नेन, सर्वेभ्योऽप्यधिकतमं प्रभावित आसीत् इत्यस्य निदर्शनान्यनेकानि संति । महाशयेन अनेन मुद्रिते ऋग्वेदग्रन्थे स्वलिखित मिमं श्लोकं श्रुणुत ।

"श[1]र्मण्यदेशजातेन गोतीर्थपुरवासिना ।
मोक्षमू[2]लरभट्टेन भाष्य मेतत् विशोधितम् ॥"

एवं सर्वदेशीयाः सर्वभाषाश्च संस्कृतेन, सर्वप्रभावभासुरेण प्रभाविता इति यत्, तस्य मूलकारणानि अस्माभिरवश्यं ज्ञातव्यानि । यदि एवं क्रियेत, संस्कृतस्य—विश्वमोहनकारकस्यविश्वकल्याणभाजनत्वं विस्पष्टम् ज्ञायेत ।

वक्ष्यमाणाः ये उत्तमोत्तमभावाः,—सर्वदेशीयेभ्यः सर्वाऽभ्युदयसंपादकाः—ते, संस्कृतभाषाजनन्या एव एव सर्वैः संप्राप्तुं शक्यन्ते । तत्र प्रथमा, सर्वभूतेषु समभावना—

संस्कृते सर्वत्र समभावनाबोधकाः ।
"आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥"

"आत्मवत् सर्वभूतानाम् एकः प्रियहिते रतः (प्रह्लादः) एवमाद्याःसूक्तयः, केषाम् चित् मूर्खमानवानाम्, वैरित्वभावविवशचित्तानाम् चित्तेषु सर्वत्र समदर्शनस्वरूप मुदारभाव मुत्पाद्य, सोदरमानवेषु विषये तेषां अकारणद्वेषभावं निर्मूलयंति । सांप्रतम् यदि वयम् तत्वतः पश्यामः । भौतिकविज्ञानाभिवृद्धिनाम्ना बहूनाम् [illegible] अण्वस्त्रसर्जनरूपः पारस्परिकः प्रतिद्वंद्विताभावः, नूनमेकैकस्य [illegible] मानसं भीतिभावपरीतम्, द्वेष्यभावव्रणितम् च करोति । एषः प्रत्यक्ष एवाद्यो विषयः । एवंरूपः द्वेष्यभाव एव, स्वेषाम् इतरेषाम् च जीवितानि शांतिरहितानि दुःखभाजनानि च कुर्वन्ति । एषः सर्वेभ्य महानर्थदायक इति सर्वेषां अंगीकर्तव्य मेव ।

एतस्मादपि महानर्थात् द्वेष्यान् उद्धर्तुम् परमसाधनं सर्वत्र समदर्शनत्वप्रदर्शनम् । अनया समभावनया विभिन्नभावेषु मध्ये विलीनः परस्परद्वेष्यभावः विलीयते । यदा

---

१. शार्मण्य = जर्मनी ; गो = ox, तीर्थ = ford.

२. मोक्षमूलर = Maxmullor.

द्वेष्यभावस्य शांतिः, तदानीमेव क्रमशः देशशान्ति रुदेति । देशशांतिद्वारैव विश्वकल्याणम् संस्कृतद्वारैवाऽयंप्रभावः । एवं परमतसहनभावः—

प्रस्तुतनागरिकप्रपंचे बहु मतसामरस्यलोपादेव असहन, द्वेष, प्रतिद्वंद्विताभावादय उद्भवन्ति । एतेभ्योऽपि महाऽनर्थेभ्यः मानवान् उद्धर्तुम् अस्माकं संस्कृतमेकमेव शरणं बोभवीति । एदद् गीतावचनम् श्रृणुत ।

"ये प्यन्यदेवताभक्ताः यजंते श्रद्धयाऽन्विताः ।

तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।।"

अतः सर्वमतदैवतपूजनानि एकेश्वरोपासनमिव तन्तन्मतस्थेभ्यः स्वकांक्षिताऽर्थप्रदानि भविष्यंति । अनेनैव कारणेन अन्यमतसंप्रदायदूषणं, स्वमतसंप्रदायदूषणतुल्यं भवत्येव । नाऽत्रसंदेहः । एतस्मात् परदूषणरूप मौढ्यात् मानवं सरक्षितुम् उक्तगीताप्रबोधः चिंतामणिकल्प एव । सर्वदेशेषु मैत्रीभावभरिते भारतदेशे निष्कारणवैरं प्रदर्शयताम् पाकीस्थानीयानाम् दौष्ट्यस्य कारणं, स्वमताऽभिनिवेशपूर्वकः परमतसहनाऽभाव इति ज्ञायते । एतादृशवैरिषु विषयेऽपि भारतीयमैत्र्याः कारणं उपरितन गीताप्रबोध एवेति सिद्धम् । एवम् परमतसहनभावेन मानवे परेष्वपि सौदर्यम् "वसुधैवकुटुंबकत्व" भावश्च उदेति । एष एव भावः विश्वश्रेयोनिदानं स्यात् । विषय एषः संस्कृतवाण्या एवं प्रबोधितः ।

"अयं निजः परोवेति गणना लघुचेतसाम् ।

उदाचरितानां तु वसुधैव कुटुंबकम् ।।"

एवम् विश्वश्रेयःप्रदमुदारभावम् वयं संस्कृतभाषया एव लब्धुम् पारयामः । एवं परोपकारभावः—

भाव मेनं देववाण्येवं प्रबोधयति "परोपकाराय फलति वृक्षाः । परोपकाराय दुहंति धेनवः । परोपकाराय वहंति नद्यः परोपकाराय सतां विभूतयः ।"

अनेन सौजन्यभावप्रबोधेन, सहृदया स्सर्वेऽपि परोपकारपारीणाः संतः, लोकहितसाधने स्वयंप्रवृत्ताः भविष्यंति । एवं निस्स्वार्थपरहिताऽचरणम् प्रति देववाणी—

"पद्माऽकरं दिनकरो विकचं करोति,

चंद्रो विकासयति कैरव चक्रवालम् ।

नाऽभ्यर्थितो जलधरोऽपि जलं ददाति,

संतः स्वयं परहिते विहिताऽभियोगाः ।।

संस्कृतवरप्रसादरूपेण अनेनैव निःस्वार्थपरहिताऽचरणभावेन भारतदेशः सोदरदेशेषु विषये स्वस्य अनुत्तममुदारभावम् सर्वदा सर्वैः प्रकारैः प्रकटयन्नाऽस्ते । एष उदारभावः कथं लब्धः ?

किंच वेदादारभ्य भारतीयकाव्यपर्यंतं विद्यमाने सर्वस्मिन्नपि संस्कृतवाङ्मये धर्मप्रभावः अतीव वैपुल्येन प्रदर्शितः । उपनिषत्सूक्तिमेतां श्रृणुत ।

"धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पंति । धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्मात् धर्मं परमं वदंति ।" (तैत्तिरीयोपनिषत्)

औपनिषत्सूक्तिमेनामनुसृत्य सर्वप्रपंचस्य सुस्थितेः सुप्रतिष्ठायाश्च मूलकारणं "धर्म" एक एवेति सुस्पष्टं ज्ञायते । धर्मशब्दव्युत्पत्यर्थोपि एनं विशदयति "ध्रियते इति धर्मः" धारणाद्धर्म इत्याहुः अर्थादितद्भूमंडलं सर्वमपि, धर्मशक्त्या एव धार्यत इति वक्तव्यं भवति । अनेन "मानवाभिवृद्धेः धर्म एव आधाररूपः ।"

"भारतीयाः स्वप्राणसंरक्षणा दपि, स्वधर्मसंरक्षणं अधिकं मन्यंते" इत्यत्र "स्वधर्मे निधनं श्रेय." इति सूक्तिरेव प्रमाणम् । एषा धर्मसंरक्षणदीक्षा कालत्रयेपि प्रपंचसंरक्षणं करिष्यत्येवेति "धर्मो रक्षति रक्षितः" इति त्रिकालाऽबाध्या सूक्तिः सुस्पष्टं करोति । किंच "यतो धर्म स्ततो जयः इत्येषा सूक्तिः नित्य सत्यसंभरितेति, रामरावणयुद्धम्, कौरवपांडवयुद्धं च घोषयतः । अनेन, केवलभौतिकशक्तियुतात् पक्षात्, धर्मबलयुक्तस्य पक्षस्यैव विजयप्राप्तिरितः ज्ञायते । अनेन ज्ञानेन संस्कृत संस्कृतिः प्रपंचमखिलं प्रबोध्य, मानवजीवितचारितार्थ्यप्राप्तये विश्वतत्वं धर्मशक्तिसज्जितं करोति । अतः संस्कृत संस्कृतिः निखिलप्रपंचस्य अभ्युदयाय उपादेया एव भवति ।

केवलप्रकृतिशास्त्रविज्ञानविकासप्रभावात् अद्य सर्वत्र युद्धभीतिः जायते । संस्कृत विज्ञानविकास प्रभावः सन्मार्गदर्शकत्वेन सर्वा नुद्धर्तुं समर्थः । अतएवैषः प्राज्ञै रेवमर्थितः—

"असतो मा सद् गमय । तमसो मा ज्योतिर्गमय । मृत्यो र्मा अमृतं गमय ।" इति ।

कदाचित् रवीन्द्रकवीन्द्रः केवलभौतिकशास्त्रविज्ञानविकासस्य स्वभावमेवं चित्रितवान् ।

The glow we see on the western horizon is not the glory of the sun or of a new birth. It is that of conflagration.

सर्वप्रपंचस्य "मित्रस्य" लोकबांधवस्य च सूर्यपरमात्मनः पवित्रप्रकाश (संस्कृतसंस्कृतिः) सर्वैः प्रकारैः सर्वदाऽस्य प्रपंचस्य श्रेयसे प्रभवति एव खलु । अतएव शर्मण्यदेशमित्रं मोक्षमूलरभट्टः भारतीयविज्ञानं बहुमुखं प्रशंसन् एकदा इत्थं प्रकटितवान्—

यत्र देशे मानवाः स्वस्य सर्वाः उत्तमशक्तीः विकासयित्वा, निगूढविचारणां च कृत्वा मानवजीवितसमस्यासु सौलभ्येन परिष्कारम् कृतवन्तः, तादृशदेशमहम् भारतदेशं कथयिष्यामि एवं भौतिकभोगैः सार्थं मानवजीवितं अमरत्वाय च प्रापयितृ सारस्वतं कस्मिन् देशे विद्यते ? इति केनाऽपि पृष्टस्य मम भारत देश एव दर्शयितव्यो-ऽस्ति ।" इति प्राचीनभारतीय विज्ञानं प्रशंसितवान् ।

अतः हे पंडितवर्याः । प्रस्तुतप्रपंचे क्लिष्टसमस्यापरिहाराय, विश्वशांतिलाभाय विशेषतः विभिन्नमतस्थानां समैक्यलाभाय च समर्थं संस्कृत भजत ।

"ऐकमत्यदं देशवासिनां सर्वजीविषु प्रेमभाजनं । विश्वपुष्टिदं विश्वतुष्टिदं विश्वशान्तिदं भजत संस्कृतम् ।

इति शम्

# सप्त सिन्धवः

**उदयवीरः शास्त्री**

१. वेदेष्वनेकत्र 'सप्त सिन्धवः' इति पदद्वयमसंहितमेव दृश्यते । क्वाप्यनयोः पदयोर्मिथः समासयुक्तः प्रयोगोनास्ति ।[1] सहपठिते अपीमे पदे पदपाठानुसारमसमस्ते एव स्वीकृते । क्वचिदनयोः पदयोः पदान्तरव्यवहितोऽपि पाठो दृश्यते ।[2] यद्यपि सप्त सिन्धु-पदयोः समस्तः प्रयोगो नास्ति परमन्यैरनेकैः पदैः सह संख्यापरस्य सप्तपदस्य समास-युक्तः प्रयोगो वेदेष्ववलोक्यते । तेषु कानिचित् पदानीत्थं भूतानि—

सप्ताश्वः (५।४५।८), सप्तास्यः (४।५०।४), सप्तर्षयः (१०।१०९।४), सप्त-चक्रम् (१।१६४।३), सप्तजामयः (९।१०।७), सप्ततन्तुः (१०।५२।४), सप्तधातुः (६।६१।१२), सप्तपुत्रम (१।१६४।१), सप्तरश्मिः (२।१२।१२) सप्तवध्रिः (८।७३।९), इत्यादीनि । सर्वाण्येतानि पदानि कस्यचिद् विशिष्टस्य व्यक्तिभूतस्य पदार्थस्य वा नामानि तद्विशेषणानि वा । अत्र सायणव्याख्यानुसारं सप्ताश्वादीनि कानिचित् पदा-न्यादित्यनामानि, सप्तजामयः सप्तहोतारो यज्ञकर्त्तारः; सप्तवध्रिरिति कस्यचिद् ऋषे-र्नाम; सप्ततन्तुपदेन हव्यवाडग्निरभिहितः सप्तज्वालारूपः; सप्तधातुरिति पदं-सप्त-धातवोऽवयवा गायत्र्याद्या यस्यास्तां वाचं वेदात्मिकां सरस्वतीं; सप्तसरित्सहायभूतां सरस्वतीनाम्नीं नदीं वा विशिनष्टि । एवं संख्यात्मकसप्तपदसमासयुक्तानि पदानि कस्यचिद् विशिष्टस्यार्थस्य वाचकानीति स्फुटं भवति ।

आधुनिकाः कतिपये विद्वांसो वेदपठितं 'सप्तसिन्धवः' इत्यसंहितमपि पदद्वयमेक-पदत्वेनाभिमन्यमानाः कस्यचिद् विशिष्टस्य भूप्रदेशस्याख्यां कल्पयन्ति । तन्नाम्नि प्रदेश एव पुराकाले आर्याणां निवास आसीत् ।[3] तत्रैव वसद्भिः पौरिकैॠषिभिर्यथाकालं ऋगादिवेदानां रचनं व्यधायि, इत्येवंरूपाणि च स्वाभिरुचितानि मतानि निरूप-यन्ति ।

---

१. ऋ० ८।५४।४।।८।६९।१२।।९।६६।६।।१०।४३।३।।१०।६७।१२।।

२. ऋ० ८।९६।१।।

३. अस्मिन् विषये-अविनाशचन्द्रदास, स्वामीशङ्करानन्द, रमाप्रसाद चन्दा, नाना

परमेतन्निरूपणं सर्वथापि चिन्त्यम्, यतः सर्वेषु वेदेषु क्वापि कस्यचिद् भूप्रदेशस्य 'सप्त सिन्धव' इति नाम निर्देशो नोपलभ्यते । यदीदं कस्यचिदेकस्य भूप्रदेशस्य नाम स्यात्, तदा सप्ताश्वादिपदानामिव सप्त-सिन्धुपदयोरपि समासपूर्वक मैकपद्यमङ्गीकृत्य तदनुरूप एव प्रयोगो भवेत् ।

किञ्च 'सप्त सिन्धवः' इत्याकारकपदनिचयो भूप्रदेशमर्थं बोधयितुमप्यक्षमः । अत्र केवलं सिन्धूनां नदीनां कासाञ्चित् सप्त संख्यापरिमितत्वमात्रं बोध्यते । भूप्रदेशार्थं बोधनाय पदयोरनयोः समास आवश्यकः । तथा च-सप्त-सप्तसंख्यापरिमिताः सिन्धवो नद्यः प्रवहन्ति यस्मिन् प्रदेशे सः—इति विग्रहमूलको बहुव्रीहिसमास एवात्र संगच्छते । अन्यपदार्थप्रधानत्वादस्य समासस्य सिन्धुपदं नद्यर्थमपहाय तं प्रदेशमभिधास्यति, यत्र सप्त सरितः प्रवहन्ति । परमेवं सति समासे उभे पदे 'सप्त सिन्धवः' इत्याकारतां जहीतः, समासफलभूतं 'सप्तसिन्धुः' इत्येकपदात्मकमाकारमाददाते । एवञ्च सप्तसिन्धुः' इति पदं प्रदेशमर्थं बोधयितुं सर्वथापि क्षमम् । परमस्य पदस्य प्रदेशार्थबोधकत्वेन अवोधकत्वेन वा भारतीये वैदिके लौकिके वा वाङ्मये प्रयोगः क्वापि नोपलभ्यते ।

अथ यत्र क्वचिदपि वेदे असमस्त एव सप्तपदसहकृतोऽपेक्षितविभक्तिकः सिन्धुपदप्रयोगः, तत्र सर्वत्रापि तासां नदीनामेव प्राधान्येन वर्णनम्, न तु तदुपलक्षितस्य भूप्रदेशविशेषस्य । यद्यपि नदीनां प्रवाह कस्मिंश्चिद् विशिष्टे भूप्रदेश एव संभवति, तथापि तद्वर्णनं नदीरेवाभिलक्षयति, न तु तं प्रदेशम् ।

२. ननु न स्यान्नामेदं कस्यचित् प्रदेशस्य, परं नदीभिरुपलक्षितस्तु प्रदेश एव स्यात् । मन्ये, साम्प्रतिका विद्वांसोऽपि प्रदेशनामविषये न तथा आग्रहग्रहिला भवेयुः । तेषामपि अयमेवाभिप्रायः संभाव्यते, अस्त्येवायमेवम्भूतः प्रदेशः, यत्र सप्त नद्यः प्रवहन्ति । स्यान्नाम 'सप्तसिन्धुः' इति पदेन प्रदेशाभिधानोपेक्षा, परं सप्तनदीप्रवाहस्तु नोपेक्षितुं शक्यते, स च क्वचिदपि प्रदेशे स्यात् । एवं विचार्यमाणे जायते महती जिज्ञासा-कोऽयमेवम्भूतो भूप्रदेशः, यः प्रवहन्तीभिः सप्त सिन्धुभिः परिवेष्टितः ? अत्राप्यस्ति विदुषां भूयान् विवादः ।

तत्र केचिदाचक्षते साम्प्रतं प्रसिद्धस्य पञ्चनदप्रान्तस्य उदक्भागं सकश्मीरहिमाचलप्रदेशमादाय प्रायशो यावान् भूभागः, स एव प्राचीनः सप्तसिन्धुरित्यभिधः प्रदेशः । एष विचारः-दास-पावगी-सम्पूर्णानन्दप्रभृतीनाम् । अयमाचार्यः सम्पूर्णानन्दः स्वीये 'आर्योंका आदिदेश' इति नाम्निग्रन्थे (पृ० ३५) ऋग्वेदस्यैकामृचं (१।३२।१२) अभिलक्ष्य निर्दिशति—इन्द्रो गा अजयत्, सोमं चानयत्, सप्त सिन्धूनां प्रवाहं चामुचत् । निरुक्तव्याख्यानुसारमस्यां गाथायां (ऋचि) वारिधराणां रवणं, तडितां गर्जनं, तदनु सलिलधाराणां नभसोऽजस्रमधो वर्षणं तत्परिणामभूतं च सप्तसिन्धूनां प्रवाहरूपेण पावगी, सम्पूर्णानन्दप्रभृतिभिरुपज्ञातस्य साहित्यस्यावलोकनमपेक्ष्यते ।

सरित्पतिं प्रत्यभिसरणम्, सर्वमेतत् ऋक्प्रवक्तॄणां ऋषीणां दृग्विषयमिवासीत्। प्रत्यक्षमवलोक्यैव सर्वमृषयस्तथाऽवर्णयन्। यद्यपि वारिदेभ्यो निष्पतन्त्यः सलिलधाराः सर्वत्र सामान्येन सरितः पुष्णन्ति; परमत्र मन्त्रे सप्तपदनिर्देशः सिन्धूनां गणनया सप्तसंख्याकत्वमेव विशेषेण निर्दिशति।

पुनरग्रे (पृ० ३८) प्रतिपादयति सम्पूर्णानन्दः—तेषां मन्त्रकृतामृषीणामयमाघोषः वृत्रं निहत्य सप्तसिन्धुषु सलिलप्रवाहणमिन्द्रस्य प्रथमः पराक्रम इति (ऋ० २।१२।३)। तदेतेन विशदीभवति, नैषां ऋषीणामन्यदेशस्मरणमप्यासीत्। तस्य प्रदेशस्य सप्तनदीनां नामानीत्थं निर्दिश्यन्ते सिन्धुः, वितस्ता (झेलम्), असिक्नी (चनाव्), परुष्णी (रावी), विपाशा (व्यास), शुतुद्रिः (अथवा शतद्रुः-सतलज्), सरस्वती चेति। एताभिरेव नदीभिरुपलक्षितत्वेन प्रदेशस्यास्य सप्तसिन्धुरिति नाम व्यवहारपदमलभत। 'इमं मे गङ्गे' इति नदीसूक्तगते (ऋ० १०।७५।५) मन्त्रे नदीनामासां स्पष्टमुल्लेखः। यद्यपि गङ्गायमुनयोरपि तत्र निर्देशः, परं तन्नामोद्देशमात्रम्। एतेन मन्त्रकारस्य तयोरपि परिचय आसीत्, इत्येतन्मात्रमेव प्रमाणयितुं शक्यम्। सप्तसिन्धुप्रदेशेऽनयोर्नद्योः समावेशो नासीत्, इत्येवं सम्पूर्णानन्दमहोदयो न्यरूपयत्। एतदेव मतं दास-पावगीप्रभृतीनामित्यपि तेन तत्र संकेतितम्।

अत्र किञ्चित् विचार्यते-'अजयो गा अजयः शूर सोममवासृजः सर्त्तवे सप्त सिन्धून्' (ऋ० १।३२।१२) इति मन्त्रव्याख्यानावसरे 'इमं मे गङ्गे' (१०।७५।५) इत्यादिमन्त्रमुद्धृत्य 'गङ्गाद्याः सप्त नद्यः' इत्येवं सायणाचार्यो निर्दिदेश। तत्र 'आद्य' पदेन कास्ता अन्याः षण्णद्यो ग्राह्याः, इत्यत्र सायणस्य किमभिलषितमासीदिति केनापि निश्चेतुं न शक्यते, अन्यत्राप्यनेकेषु मन्त्रेषु[1] पठितस्य सप्तसिन्धुरिति पदद्वयस्य व्याख्यां चिकीर्षुः सायणः 'गङ्गाद्याः सप्त नद्यः' इत्येव तदर्थं स्वीचकार। एवं सायणाधुनिकमतयोः स्पष्ट एव परस्परं विरोधः। ये द्वे नद्यौ संग्राह्यत्वेन सायणो मन्यते, ते एवाधुनिकमते परित्याज्यत्वेनाङ्गीकृते।

परमनयोर्द्वयोरपि मतयोरेतच्चिन्तनीयम्—नदीसूक्तगते मन्त्रे पठितासु नवनदीषु दशनदीषु वा मध्ये काः सप्त संग्राह्याः काश्चोपेक्षणीयाः, इत्येतन्निश्चायकं किमपि प्रमाणं नास्ति। नदीसूक्त एव बहूनामन्यासां नदीनां निर्देशो वर्त्तते। विंशतितोऽप्यधिकानां नदीनां केवलमृग्वेद एव निर्देशः। एतासु नदीषु मध्ये काः सप्त नद्यो वेदगत-'सप्त-सिन्धु' पदव्यवहार्याः, इत्यस्य निश्चायकं प्रमाणं तादृशः कश्चन समुल्लेखो वा वेदे वैदिके वाऽन्यत्र वाङ्मये क्वचिदपि नोपलभ्यते। तस्मादुक्तानि सप्तसिन्धुपदव्याख्यानानि कल्पनामूलान्येव। कल्पनाकृतेऽन्योपि प्रशस्तः पन्थाः संभाव्यते।

ननु लोकवेदयोः सरस्वत्यादिनदीनामसाम्यात् प्रदेशस्थितेश्च नदीसूक्तगतमन्त्रपठितानां नदीनां मध्ये सरस्वत्यादिसिन्ध्वन्तानामेव सप्तनदीनां ग्रहणम्, गङ्गायमुनयोश्च बहिर्भावः। एवं सप्तसिन्धुप्रदेशे सप्त नद्यः सरस्वत्याद्या एव संभवन्ति, नान्याः काश्चन। इत्येतत्कथनमपि समीचीनं न भाति। यतो लोकवेदयोः गङ्गादि

१. ऋ० २।१२।३॥ २।१२।१२॥ ८।२४।२७॥ ८।९६।१८॥

नदीनामपि न म साम्यं विद्यत एव । शतद्रवादिनदीनां तु नामपरिभ्रंशोऽपि जात: । गङ्गायमुनयोस्त्वद्यापि साक्षात्तदेव नाम व्यवह्रियते । तयोर्बहिर्भाव: कथमपेक्ष्येत । सिन्धोश्च नामापि तस्मिन् मन्त्रे न दृश्यते । मन्त्रान्तरेषु सत्त्वात्तदनुमन्येत चेत्, अन्यासामपि नदीनां मन्त्रान्तरेषु कीर्तनं, तासां ग्रहणं कुतो न स्यात् । प्रदेशस्थितिरपि तादृशी संभाव्यते क्वचिदन्यत्रापि । तस्मात् सप्तसिन्धुप्रदेशे सरस्वत्याद्या: सिन्धुपर्यन्ता: सप्त नद्य: सन्तीत्यत्र नास्ति किञ्चित् प्रमाणम् ।

अन्यच्च-अतिविस्तृतेऽस्मिन् प्रदेशे वेदगतनदीवर्णनस्य दृग्विषयताऽपि न संभवति यथा सम्पूर्णानन्दमहाभाग: समाख्यातवान् । वारिधराणां गर्जनं, तडित: क्रन्दनं, सलिलधाराणामनवरतप्रवर्षणं नदीनां चाऽऽतीरं वारिपूरितानां सरवं प्रवहणम् । सर्वमेतद् दृग्विषयत्वं मन्त्रकृतामृषीणां तदैव संभवेत्, यदा सप्त नदीनां तासामधिकतोऽधिकं सामीप्यं स्यात् । तत्तु प्राक्प्रस्तुते सप्तसिन्धुप्रदेशे नैव संभवति । नदीसूक्तस्य ऋषि: सिन्धुक्षित् प्रियमेधस्य कस्यचिदृषे: पुत्र: पौत्रो वा । सिन्धुक्षिदिति नाम्नाऽनुमीयते कस्याश्चिन्नद्यास्तटवर्तिप्रदेशेऽस्य निवास: स्यात् । नदीसूक्तेऽस्मिन् बहूनां नदीनां समुल्लेख: । वेदे यत्र क्वापि सप्त-सिन्धुपदयो: सहैव प्रयोग:, तत्र सर्वत्रैव कस्याश्चिदपि नद्या: नामोल्लेखो नास्ति । सप्तसिन्धुवर्णनपरस्यैवंभूतस्यैकस्य सूक्तस्य (८।६९) ऋषि: प्रियमेध, यस्य पुत्र: सिन्धुक्षित् नदीसूक्तस्य ऋषि: । अपरस्यैकस्य सूक्तस्य (१।३२) ऋषि: हिरण्यस्तूप: । उभावप्येतौ प्रियमेधहिरण्यस्तूपौ कस्यचिदङ्गिरस: पुत्रौ । एतेनानुमीयते-सर्वेऽप्येते ऋषय: एकस्यैव परिवारस्य अङ्गभूता आसन् । एषां निवासोऽप्येकत्रैव सम्भाव्यते । सप्तसिन्धुवर्णनतत्परेषु ऋषिषु गृत्समद-वामदेवयोरपि गणनम् । तयोर्निवास: कस्या नद्यास्तटे द्वयोर्वा नद्योरन्तराले कुत्रासीदिति नाद्य निश्चेतुं शक्यते । परं सर्वेषामेषामृषीणां सप्तनदीवर्णनं साक्षाद् दृग्गोचरमिवाभाति । एवं सिन्धु सरस्वत्योरन्तराले वर्त्तमानस्यातिविस्तृतस्य प्रदेशस्य कस्मिंश्चिदेकत्र भागे निवसतामृषीणां दृग्विषयत्वं कथं संभाव्येत ।

यद्युच्येत, एकस्यामपि नद्यां वर्षकर्मणा तथा प्रवृद्धवारिधारामवलोक्य तदन्यासामपि तथा कल्पनं शक्यत एव कर्तुम् । एवमपि सिन्धुपदेन सह सप्तेति नियतसंख्या निर्देशस्य किमपि सावधारणं निमित्तं नोपलभामहे । एषा खलु सर्वासामपि नदीनां समानैव परिस्थिति: । तदा सप्तेति नियतगणना नाधारतां भजते ।

३. अपरे पुनराचार्या: साम्प्रतिका: क्षेत्रेशचन्द्रचट्टोपाध्याय-सरदेसाई प्रभृतयो विपश्चित:— अधुनातनसोवियत्साम्राज्यान्तर्गत तुरुष्कप्रदेशस्थितबल्कशनाम्नि महीयसि सरोवरे काभ्यश्चिद्दिग्भ्य: प्रसरन्त्य: सप्त नद्यो निपतन्ति, तस्य प्रदेशस्य रूसभाषायां 'सैमिरैचिन्स्क— Semirechinsk' इति नाम व्यवह्रियते जनै: । अस्य पदस्य 'सप्त नदीनां प्रदेश:' इत्येवार्थ:— इति प्रतिपादयन्ति[1] । तासां सप्त नदीनां नामानि

---

१. द्रष्टव्यम् प्रोसीडिंग्स् ऐण्ड ट्रॉनजैक्शन्स् ऑफ दि सिक्स्थ् ऑल इण्डिया ओरियण्टल कॉन्फरेंन्स्, पटना, डिसेम्बर, १९३० ।

खल्वित्थं प्रस्तूयन्ते—इली, लोसा, करतल, बस्कन, अक्म्, सरकन, बियेन, इति। 'इली' नामस्थाने सरदेसाईमहोदयः 'कोक्म्' इति नामान्तरं निर्दिशति। स एषः प्रदेशः पुराकाले निवास आसीदार्याणाम्। कालान्तरेण विच्छिद्य तस्मात् प्रदेशात् भारतान्तर्गतेऽस्मिन् प्रदेशे सिन्ध्वादिसरिदाकीर्णे समागतास्ते ऋगादिवेदरचनायां प्रवृत्ताः संस्मरन्तो निरन्तरं प्राङ्मातृभुवं वेदप्रयुक्त 'सप्तसिन्धु' पदद्वारा तमेव प्रदेशं निरदिशन्। एवञ्च वेदेषु सप्तसिन्धुपदगीतः प्रदेशः स एवास्त इत्येषां विदुषां प्रस्तावः।

अयं विचारः खल्वेकेनैव लोष्टखण्डेन आखेटद्वयमात्मसात्करोति। देशान्तरादार्याणामिहागमनमिति प्रथम.। वेदान्तर्गतसप्तसिन्धुवर्णनप्रसंगानां बल्कशसरः समीपस्थित प्रदेशेन सह संगमनमित्यपरः। जानन्ति सर्वे विपश्चित. स्वान्तरात्मना देशान्तरादार्याणामिहागमने नास्ति किमपि कीदृगपि प्रमाणम्। चतुरस्रं चातुर्यमाचरद्भिर्विपश्चिद्वर्यैस्तदुद्बोधनायैव वेदगतसप्तसिन्धुवर्णनप्रसंगानां बल्कशसरस्तीराऽन्तिके वर्त्तमानेन प्रदेशेन सह संगमनाय प्रयासो व्यधायीति कृत्वा 'आम्राश्च सिक्ताः पितरश्च प्रीणिता एका क्रिया द्व्यर्थकरी प्रसिद्धा' इत्याम्राणकश्चरितार्थतां नीतः।

सैषा संगतिः कमाधारमालम्बत इति विचार्यते।

क—प्रथमं नदीनामान्यवलोक्यन्ताम्। बल्कशसरसि निविशमानानां सप्तानां नदीनां नामानि वेदोक्तनदीनामभिः सह नांशतोऽपि संगच्छन्ते। एतन्मतप्रस्तोतारः कथयन्ति नामसंगमनाथ प्रयत्नो विधेय इति। कीदृशोऽत्र प्रयत्नो उपेक्ष्यत इति त एव जानन्ति।

ख—अन्यच्च, इहागतैरार्यैः स्वपूर्वजप्रदेशनदी स्मरद्भिः सप्तनदीवर्णनं वेदेष्वकारि इति कथनमपि न प्रमाणमाश्रयते। मन्ये, अधुनातनविद्वज्जनविचारानुसारं भारतभुवमागतानां तदार्याणां निजाभिजनप्रदेशनाममात्रं स्मृतमवशिष्टमासीत्, परं तत्र प्रवहन्तीनां नदीनां नामानि सर्वथापि विस्मृतान्यभवन्। विचित्रेयं खलु भक्तिमूला मातृभूस्मरणपरम्परा। संभावयामि, अधुनातनविद्वद्भिरार्याणां बल्कशसरः समीपप्रदेशं मूलनिवासमाघोषद्भिः वस्तुभूतस्यार्थस्य शीर्षासनमेवेदमकारि। यतः कस्माच्चिदार्याणां मूलनिवासात् कदाचिदाच्छिद्य विनिर्गतैः कैश्चिदार्यपारिवारिकजनैः कालान्तरेण बल्कशसरः समीपस्थितं इत्यादिसप्तनदीपरिवेष्टितं प्रदेशमासाद्य मूलावासस्थित सप्तनदीः संस्मरद्भिः परां प्रीतिं सन्तुष्टिं चानुभवद्भिः तस्यैव प्रदेशस्य 'सप्तनदीप्रदेश' इति नाम कृतं भवेत्। वेदेषु कस्यचित् प्रदेशस्यैतन्नाम क्वापि न विद्यते. न चान्यस्मिन् भारतीये वाङ्मये। वेदे प्राधान्येन नदीनामेव वर्णनम्। तत्र तु प्रदेशस्यैतन्नामेति महदन्तरम्। स्वातन्त्र्येण नदीवर्णनं मूलभूतम्, तदाधारतया प्रदेशस्य नामकरणमनुस्मरणमात्रम्।

ग—अपरञ्चेदं विचारणीयम्, योऽयं सप्तनदीप्रवाहपरिवेष्टितः कश्चन प्रदेशः कल्प्यते, तत्र सप्तानां नदीनामुद्गमस्थानीयः स प्रदेशः संभाव्येत, विनशनस्थानीयो वा! विनशनस्थानं तदेव, यत्र समुद्रे सरसि वा नद्यो निपत्यास्तमयं यान्ति। उद्गमस्थानं

यतो नदीनामारम्भः । वैदिकवर्णनं सर्वत्रापि नदीनामुद्गमस्थानीयम् । 'अवासृजः सर्त्तवे सप्त सिन्धून्' (१।३२।१२), 'यो हत्वाहिमरिणात् सप्तसिन्धून्' (२।१२।३), 'अवासृजत् सर्त्तवे सप्तसिन्धून्' (२।१२।१२), 'अहन्नहिमरिणात् सप्तसिन्धून्' (१०।६७।१२), इत्यादिवर्णनेषु इन्द्रो वृत्रमहिं मेघं निहत्य वर्षकर्मणा महता जलौघेन नदीराप्लावयति, प्रेरयतीव च ताः समुद्रं प्रति गन्तुम् । एतदर्थप्रतिपादकानां मन्त्राणां नितान्तमपि कार्पण्यं नास्ति वेदे[1] ।

एवम्भूत वैदिकवर्णनानुरोधेन सप्तनदीसमुद्गमस्थानसमीपस्थित एव प्रदेशः सप्तसिन्धु पदसमुपलक्षितो ग्राह्यः । एवञ्च बल्कशसरः समीपस्थितं प्रदेशं वैदिकसप्तसिन्धुं कल्पयतां विदुषां कथनं वैदिकवर्णनानुकूल्याभावात् सर्वथापि पङ्गुतामेव भजते, न ग्राह्यास्पदताम् । तस्य प्रदेशस्य स्थितिनिर्शतोऽपि वैदिकसप्तसिन्धुवर्णनेन संगच्छते ।

वैदिकसप्तनदीवर्णनानुकूल्याभावादेव तादृशनदीमध्यभागपरिवेष्टितोऽपि प्रदेशो वैदिकसप्तसिन्धुपदाभ्यामवबोधितो न संभवति । एवमपि वर्त्तमानपञ्चनदप्रदेशस्य कश्चनापि भूभागो वैदिक सप्तनद्युपलक्षितप्रदेशान्तर्गतो नासीदिति प्रतीयते । एतस्य विवेचनस्य फलस्वरूपा महतीयं जिज्ञासा समुत्पद्यते, एवम्भूतः सप्तसिन्धुसमुद्गमोपलक्षितः प्रदेशः पृथिव्यां क्व वर्त्तते नाम । तदन्वेषणतत्परे मयि योऽयं परिणामः सम्मुखमायातः, सोऽत्र प्रस्तूयते ।

४. **हिमालयकेन्द्रे सप्तसिन्धवः**—यदा वयं विस्तृतस्य वर्त्तमानस्य हिमवतो गिरेर्मध्यभागं दृष्टिगोचरं कुर्मः, तदाऽल्पीयसि सीम्नि खल्वेवम्भूतः प्रदेशो दृक्पथमायाति, यत्र महत्यः सप्त नद्योऽधिकतोऽधिकं समीपे वर्तन्ते । उत्तरभारते प्रवहन्तीनां सप्त नदीनामुद्गमस्थानं हिमालयस्याल्पीयसि भागे मर्यादितमस्ति, याः साम्प्रतं नद्यः प्रतीच्यां दक्षिणस्यां प्राच्यां च दिशि निजोद्गमस्थानात् प्रवहन्ति । ताश्चैता नद्यः—सिन्धुः, शुतुद्रिः, सरस्वती, यमुना, गङ्गा, शारदा, ब्रह्मपुत्रा चेति । आसां सरितामुद्गमस्थानानि वर्त्तमाने कालेऽधिकतोऽधिकं शतमीलपर्यन्तप्राये प्रदेशेऽन्तर्भवन्ति । इदमप्यन्तरं द्वयोरेव नद्योः, ययोरेका प्रतीच्यामपरा च प्राच्यामुद्गच्छति । अन्यासां नदीनामुद्गमस्थानान्तरं तु स्वल्पतरमेव । सम्भाव्यते ऽतिप्राचीने काले तयोर्द्वयोरपि नद्योरुद्गमस्थानस्यान्तरं न्यूनमेव स्यात् ।

यदि सिन्धुनदमुखमारभ्य ब्रह्मपुत्रनदमुखपर्यन्तं सर्वासामन्यासामन्तरालवर्त्तिनदीनामुद्गमस्थानानि स्पृशन्ती रेखा निर्मीयेत, तदा सा सितपक्षद्वितीयाचन्द्रलेखेव

---

१. द्रष्टव्यस्थलानि, ऋ० १।३२।१२; ६१।१०।। २।११।२; १२।३, १२; १५।३; २८।४।। ३।३६।६, ७।। ४।१७।१; १८।७; १९।३,५,६,८; २८।१; ४२।७।। ६।१६।५; ३६।३।। ७।१८।२४; ६७।८।। ८।६।४,३५; ३२।२५; ४४।२५; ८५।१; ९२।२२।। ९।८८।६; १०८।१६।। १०।४३।३; ४९।९, ६७।१२, ८९।७, १११।९, १३३।२।।

अश्वपादसंलग्न लौहनालाकारेव वा प्रतीयेत । अतितरां पुराकाले तस्मिन् प्रदेश-सन्निवेशे लघीयानुदधिः महद्वा सर आसीत्, यस्य समुल्लेखो भारतीये वाङ्मये ब्रह्मसरः' इति 'विन्दुसरः' इति वा नाम्नाऽवलोक्यते । अधुनाऽयं प्रदेशः कैलासगिरिपरिसर समेतः मानस सरोवरस्य परितः प्रतीच्यां दिशि विस्तृतो वर्त्तते । तस्योदधेश्चिन्हभूतं साम्प्रतमवशिष्टं मानसं सरः, 'राक्षसताल' इति नाम्ना प्रसिद्धमपरञ्च सरः ।

विनष्टाया अपि सरस्वत्याः उद्गमस्थानं प्रवाहश्च अद्यापि द्रष्टुं शक्यते । सरस्वती स्वोद्गमस्थानात् कतिचित्क्रोशपर्यन्तं गत्वा गङ्गायाः प्रधानधारायां संमिलति साम्प्रतम् । एवं मानससरोवरस्य चतुर्दिक्षु विशेषतो दक्षिणस्यां प्रतीच्यां च दिशि दूरतरं विस्तृतो भूप्रदेशो वैदिकवर्णनानुसारं तदानीन्तनः सप्त सिन्धूनां प्रदेश आसीदिति शक्यते संभावयितुम् । यथा तदानीं तथाऽद्यापि तस्मात् प्रदेशात् सप्त नद्यः प्रभवन्ति प्रवहन्ति च ।

ब्रह्मसरसस्तत्सबद्धानां सप्त नदीनां च वर्णनं रामायणे[१] महाभारते[२] पुराणादि-वाङ्मये[३] च प्रचुरमुपलभ्यते । तदेतद्वर्णनं वैदिक वर्णनस्य विवरणमात्रं स्यादिति मन्ये । तस्यैतस्य पुराणादिगतवर्णनस्यायमेव सारः—महादेवो ब्रह्मसरसि नभसो गङ्गामत्यजत् । तस्याश्च महान्तं प्रवाहवेगं ब्रह्मसरः सोढुं नाशकत् । तदा सा गङ्गा सप्तसु धारासु विभक्ता सती प्रावहत् । वर्षारूपेणान्तरिक्षात् पतन्तीनां वारिधाराणां पुराणेषु (स्कन्द०, वै० खं० वैंकटाचलमाहात्म्य प्रसंगे, ४० अध्याये) गङ्गा इति आकाशगङ्गा इति वा नाम गीयते ।

अनन्तरवर्त्तिनि वैदिके च वाङ्मयेऽयं सप्तानां सिन्धूनां प्रदेशः सादरं देव-लोकत्वेन संस्मृतो दृश्यते । अस्मिन् विषये साक्षित्वेन ताण्ड्यमहाब्राह्मणमवलोक-नीयम् (२५।१०।१२-२३) । मानवीये धर्मशास्त्रे ब्रह्मावर्त्तदेशस्य मर्यादां बोधयता मनुना सरस्वतीदृषद्वत्यौ नद्यौ देवलोकात् प्रभवत्वादेव देवनदीत्वेन संस्मृते । ब्रह्मा-वर्त्तदेशोऽपि देवनिर्मित इत्युक्तः । पूर्वोक्ते सप्त सिन्धूनां प्रदेशे जनबाहुल्यमाकलयन्तः कदाचिदर्वाक्तनार्याणां पूर्वजा देवास्तासां नदीनां तीरवर्त्तिप्रदेशेषु शनैः शनैर्यथाकालं निवासप्रसारं लभमानाः कालान्तरेण सरस्वतीदृषद्वत्योरन्तराले समागता न्यवसन् । सोऽयं ब्रह्मावर्त्तदेशो देवनिर्मित इति संस्मृतः । एवं सप्तानां नदीनां प्रदेशो वेदवर्णितो

---

१. बालकाण्ड, ४३।११-१४।।

२. सभा०, ३।११।। भीष्म० ६।४३-४५, ४८-४९ वन० ८७।६, ८८।३।।

३. पद्म पु०, आ० खं० ३।५९-६६।। वायु पु०, ४७।४३।। मार्क० पु०, ५५।३।। मत्स्य पु०, १२०।१९१८ इत्यादीनि स्थलानि द्रष्टव्यानि ।

हिमालयाधित्यकासु मानससरोवरपरिसर आसीदिति मदीयः प्रस्तावः ।[1]

अग्रे विद्वांसः प्रमाणम्

---

१. ब्रह्मपुत्रा नदी 'रोहित' पदेन ऋग्वेदे (८।७।२८) वर्णिता प्रतीयते। अस्या नद्याः साम्प्रतं 'लोहित' इति नाम असमप्रदेशे व्यवह्रियमाणं रोहित' पदस्यैव' परिवर्त्तितं रूपम्। अथर्ववेदस्य त्रयोदशकाण्डे 'रोहितः' देवतात्वेन संस्तुतः। यथा 'सिन्धु' पदं नदीवाचकमपि वेदे पुंसि प्रयुज्यते, तथा नद-विशेषपदमभिलक्ष्य 'रोहित' पदस्यापि पुंसि प्रयोगः समाधेयः।

# वैदिकेस्लामधर्मयोस्तुलनात्मकमध्ययनम्

ले० डा० वेदप्रकाश उपाध्यायः, एम० ए० डी० फिल०

अस्ति संस्कृतवाङ्मयस्य अन्यधर्मेभ्योऽपि महत् योगदानम् । पुराणेषु भारतेतरधर्मविषयेऽपि विवरणं प्राप्यते । आदमस्योत्पत्तिः, न्यूहकाले जलप्लावनम्, महामदोत्पत्तिः, महामदस्य भोजराजेन सह समागमः, इस्लामधर्मानुयायिनां बाह्यस्वरूपवर्णनम् इत्येते विषयाः भविष्यपुराणस्य प्रतिसर्गपर्वणि वर्णिताः । शकराजस्य विदेशगमनम्, हूणदेशे ईशामसीहेन सह शकराजस्य वार्तालापः, ईशामसीहकृतस्वधर्मनिरूपणमित्यादयो विषया अपि तत्रैव निरूपिताः । आदमः ईसाई-इस्लामधर्मयोराधारभूतो मूलपुरुषः । यद्यपि ईशानुयायिनो महामदानुयायिनश्च परस्परं न समानसिद्धान्तत्वमुपलभन्ते सर्वथा, परन्तु स्वमूलभूतपुरुषादमविषये परस्परमैकमत्यमुभयोर्धर्मयोरनुयायिनां मध्ये । आदमोत्पत्तिर्भविष्यपुराणे विष्णुकर्दमतो निर्दिष्टा । आदमेन सहैव तस्य पत्नी हव्यवती जाता[1] या इस्लामधर्मग्रन्थे कुराने 'हव्वे'त्यभिधीयते, ईशामतावलम्बिनां धर्मशास्त्रे बाइबिले ईवेति विश्रुता । आदमशब्दस्य व्युत्पत्तिरपि भविष्यपुराणे 'इन्द्रियाणि दमित्वा यो ह्यात्मध्यानपरायणः तस्मादादमनामासौ पत्नी हव्यवती तथेति कृता । आदमस्य जन्मकालविषये उल्लेखः द्विशताष्टसहस्रे द्वे शेषे तु द्वापरे युगे आदमोत्पत्तिरिति भविष्यपुराणविषयः ।[2] सप्तत्युत्तरपञ्चसहस्रवर्षेभ्यः पूर्वं कलियुगस्यारम्भकालः । अष्टोत्तरद्विशतोत्तरद्विसहस्रसंवत्सराणि पूर्वं द्वापरसमाप्तेः आदमजन्मकालः । इत्थमष्टसप्तत्युत्तरद्विशतोत्तरसप्तसहस्रवर्षेभ्यःपूर्वमादमः प्रादुर्बभूव । ईशानु-

---

१. 'अदमो नाम पुरुषः पत्नी हव्यवती तथा । विष्णुकर्दमतो जातौ म्लेच्छवंशप्रवर्धनौ ।। भविष्य पु०, प्रतिसर्ग पर्व, प्र० ख०, च० अ० ।

२. 'द्विशताष्टसहस्रे द्वे शेषे तु द्वापरे युगे । बहुकीर्तिमती भूमिर्भविता कीर्तिमालिनी ।। इन्द्रियाणि दमित्वा यो ह्यात्मध्यानपरायणः । तस्मादादमनामासौ पत्नी हव्यवती तथा ।।' भविष्य पु०, प्रतिसर्ग प०, प्र० ख०, च० अ०, २८. २९.

कैश्चिदिस्लामधर्मानुयायिनां च मतानुसारमपि आदमस्य सएव कालो यो भविष्य-पुराणे निर्धारितः ।

ईशाविषये इयमाख्यायिका भविष्यपुराणस्य प्रतिसर्गपर्वणि उपलभ्यते । विक्रमादित्यपौत्रश्चीनतैत्तिरिदेशजान् दुराधर्षान् शठान् जित्वैकदा सः शकाधीशो हिमतुङ्गं समुपजगाम । हूणदेशस्य मध्ये गिरिस्थं शुभं श्वेतवस्त्रकं गौराङ्गं पुरुषं दृष्ट्वा तं सः पप्रच्छ—'को भवान् ? धर्मे किं भवतो मतम् ?' स उवाच—'कुमारीगर्भसम्भवं मामीशपुत्रं विद्धि, अहं म्लेच्छधर्मस्य वक्तास्मि । राज्ञा शकाधीशेन पृष्टः स उवाच स्वधर्मपरिचयम् - सत्यस्य संक्षये प्राप्ते निर्मर्यादे म्लेच्छदेशेऽहं मसीहत्वमुपागतोऽस्मि । मया यो धर्मो म्लेच्छेषु स्थापित हे भूपते । तं शृणु । मानसं निर्मलं कृत्वा न्यायेन सत्यवचसा मनसैक्येन च मानवो नैगमं जपमास्थाय सूर्यमण्डलसंस्थितमीशं ध्यानेन पूजयेत्, अयं प्रभुः अचलः । ईशपूजया सर्वविधदुःखानि नश्यन्ति । मम हृदि नित्यशुद्धा शिवङ्करी ईशमूर्तिः प्राप्ता, अतएव मम नाम ईशामसीह इति प्रतिष्ठितम् । एतच्छ्रुत्वा राजा परमानन्दमुपाजगाम । उक्तं हि प्रतिसर्गपर्वणि द्वितीयाध्याये भविष्यपुराणस्य—'एकदा तु शकाधीशो हिमतुङ्गं समाययौ । हूणदेशस्य मध्ये वै गिरिस्थं पुरुषं शुभम् ।। ददर्श बलवान् राजा गौराङ्गं श्वेतवस्त्रकम् ।। को भवानिति तं प्राह स होवाच मुदान्वितः ।। ईशपुत्रं च मां विद्धि कुमारीगर्भसम्भवम् । म्लेच्छधर्मस्य वक्तारं सत्यव्रतपरायणम् । इति श्रुत्वा नृपः प्राह धर्मे किं भवतो मतम् ।। श्रुत्वोवाच महाराज प्राप्ते सत्यस्य संक्षये । निर्मर्यादे म्लेच्छदेशे मसीहोऽहं समागतः ।। ईशामसी च दस्यूनां प्रादुर्भूता भयङ्करी । तामहंम्लेच्छतः प्राप्य मसीहत्वमुपागतः ।। म्लेच्छेषु स्थापितो धर्मो मया तच्छृणु भूपते । मानसं निर्मलं कृत्वामलं देहे शुभाशुभम् ।। नैगमं जपमास्थाय जपेत निर्मलं परम् । न्यायेन सत्यवचसा मनसैक्येन मानवः । ध्यानेन पूजयेदीशं सूर्यमण्डलसंस्थितम् । अचलोऽयं प्रभुः साक्षात्तथा सूर्योऽचलः सदा ।। तत्त्वानां चलभूतानां कर्षणः स समन्ततः । इति कृत्येन भूपाल मसीहा बिलयंगता ।। ईशमूर्तिर्हृदिप्राप्ता नित्यशुद्धा शिवङ्करी । ईशामसीह इति च मम नाम प्रतिष्ठितम् ।'[1]

इस्लामधर्मस्य प्रवर्तको महामदो भोजराजेन सह मैत्रीभावेनातिष्ठत् । सः भोजमुवाच—हे राजन् । तवार्यधर्मः सर्वधर्मोत्तमः । अहमपि ईशाज्ञया दारुणं धर्मं करिष्यामि । ममानुयायी लिङ्गच्छेदी शिखाहीनः श्मश्रुधारी भविष्यतीत्यस्मिन् विषये भविष्यपुराणे उक्तम् यत्—'आर्यधर्मो हि ते राजन् सर्वधर्मोत्तमः स्मृतः । ईशाज्ञया करिष्यामि पैशाचं धर्मदारुणम् ।। लिङ्गच्छेदी शिखाहीनः श्मश्रुधारी सदूषकः । उच्चालापी सर्वभक्षी भविष्यति जनो मम ।। मुसलेनैव संस्कारः कुशैरिव भवष्यति । तस्मान्मुसलवन्तो हि इत्यादि ।।

यद्यपि वेदज्ञैः नराशंसो वैदिकोदेव इत्युच्यते, परन्तु कैश्चिदिस्लामधर्मानुयायिभिर्महामद एव नराशंस इति मन्यते । महामदस्यारबीभाषायां मोहम्मदो भवति ।

---

१. भविष्य पु०, प्रति० प०, तृ० ख०, द्वि० स० २१-३१.

मोहम्मदशब्द अरबीभाषायां प्रशंसार्थकहम्दधातोर्निष्पद्यते । मोहम्मदशब्दस्यार्थः 'प्रशंसितः' भवति । नराशंसशब्दस्याप्यर्थो मोहम्मदशब्दस्यार्थवत् प्रतीयते । आङ्-पूर्वकशंस्धातोराशंसशब्दो निष्पद्यते, नरैर्जनैराशंसितः प्रशंसितः इति नराशंसो जनैः प्रशंसित इत्यर्थे प्रयुज्यते । नराशंसस्यकालविषये तु न स्पष्ट उल्लेखो वेदेषु, परन्तु उष्ट्रा यस्य प्रवाहणः[१] इत्यथर्ववेदमन्त्रादेतत्स्पष्टीभवति यन्नराशंसोत्पत्तिस्तस्मिन्नेव काले भविष्यति यदोष्ट्राणां वाहनरूपेण प्रयोगो भविष्यति । नराशंसो वाहनरूपेणोष्ट्राणां प्रयोगं करिष्यतीति ज्ञानात्तस्योत्पत्तिस्तस्मिन्देशे भविता यस्मिन्देशे उष्ट्राणामुपयोगो भवितुं शक्यते । एतादृशः प्रदेशोऽरबदेशः सिद्धः 'नराशंस और अन्तिम ऋषि' इति पुस्तके । वाहनरूपेण महामद उष्ट्राणां प्रयोगं कृतवान्[२] । तस्मिन्काले उष्ट्राणां प्रयोगोऽपि बाहुल्येनासीत् । इत्थमिस्लामधर्मजीवनमूलभूतो महामदो वैदिकनराशंसेन साम्यमनुगच्छति ।

अन्यत्साम्यं कल्क्यवतारेण सह महामदस्यास्ति । कल्क्यवतारविषयकं वर्णनं कल्किपुराणे भागवतपुराणे च अस्ति । साम्यविधायकानि कानिचित्तथ्यानि प्रस्तूयन्ते ।

कल्किजन्मविषयमधिकृत्योक्तं यत्तस्योत्पत्तिर्विष्णुयशसोगृहे भविता । आशुगमश्वमारुह्य सोऽसिनाऽसाधुदमनं करिष्यति ।[३] तस्य जन्मकालविषये उक्तम्—'द्वादश्यां शुक्लपक्षस्य माधवे मासि माधवम् । जातं ददृशतुः पुत्रं पितरौ हृष्टमानसौ ।।' अर्थात् माधवमासस्य शुक्लपक्षस्य द्वादश्यां तिथौ स उत्पत्स्यते ।[४] महामदजन्मविषयेऽपि उपर्युक्ततथ्यस्य साम्यं कर्तुं शक्यते । महामदस्य पितुर्नाम अब्दुल्ला इति आसीत् । अब्दुल्लाशब्दस्यार्थो विष्णोर्यशोगायको दासो वा भवति । अल्लाह्शब्दस्यविष्णुरित्यर्थः । विष्णुयशसोऽरबीभाषायामब्दुल्ला इति भवति । पितृनामसाम्ये महामदः कल्किसमतां बिभर्ति । महामदस्य जन्मकालोऽपि कल्किजन्मकालसमः । चन्द्रस्य शुक्लपक्षस्य द्वादश्यां तिथौ स जातः । [illegible] 'बारह रबीउल-अव्वल' इति महामदजन्म विश्रुतम् । महामेदनापि असिनाऽनेकेऽसाधवो विनष्टाः ।

---

१. 'उष्ट्रा यस्य प्रवाहणः' अथर्व० २०।१२७।२।।

2. 'Around the camels of Mahomet and his immediate followers rode the chief men of city, clad in their best raiment and in glittering armour.'

Life of Mahomet, by Sir William Muir Abridged edition, page 180.

३. 'अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः । असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ।''—भागवत पु० १२।२।१९।।

४. कल्किपुराण, द्वितीय अध्याय, १५ वां श्लोक ।

अरबदेशस्य दुर्व्यवस्था तेन संस्कृता । इस्लामधर्मानुयायिनां मध्ये इयम् ख्यायिका प्रचलिता यत् स देवेन दत्तमश्वमारूढः सन् आकाशलोकेऽपि विचरितवान् ।[1] कल्कि-विषयेऽपि उक्तम्—देवदत्तमश्वमारूढो भविष्यति कल्किः । देवदत्तशब्दस्यार्थः 'देवेन दत्त' इति भवति । एतन्नामाप्यश्वस्य भवितुं शक्यते, परन्तु साम्यदृष्ट्या देवदत्त-शब्दस्यार्थस्तृतीयातत्पुरुषसमासेन युक्तः प्रतीयते । कल्किविषये इदमुक्तं यत्तस्य जन्म कलौ युगे भविष्यति । तेन प्रयुज्यमानाश्वविषयकसूचना निवेदयत्यस्मान् यत्तस्योत्पत्ति-कालेऽश्वानां प्रयोगो युद्धे भविष्यति । महामदस्य जीवनकाले युद्धेऽश्वानां वाहनरूपेण प्रयोगा अभवन्, संहारार्थमसिप्रयोगोऽप्यभवत् । महामदोऽश्वप्रिय आसीत् इत्येतदस-उस्सियरनाम्नि ग्रन्थे प्रमाणितम् ।[2] युद्धे महामदेन नवसङ्ख्याकाः खड्गा विपक्षिसंहारार्थं प्रयोग आनीता आसन् इत्यप्यसहुस्सियरग्रन्थे प्रमाणितम् ।[3]

भारतीयमान्यतानुसारं कल्किरन्तिमावताररूपेण कल्पितो यथा भागवतपुराणस्य चतुर्विंशावतार प्रसङ्गेण ज्ञायते ।[4] महामदेनाप्युद्घोषितं यत् अहमन्तिमः सन्देष्टा, इत्यस्मात्कारणादिस्लामधर्मानुगा महामदातिरिक्त न कञ्चिदन्यं भाविनं सन्देष्टारं मन्यन्ते । सरवरे आलमग्रन्थानुसारं कल्किः परशुरामेण शिक्षितो भविष्यत्युत्तरस्यां दिशि कस्याञ्चित्कन्दरायाम् । परशुरामः सरवरे आलममतानुसारं जिब्रीलबोधकः । महामदेनापि गारेहिराख्यायां कन्दरायां जिब्रीलाच्छिक्षा गृहीता ।[5] स्वगृहादुत्तरस्यां दिशिगत्वा किञ्चित्कालानन्तरं पुनरपि कल्कि स्वजन्मस्थानमागमिष्यतीतिवर्णनेन महामदस्य मदीनाप्रस्थानम्किञ्चित्कालानन्तर स्वजन्मस्थानभूतमक्कां प्रति आगमनं च साम्यं निर्दिशतः । शिवेन कल्कये दीयमानोऽश्वः खुदाभिधेन महामदाय दीयमान-बुर्राकाख्याश्वतुलनां बिभर्ति इत्येतद्विवरणं सरवरे आलमाख्यग्रन्थस्यैकांशपृष्ठे वरीवर्ति । उपर्युक्तग्रन्थकारस्याप्युद्देशः कल्क्यवतारमहामदयोरैक्यप्रतिपादनमेव प्रतीयते ।

वैदिकेस्लामधर्मयोः सिद्धान्तेष्वपि महत्साम्यमस्ति । एकेश्वरवादः उभयोरपि धर्मयोः धर्मग्रन्थेषु प्रतिपादितः । ऋग्वेदानुसारं तु एक एवेश्वरो नामभेदात् भिन्न-भिन्नदेव इव प्रतिभाति । 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।।[6] इति मन्त्र इन्द्रवरुणाग्न्यादीनां देवानामैक्यं प्रतिपादयति । ऋग्वेदसंहिताया द्वितीयमण्डलस्थप्रथमसूक्ते ब्रह्मेन्द्रविष्णु-रुद्रवरुणसवितृसरस्वत्यादीनां देवानामैक्यं प्रतिपादितम् । 'एकमेवाद्वितीयं ब्रह्म' इत्येतस्य

---

1. Life of Mahomet, by Sir William Muir, p. 125.
2. Asah us siyar. page. 595.
3. Asah us siyar, page. 596.
४. भागवतपुराण, प्रथमस्कन्ध, तृ० अ०, २५ वां श्लोक ।
५. सरवरे आलम, पृ० ११ ।
६ ऋग्वेदसंहिता १.१६४.४६, अथर्व० ९.१०.२८ निरुक्त ७.१८ ।

साम्यं महामदीयानां मूलमन्त्रांशे 'ला इलाह इल्लल्लाहे' ति वाक्ये स्थितम् । ला = नास्ति, इलाह = पूजनीयः, इल्लल्लाह ईश्वरातिरिक्तमिति ज्ञायते यदिस्लामधर्मानुयायि-मीश्वरादतिरिक्तं किञ्चिदन्यन्नोपासनीयम् । अस्मादेव कारणान्मुस्लिममहामदीयाः प्रेतानपूजयन्तो मोहर्रमोत्सवं तिरस्कुर्वन्ति । अरबदेशीया अपि मोहर्रमोत्सवं न मन्यन्ते । केवल शियाभिधा महामदीया एव प्रेतान्पूजयन्ति मोहर्रमोत्सवाभिमुखाश्च भवन्ति । 'महेश्वर' शब्दोऽस्माकं धर्मे सुप्रसिद्धः । अस्य शब्दस्यार्थो 'महांश्चासौ ईश्वरः' इति समासविग्रहादीश्वरो महानित्यवबोधयति । इस्लामधर्मानुयायिभिरपि प्रयुज्यमान 'अल्लाहु अकबर' इति शब्दसङ्घस्तमेवार्थं पोषयति । अल्लाहशब्दस्यार्थो 'ईश्वरो' भवति, अकबरेतिशब्दस्यार्थो 'महानिति भवति । यद्यपि महामदीयैः प्रयुक्तः 'अल्लाहु अकबर' इति शब्दसङ्घो भाषाभेदाद्धर्मभेदं प्रकटयति, परन्तु आन्तरोऽर्थः समान एव । यथा वारिवाटरवास्सेरादीनां संस्कृताङ्ग्लजर्मनशब्दानां रूपभेदेऽपि तेषामर्थः एक एव, तथा ईश्वराल्लाहशब्दयोः रूपभेदेऽपि अर्थाभेदः । ऋग्वेदे एकस्मिन् स्थले उल्लेखो-ऽस्ति—'अग्ने नय सुपथा राये'[1] अर्थात् हे परमेश्वर ! अस्मान् सुमार्गेण नय । इस्लामधर्मग्रन्थकुरानस्यापि सूरेफतिहाख्येऽध्याये उल्लेखोऽस्ति यत् 'इह दिनस्सि-रातल्मुस्तकीम्' अर्थात् हे परमेश्वर । अस्मान् सुमार्गेण नय । कुरानस्य प्रथमे ... प्रथमे आयाते 'अलहम्दुलिल्लाहि रब्बिल् आलमीन' इति उपलभ्यते, यस्यार्थः 'सर्वाणि स्तोत्राणि तस्मै परमात्मने यः सर्वेषां लोकानां पालकः' इति अस्ति । परमेश्वरं प्रति एतादृशी भक्तिः इस्लामधर्मस्याप्यास्तिकत्वं विशदयति । इस्लामधर्मस्य केषाञ्चि-च्छब्दानामर्थे ज्ञाते सति स्वयमेवोभयोर्धर्मयोः साम्यं विज्ञातं भविष्यति । काफिर-शब्दोऽस्वीकारार्थककुफ्रधातोर्निष्पन्नो यस्यार्थो नास्तिको भवति । जन्नतस्य अर्थः स्वर्गः, जहन्नमस्य नरकः, अल्लाहस्य ईश्वरः, हजशब्दस्य तीर्थयात्रा ईमानशब्दस्य आस्था, जकातशब्दस्य दानम्, नमाजशब्दस्य नमः, रोजाशब्दस्य व्रतम्, कयामतशब्दस्य महाप्रलयो भवति ।

एतादृशे साम्ये सत्यपि उभयोर्धर्मयोर्विरोधो दृश्यते समाजे । कारणं स्पष्टम् । हिन्दवो गां मातृतुल्यां मन्यन्ते, परन्तु महामदीयैर्यदा कदा गोमांसास्वादनमपि क्रियते । महामदोक्तिर्हदीसे यत् 'अलइ कुम् बिअल्बानिल्बकरिफइन्नहा शिफाउन् व सम्नहा दवाउन् वलहमुहा द उन् ।[2] अर्थात् गोदुग्धं स्वास्थ्यवर्धकम्, गोघृतमौषधम्, गोमांसं रोगकारणम् । बाबा अलीमदासेनापि स्वसनातनधर्माख्ये पुस्तके गोमांसभक्षणं न अनिवार्यमतः महामदीयैर्गोमांसभक्षणत्यागो विधीयेत चेत्, वैदिकेस्लामधर्मानुयायिनां मध्ये शान्तिसद्भावनाप्रसारोऽपि भवेत् ।

---

१. ऋ० सं. १. १८९.१, वा. य. ३, ३६, ७, ४३, ४०, १६, तै. सं. १.१.१४.३, ४.४३.१ तै. ब्रा. २.८.२.३, तै. आ. १.८.८, श० ब्रा. १४.८.३. १ ॥

२. मस्नद, इमाम् आजम, टीका-मुल्ला अलीकारी पृ० २१४ ।

# आनन्द वर्द्धनात्पूर्वं ध्वनि सिद्धान्तः

डा० बी० एम० अवस्थी

संस्कृत काव्यशास्त्र परम्परायामलंकार-रीति-वृत्ति वक्रोक्ति-ध्वनि-रस-औचित्य सम्प्रदायाः यद्यपि पृथक् पृथक् सम्प्रदायत्वेन-स्वीकृताः, परं ध्वन्युत्तर कालीनैः काव्य-तत्वविद्भिरिदं निर्विवादं स्वीकृतं यदानन्दवर्द्धनेन प्रवर्त्तिते ध्वनि सिद्धान्ते समेऽपि काव्य सम्प्रदायाः अन्तर्भवन्ति । अर्थात् ध्वनौ काव्यात्मतया स्वीकृतायां काव्ये रसालंकार रीति वृत्ति वक्रोक्ति प्रभृतीनां समेषामपि काव्योपादान तत्वानां समुचितः सन्निवेशः स्वीकर्त्तुं शक्यते । अतएव हि आनन्दवर्धनाचार्येण प्रवर्त्तितो ध्वनि सिद्धान्तः अभिनव मम्मटाभ्यामुपबृंहितोऽद्यावधि निर्विवादं स्वीकृतः समादृतश्च ।

ध्वनि सिद्धान्तस्यास्य समुदयः कदा बभूव ? का चास्य विकास परम्परेत्यादि मीमांसनायैव मेऽत्र प्रवृत्तिः ।

सामान्यतः इदं स्वीक्रियते यदानन्दवर्धनः ध्वनिवादस्याद्य आचार्य इति स एवास्य प्रवर्त्तको भवेत् । परमानन्दवर्धनेन स्वयं निबद्धायां—

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नात पूर्वः ।
तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।।
केचिद्वाचां स्थितमविषये तत्वमूचुस्तदीयं
तेनब्रूमः सहृदय मनः प्रीतये तत्स्वरूपम् । (ध्वनिकारिका १.१)

कारिकायां 'समाम्नात पूर्वः' पदेन ध्वनि सिद्धान्तस्य पूर्वतनत्वं सूच्यते । अत्रैव च 'जगदुः' 'आहुः' 'अचूः'पदेषु परोक्षार्थकस्य लिटः (परोक्षेलिट्) प्रयोगादिदमपि ध्वन्यते यदस्य ध्वनि सिद्धान्तस्य प्रवृत्तिः आनन्द वर्धनात् चिराज्जातेति । ध्वन्यालोके च (वृत्तौ) ध्वन्यभाववादिनां पक्षमुपन्यस्यानन्दवर्धनाचार्येण 'अन्येब्रूयुः' इति पदेन प्रस्तावनां कृत्वा तत्रैव प्रसंगे 'तथा चान्येन कृत एवात्र श्लोक' इत्यभिदधानः—

'यस्मिन्नस्ति न वस्तु किञ्चनमनः प्रह्लादि सालंकृतिः
व्युत्पन्नै रचितं न चैव वचनैर्वक्रोक्ति शून्यं च यत् .
काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो-
नो विद्मोभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ।।

पूर्व पक्षमुसंजहार । लोचनकृदभिनवगुप्तः पद्यस्यास्यकर्त्तारं मनोरथनामानं कञ्चिदाचार्यमङ्गीचकार । अत्रैव पद्ये च ध्वनि विरोधिनः सुमतिनाम्नाभिहितस्य कस्यचिदाचार्यस्य नाम निर्देशो विहितः । तेनात्र संभावना जागर्ति यन्नूनं ध्वनि सिद्धान्तस्य प्रवर्तकः प्राचीनतरः कश्चिदाचार्य विशेषः अज्ञात नामा नानन्द वर्धनः इति ।

यतो हि काव्ये नाट्ये च रसः आत्मतया निर्विवादं सुचिरं प्राक् स्वीकृतः इति भारतीयेन नाट्यशास्त्रेण सोसूच्यते ।[1] महदिदमाश्चर्यावहं भवेद्यदि स्वीकृतेऽपिरसे तद्व्यञ्जन हेतुः ध्वनि व्यापारः तद्दिनेष्वज्ञातो भवेत् । रसव्यञ्जनाय हेतु भूते व्यञ्जन व्यापारेऽविदिते सति व्यंग्यस्य रसस्यात्मतया प्रतिष्ठा सुतरामसंभाव्येति तद्दिनेष्वपि ध्वनिः स्वीकर्त्तव्यैव ।

अथ च ध्वन्यालोक समुद्धृतस्य यस्मिन्नस्ति न वस्तु किञ्चनेत्यादि पद्यस्य कर्त्तुः मनोरथस्य स्थितिकाल पर्यालोचनेनापि ध्वनि सिद्धान्तस्याति प्राचीनत्व मीमांस्यत्वं सिध्यति । तथाहि अत्रपद्ये सुमति नाम्नः कस्यचिदाचार्यस्य निर्देशः श्लेष पूर्वकं विहितः । सुमतिश्चायहर्ष चरिते प्रासंगिकतयोल्लिखितः । तदनुसारं सुमतिरयं नाट्येन नाट्यशास्त्रेण वा सम्बद्धः कश्चिद् बौद्ध आचार्यः ।[2] हर्षचरितगतोऽयं सुमति. काल्पनिकश्चेत् तस्या अपि केनापि विशिष्टेन कारणेन भाव्यम् । कारणञ्च बौद्धस्य कस्य चिदाचार्यस्य सुमतेः संभावनैव संभवति नान्यत् । बौद्ध दर्शनस्यानात्मदर्शनतया नेदमस्वाभाविकं यद् बौद्धोऽयं नाट्याचार्यः आत्मभूतं रसं, तद् व्यञ्जक व्यञ्जन (ध्वनन) व्यापारं च निराकुर्यात् । आचार्यश्चायं संभवतः नाट्यशास्त्रस्य टीकाकृत् । यत्र रसस्य व्यञ्जको ध्वनन व्यापारः निराकृतो भवेत् । असावेव मनोरथेन पूर्वोद्धृते पद्ये समुल्लिखितः । सुमतेः स्थितिकाल निर्धारणाय अन्यथापिवा ध्वनि मीमांसकृतो मनोरथस्य कालः गवेषणीयः ।

संस्कृतस्य सुविशाले वाङ्मये त्रयाणां मनोरथानामुल्लेखः दरीदृश्यते । तेष्वेको मनोरथः सांख्यकारिकाया. टीकायां युक्तिदीपिकायां लभ्यते । युक्ति दीपिकाया. सम्पादकः

---

१. नहि रसादृते कश्चिदर्थः प्रवर्तते । नाट्यशास्त्र ६.३१. वृत्ति भाग पृ० ४४१ ।

२. (क) अभवंश्चास्य सवयसः समानाः सुहृदः सहायाश्च । तथा च······नर्त्तकी हरिणिका, पाराशरो सुमतिः, क्षपणकोवीरदेवः इत्यादि । हर्ष चरितम् ।

(ख) पाराशर्य शिलालिभ्यां भिक्षुनट सूत्रयोः । अष्टाध्यायी ।

डा० रामचन्द्र पाण्डेय: अस्या: टीकाया: रचनाकालं दिङ्नाग धर्मकीर्त्त्यो: स्थितिकाल-योरन्तराले मनुते । इतिहास विद्भिश्चानयो: स्थिति: क्रमश: षष्ठ सप्तम शतकयोरङ्गीकृता । अत: युक्ति दीपिकाया: रचनाकाल: षष्ठ सप्तम शताब्द्योरन्तराले स्वीकर्त्तव्य: स्यात् । युक्ति दीपिकायां च प्रकृति विकार भूतेयं सृष्टि: पुरुष विमोक्षार्थमिति प्रतिपाद्य, आह चेति प्रस्तावनया—

एवं विनापि सर्गेण यस्माद् बद्ध: पुमान् गुणै: ।
तस्माद् विफलतां यातु मनोरथ मनोरथ ।। (युक्ति दीपिका पृ० ६०)

पद्योऽयमुद्धृत: । प्रकरण पर्यालोचनेनेदंवक्तुं नातिदुष्करं यत् मनोरथ: सांख्य प्रतिपक्षभूतस्य कस्यचित् सम्प्रदायस्य सुप्रतिष्ठित आचार्यो बभूव । युक्ति दीपिकाया: पूर्वतरेण केनचिदाचार्येणासौ (मनोरथ:) साहंकारं खण्डनपुरस्सरं विवेचित: । युक्ति दीपिकाकृत् मनोरथ मत विमर्द्दकं तमाचार्यं विशेषं सादरं (नामनिर्देशं विनैव) स्वपक्ष समर्थनायोद्धरते, योहि निस्सन्देहं युक्ति दीपिका कर्त्तु: सुविदित: भवेत् ।

प्रसंगे चास्मिन्नस्याद्विवादलेशोऽपि कस्यापि विदुष: खण्डनायसमुद्धरणाय च तस्य सुप्रसिद्धं सम्मानितं च व्यक्तित्वं नितरामावश्यकम् । इति युक्तिदीपिकाकृता समुद्धृतेनाज्ञातनामकेनाचार्येण सुतरां सुविदितेनसुप्रतिष्ठितेन च भाव्यम् । प्रतिष्ठा लाभाय च न्यूनातिन्यूनं पञ्चाशद् वर्षाणामवधिरपेक्षिता भवेदिति स्वीक्रियेत चेत् पद्यस्यास्य कर्त्तु: काल: पञ्चम शताब्दे: उत्तरार्धादनन्तरं स्थापयितुं न शक्यते । यदि च मनोरथोऽपरिज्ञातनाम्नोऽस्याचार्यस्य स्थितेरपिन्यूनातिन्यूनं पञ्चाशद् वर्षाणि पूर्वं भवेदिति न स: पञ्चम शताब्दे: पूर्वार्धादनन्तरं स्थापयितुं शक्यते । इत्येकस्य मनोरथस्यस्थितिकाल: पञ्चम शताब्द्या: उत्तरं न स्थापयितुं शक्यते ।

अपरश्च मनोरथ: टालकृतायां गाथा सप्तशत्यां संकलितस्यैकस्य पद्यस्य कर्त्तृत्वेन वेवर प्रभृतिभि: विद्वद्भि: स्वीकृत: । ऐतिह्यविद्भि: गाथा सप्तशत्या: रचनाकाल: ईसा पूर्व प्रथम ईसोत्तर प्रथम शताब्द्योश्चान्तराले स्वीकृत: इति निर्विवादं तत्र संकलितस्य पद्यस्य कर्त्तु: मनोरथ स्थिति: तत: पूर्वं ईसापूर्व प्रथम शताब्द्या पूर्वं भवेदिति ।

इतरश्चैको मनोरथ: कल्हणकृतायां राजतरङ्गिण्यां काश्मीर राज्ञ: जयापीडस्य कविरिति निर्दिष्ट: ।[1] जैकोवी महाभागेन ध्वन्यालोके उद्धृतस्य 'यस्मिन्नस्ति नवस्तु किञ्चन मन: प्रह्लादिसालंकृति:' इत्यादि पद्यस्य कर्त्तायं तृतीय: जयापीडस्य राज्ञ: कवि: मनोरथ इति स्वीकर्तुं प्रयतितम् । सम्भवत: तस्यायं प्रयत्न: इतरयो: मनोरथयोरपरिचयवशात् कृतो भवेदितिमन्ये । यदिहि जयापीडराज्ञ: कवे: मनोरथस्य कश्चित्काव्यशास्त्र विषयक: ग्रन्थ: भवेत्तर्हि तद्ग्रन्थस्योपलब्धि: समग्रतयाऽसमग्रतया वा नूनंभवेत् । यतो

---

१. मनोरथ: शंखदत्तश्चटक: सन्धिमांस्तथा ।
बभूवु: कवयस्तस्य वामनाद्याश्चमन्त्रिण: ।। (राजतरङ्गिणी ४.४९७)

हि तात्कालिकानां उद्भट वामन प्रभृतीनां ग्रन्था अद्याप्युपलभ्यन्त एव । आनन्द वर्धनेनापि खण्डनीयस्यातो तद्दिनेषु सुसमादृतस्य, परमद्य सर्वथाऽविदितस्य स्थितिः नूनं सुनरामन्धकार पूर्णे कालेभवितव्या न तु सुविदिन प्राये जयापीडशासने । जयापीड समकालीन मनोरथेन तु केवल कविमात्रेणभाव्यं, नाचार्येणेति ।

शेषयोश्चद्वयोः मनोरथयोः युक्तिदीपिकायामुद्धृतः मनोरथः सुसमादृतः अनात्मवादीदार्शनिक इति पूर्वमुक्तम् । गाथा सप्तशत्यामुद्धृतश्च समादरणीयः कविः । विरोधि प्रमाणाभावे यदि कदाचिदनयोरभिन्नत्वं स्वीकर्तुं शक्येत, तर्हि अनेन मनोरथेन दार्शनिकतया काव्यशास्त्राचार्येणपि भाव्यमेव । अनात्मवादितया तेन ध्वनिविरोधिनाऽपि सुतरां भवितव्यमिति न भवेत् सन्देहास्पदम् । तथा सति ध्वन्यालोके खण्डनीयतयोद्धृतस्य पद्यस्य कर्त्ता अयमेव मनोरथः भवेदिति । स्थितिश्च तस्य ईसा पूर्व प्रथम शताब्द्यामिति ध्वनिसिद्धान्तस्यापि स्थितिः ततःपूर्वमङ्गीकरणीया ।

अथ सुमति मनोरथयोः साहित्यशास्त्राचार्यतया ध्वनिविरोधितया च स्थितौ अङ्गीकृतायां प्रश्नोऽयं सम्भाव्यते यत् तथा सति एतयोरुल्लेखः एतत्कृतयोः ग्रन्थयोः ग्रन्थानां वा समुपलब्धिः कुतो नेति ? अत्र प्रसङ्गे मया इत्येव वक्तव्यं यत् एतयोरियं स्थितिः एतत्समकालीनानां उत्तरवर्त्तिनां वा कोहल धर्मकीर्त्ति मेधाविरामशर्म सुरेश्वर शुक्रबृहस्पति भट्टलोल्लट शंकुक भट्टनायक प्रभृतीनां ज्ञात नामवतां उद्भटीये काव्यालंकार सारसंग्रहे संकेतितानां चाज्ञातनामवत षडधिकानामाचार्याणां बभूवसेयं स्थितिः एतयोरपिभवेदिति नाश्चर्यंकरम् । एष कोहलः नाट्यशास्त्रे भरतेन, रामशर्ममेधाविनौ भामहेन, पुनश्च रामशर्मा सबरक्षितेन सुबोधालंकारे धर्मकीर्त्तिः आनन्दवर्द्धनेन, भट्टलोल्लट शकुक-भट्टनायकाः अभिनवगुप्तपादाचार्येण सुरेश्वर शुक्र बृहस्पतयः सिंहलनृपतिना सियवसलकुर (स्वभाषालंकार) कारेण शिलामेघवण्णेन नामनिर्देश पूर्वं संकेतितास्तथाप्यविदिताः । एतेषां माननीयानां विदुषां काव्यशास्त्रीयस्य ग्रन्थस्य वा स्थितिः सैव सुमतिमनोरथयोरपि भवेदिति नाश्चर्यंकरम् । इति न तयोर्ग्रन्थप्राप्त्यभावमात्रेण तेषां तिरस्कारः ताभ्यां विवेचितस्य ध्वनिसिद्धान्तस्य तद्दिनेषु स्थितेरभाव वक्तुं नोचितंभवेत् ।

समुपलब्धेषु ग्रन्थेषु ध्वन्यालोककर्त्तुः आनन्दवर्धनात्पूर्वं न ध्वनेः प्रतीयमानस्यार्थस्य उल्लेख इयि वक्तुंनोचितम्, सिंहलभाषायां निबद्धे शिलामेघवण्ण (६१६-६२८ ई०) कृते सियवसलकुर (स्वभाषालकार) नामकेग्रन्थे वारद्वयं प्रतीयमानस्यार्थस्य संकेतः दृष्टः । प्रथमः—चतुर्थ कारिकायां यस्यानुवादः—'इह व्यक्तानुव्यक्तानां व्यक्तानामपि सर्वदा, वाचामेवप्रसादेन'' इत्यादिकर्त्तुं शक्यते अथ व्यक्तानुव्यक्त पदेन वाच्यार्थगुणीभावेनाभिव्यक्तस्य व्यंग्यार्थस्य ग्रहणं कृत्वा तेन लोकयात्रा प्रवर्त्तनं वाचः स्वभावो निर्दिष्टः । पुनश्च इतोपि समधिकतरं सुस्पष्टतया निर्देशः ग्रन्थस्योपसंहार प्रसंगे (३९८ कारिकायां) कृतः यस्य च संस्कृतेऽनुवादः—

वाच्य प्रतीयमानौ द्वौशब्दस्यार्थौ व्यवस्थितौ ।
साक्षात्प्रतीतो वाच्यार्थः परश्चार्थं प्रतीतितः ।।

इत्यादि कर्त्तुं शक्यते । अस्यैव पद्यस्य भावानुवादः आनन्दवर्धनेन ।

योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।
वाच्य प्रतीयमानाख्यौतस्य भेदावुभौ स्मृतौ ।।

ध्वन्यालोक० १-२) इत्यादिना कृतः ।

सियवस लकुर ध्वन्यालोकयोरेतादृशेन साम्येन नैवं वक्तुं शक्यते यत् सियवसलकुरकृत् शिलामेघवण्णः ध्वन्यालोक कर्त्तुरानन्दवर्धनस्याधमर्णः इति । यतोहि सिंहलदेशीय ऐतिह्यविद्भि. (The writer of the History of Cylon), अनुराधपुरस्य शासकत्वेनायं शिलामेघवण्णः सप्तमशतकस्य पूर्वार्धे स्वीकृतः । शासनकालश्चास्य ६१९-६२८ ई० पर्यन्तं निर्धारितः । इति ध्वनेरपि स्थितिः इतः पूर्व मेव स्वीकर्त्तव्येति ।

अत्रेदमवधेयं यदस्य (सिवसलकुर ग्रन्थस्यानुवाद पूर्वक सम्पादकः सिंहलदेशीयः श्री हेनपित गोदरग्रानसिंहः एनं नवमशताब्दीकं निरदिशत । परं प्रमाणाभावान्नैतद् हृद्यम् । काव्यशास्त्रे बौद्धाचार्याणां योग इत्येतन्नामके शोधप्रवन्धे श्रीमता मूलचन्द्रशास्त्रिणा दृढैः प्रमाणैः एतत्कृतं निर्देशं निरस्य सियवस लकुर ग्रन्थस्य रचना कालः सप्तमशतकस्यादिमोभागः सप्रमाणं निर्धारितः । इति न तत्रं स्यात् सन्देह लेशोऽपि । यदि च कदाचित् अप्रामाणिकमपि द्वितीयं पक्षमाश्रित्य तद्ग्रन्थ रचनाकालः नवमशताब्दीति स्वीक्रियेत तथापि स आनन्दवर्धनस्यानुकर्त्ता न सिध्यति । यतोहि ध्वन्यालोककृदानन्द वर्धनः निर्विवादं नवमशताब्द्याः उत्तरार्धमलंचकार । तद्दिनेष्वेव सुदूरं दक्षिणे सिलोनदेशे तदनुकरणमसंभावि इति तदापि द्वयोरपि पूर्ववर्त्तिनः ध्वनि प्रवर्त्तकस्याचार्यस्य स्थितिः कल्पनीया स्यात् ।

सियवसलकुर ग्रन्थस्य रचना दण्डिनः काव्यादर्शमनुसृत्यविहिता इति स्वयं शिला मेघवण्णोप्यङ्गीचकार । काव्यादर्शे च पूर्वोद्धृतस्य 'इह व्यक्तानुव्यक्तानां व्यक्तानामपिसर्वथा, वाचामेव प्रसादेने त्यादि कारिकायाः अनुकार्यभूताकारिका—

'इह शिष्टानु शिष्टानां शिष्टानामपि सर्वथा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्त्तते ।' इत्येव मुपलभ्यते ।

अत्र कारिकायां शिष्टानामिति पदे वैयाकरण सम्मत पदानां संकेत इति न कस्यापि विमतिः । परं शिष्टानुशिष्टानां पदेन कस्य ग्रहणमिति विचारास्पदम् । ममतु अत्रैवमभिमतं यत् शिष्टाः वाचाः वैयाकरण-सम्मताः केवलं वाच्यार्थ सम्पन्नाः, शिष्टानुशिष्टास्तु सहृदय सम्मताः वाच्यार्थ निर्दिष्टेन (अभिव्यक्तेन) व्यंग्यार्थेन सम्पन्नाः । इति द्वयोरपि सियवसलकुर काव्यादर्श गत वाक्यार्थयोः साम्यमेव । इति काव्यादर्शेऽपि प्रतीयमानार्थ संकेतः स्वीकार्य एव ।

उपर्युक्तं विवेचनमनुसृत्येदं स्वीकर्त्तुं शक्यते यद् ध्वनिसिद्धान्तस्य, प्रतीयमानार्थस्यव्यञ्जनावृत्तेश्च स्थितिः काव्य प्रकाशकर्त्तुःदण्डिनः (पञ्चमशताब्दीतः) पूर्वमेव

बभूव। ध्वनिविरोधित्वेन स्वीकृतयोः सुमतिमनोरथयोः स्थिति कालमाश्रित्य चैतेषां सत्ता ईसवीयशताब्द्याः अपि पूर्वं प्रथम शतकेस्वीकृतिः कर्तुं न दुष्करा।

एवं आनन्दवर्द्धनादति पूर्वं प्रतीयमानार्थस्यध्वनेर्वा सत्तायां स्वीकृतायां विचारणीयतयेदमुपतिष्ठते यत्कोऽसौध्वनि सिद्धान्तस्य प्रतिष्ठापको व्यक्ति विशेषः ? प्रश्नस्यास्य समाधानं न सुकरम्, भवादृशानां विद्वत्तल्लजानांश्रम सापेक्षम्। यतोहि संस्कृत काव्यशास्त्रस्यैतिह्ये एकतः भरत मुनि कृते नाटचशास्त्रे काव्यनाटच सम्वद्धानां प्रायशः समेषामपि उपादानतत्त्वानां यथाकथञ्चित्संकेतः काव्य त्मनः रसस्य सुप्रतिष्ठा च पूर्व वर्तिनामाचार्याणां नाम संकेत पूर्वकं दरीदृश्यते, येन पूर्वाचार्य परम्परायाः स्थितिः सुतरां स्वीकर्त्तुं शक्यते अन्यतश्च तदनन्तरं दण्डिपर्यन्तं स्थितानां ईसापूर्व चतुर्थशतक ईसोत्तर पञ्चशतकयोः, ईसापूर्व द्वितीयशतक ईसोत्तर सप्तमशतकयोर्वा (ई० पूर्व ४०० ई० ५०० अथवा ई० पूर्व २०० ई० ७००) मध्यवर्त्तिनामाचार्याणामैतिह्यमन्धकार पूर्णमस्ति। एषु नवशत मितेषु वर्षेषु नूनमनेके विद्वांसः काव्यशास्त्र विदः बभूवुः। येषां नाम निर्देशं विनैव केचिदन्येऽपरे इत्यादि पदैः संकेतः उद्भटीये काव्यशास्त्रे द्रष्टुं शक्यते। भामहीये काव्यालंकारे मेधाविरामशर्मणोः शिलामेघवण्ण कृते सियबसलकुर ग्रन्थे ब्रह्म शुक्र वृहस्पति काश्यपवामनानां सप्तम शतक पूर्व वर्त्तिनां नामान्युपलभ्यन्ते। ध्वनि सिद्धान्त प्रवर्त्तको ज्ञातनामा आचार्य विशेषः एतस्मिन्नेवान्धकारमयेकाले समुत्पन्नः स्यात्। परं तस्य ग्रन्थ विशेषस्तदनुयायिनां वा ग्रन्थाः बौद्ध-मीमांसक वैदिक-वेदान्तिनां परस्परं प्रवृत्ते संघर्षे उपेक्षिताः सन्तः क्रमशोविलीनतामापुः।

यदिकदाचिदितिहासविदांश्रमेणास्मिन्नन्धन्तमे तमसि प्रकाश रश्मेः प्रवेशोभवेन्मन्ये ध्वनि सिद्धान्त प्रवर्त्तकस्याचार्यस्य तदनुयायिनां समीक्षकानां च सुमति-मनोरथ प्रभृतीनां विषये किञ्चिद्विशिष्य वक्तुं शक्येत। अनुसन्धान कर्मणि प्रवृत्तानां विदुषां श्रम अत्र प्रसंगे नितरां प्रतीक्षित इति।

# श्री लालबहादुर शास्त्री केन्द्रीय संस्कृत विद्यापीठ

## शहीद जीत सिंह मार्ग कटवरिया सराय, नई दिल्ली

| | | |
|---|---|---|
| १. अध्वरमीमांसा कुतूहल वृत्ति | भाग १ | ३०.०० |
| | भाग २ | ३०.०० |
| | भाग ३ | १५.०० |
| | भाग ४ | ३१.०० |
| २. अध्ययन माला | | १०.०० |
| ३. अन्वेषणा | | ३३.०० |
| ४. बौद्धालंकार शास्त्रम् | | १५.०० |
| ५. भाषण भूषणम् | | १.७५ |
| ६. चान्द्र व्याकरणवृत्तिः | | २३.०० |
| ७. चित्रबन्धावतारिका | | २.५० |
| ८. देवी पुराणम् | | ४०.०० |
| ९. धूर्तनर्तकम् | | २.५० |
| १०. गीतिकादम्बरी | | २०.०० |
| ११. जैन जीवन दर्शन | | २०.०० |
| १२. जीवनपरिमल | | ३.०० |
| १३. श्री महावीर चरितामृतम् | | १.०० |
| १४. श्री महावीरपरिनिर्वाण स्मृति ग्रन्थ | | २१.०० |
| १५. नित्यकर्म प्रकाशः | | ४.०० |
| १६. पंचामृतम् | | १५.०० |
| १७. पाणिनि कात्यायनपतंजलि | | १५.०० |
| १८. श्री परमेश्वरानन्द शास्त्री स्मृति ग्रन्थ | | ३५.५० |
| १९. परिभाषेन्दुशेखर | | ७५.०० |
| २०. प्रमाण प्रमोदः | | ७.५० |
| २१. प्रवचन पारिजात | | ६.०० |
| २२. राघवाह्निकम् | | १.०० |
| २३. रसमीमांसा | | १.२५ |

| | |
|---|---|
| २४. रससिद्धान्त | १५.०० |
| २५. ऋग्वेद कवि विमर्श: | ३.०० |
| २६. ऋतु इन संस्कृत लिटरेचर | ३०.०० |
| २७. संस्कृत साहित्य में शब्दालंकार | ४०.०० |
| २८. संचारीभावों का शास्त्रीय अध्ययन | २०.०० |
| २९. शंकर स्तोत्रम् | १.२५ |
| ३०. शास्त्र दीपिका | ५०.०० |
| ३१. शोध प्रभा | ४०.०० |
| ३२. व्याख्यान वल्लरी | ४.०० |

## गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ इलाहाबाद

| | |
|---|---|
| १. एनुअल बिब्लिओग्राफी आफ इन्डोलाजी | ३०.०० |
| २. अन्वीक्षानयतत्वबोध: | १८.०० |
| ३. बापू | १०.०० |
| ४. चक्रकौमुदी | १४.०० |
| ५. डिस्क्रिप्टिव कैटलाग्स आफ संस्कृत मैनुस्क्रिप्ट्स इन जी. एन. जे. आर. आइ. खंड I भाग I | २५.०० |
| ६. ,, ,, भाग II | ३५.०० |
| ७. ,, ,, खंड II भाग I | ३५.०० |
| ८. ,, ,, भाग II | ४५.०० |
| ९. ,, ,, खंड III | ४५.०० |
| १०. गौतमीय सूत्र प्रकाश | २४.०० |
| ११. जहांगीर विरुदावली | ५.०० |
| १२. जानुराज चम्पू | १४.०० |
| १३. जातकमाला | ४०.०० |
| १४. जर्नल आफ गंगानाथ झा रिसर्च इन्स्टीट्यूट | ४०.०० |
| १५. काव्य प्रकाश: टीकात्रयसहित: | ६०.०० |

| | |
|---|---|
| १६. के. सी. चट्टोपाध्याय स्मृति ग्रन्थ खंड | ५०.०० |
| १७. महाकाल संहिता कामकला खंड | ३०.०० |
| १८. ,, ,, गुह्यकाली खंड भाग I | ७०.०० |
| १९. ,, ,, ,, ,, भाग II | ६०.०० |
| २०. ,, ,, ,, ,, भाग III | ४८.०० |
| २१. मीमांसा जुरिस्प्रुडेन्स | ४.०० |
| २२. मीमांसा रस पल्वलम् | ५.०० |
| २३. म. प्र. गोपीनाथ कविराज स्मृति खंड | ५०.०० |
| २४. माडर्न असामीज लिटरेचर | ६.०० |
| २५. न्याय तात्पर्य दीपिका | २६.०० |
| २६. प्रतिमोक्खसुत्त आफ महासंधिकाज | ५.०० |
| २७. संस्कृत डाकुमेन्ट्स इन नेशनल आर्किव्स आफ इण्डिया | १५.०० |
| २८. म. म. उमेश मिश्र स्मृति ग्रन्थ | ११५.०० |
| २९. वैशेषिक सूत्रवृत्तिः | अनिर्धारित |
| ३०. वार्णी विलसितम् | १०.०० |
| ३१. विरुदावली-शाहजहां | अनिर्धारित |
| ३२. पद्य रचना | १५.०० |
| ३३. कापिशायनी | — |
| ३४. झांसीश्वरी चरितम् | — |
| ३५. दूर्मिलाशतकम् | — |
| ३६. अनेकान्तवाद का एक अध्ययन | — |
| ३७. द्राह्यायण श्रौतसूत्रम् | — |
| ३८. सिद्धान्त लक्षणम् | — |

105295

## श्री रणवीर केन्द्रीय संस्कृत विद्यापीठ, जम्मू

| | |
|---|---|
| १. दशपदार्थी | १३.५० |
| २. ग्रहलाघवम् भाग I | १२.५० |
| ३. ,, भाग II | २०.८० |
| ४. ज्यौतिष रत्नमाला | ३६.२५ |
| ५. काश्मीरेतिहासः | १५.०० |
| ६. काश्मीर शैव दर्शनम् | ३०.०० |
| ७. न्यायसार विचारः | २१.०० |
| ८. रघुनाथ गुणोदय काव्यम् | २७.५० |
| ९. ऋचा रहस्य | २०.०० |
| १०. विक्रमांकदेवचरितस्य साहित्यिकं सर्वेक्षणम् | ३०.०० |



# केन्द्रीय संस्कृत विद्यापीठ तिरुपति

| | |
|---|---|
| १. अमरकोश संग्रहः | ३६.०० |
| २. आर्षेय ब्राह्मण कौथुम शाखा | १८.५० |
| ३. ,, ,, जैमिनीय शाखा उपनिषद ब्राह्मण सहित | २४.५० |
| ४. आर्षेय दीप-भट्टभास्कर कृत | १३.५० |
| ५. भारतीयम् वृतम् | १९.०० |
| ६. देवताध्याय (संहितोपनिषद् तथा वंश ब्राह्मण सहित) | १२.०० |
| ७. एजुकेशनल सायकोलोजी | १२.०० |
| ८. गदाधरी पंचलक्षणी | २५.०० |
| ९. ज्ञापक संग्रहः | १७.०० |
| १०. नारदीय संहिता | २४.०० |
| ११. न्याय कल्पलतिका खंड I | १७.०० |
| १२. ,, ,, खंड II | ५८.०० |
| १३. न्याय कुसुमांजलिः | ४२.०० |
| १४. न्याय परिशिष्ट | २९.०० |
| १५. पंचविध सूत्र तथा मात्रा लक्षण | ७.०० |
| १६. प्रतिहार सूत्र | २५.०० |
| १७. षड्विंश ब्राह्मण | २०.०० |
| १८. साम विधान ब्राह्मण | ४०.०० |
| १९. श्रीप्रश्न संहिता | ३६.०० |
| २०. तत्वचिन्तामणि खंड I | ३७.०० |
| २१. वेदकालीन जनतन्त्र स्थानानि | १३.०० |
| २२. विमर्शः | १२.०० |
| २३. विष्वक्सेन संहिता | २९.०० |
| २४. विश्वामित्र संहिता | २२.०० |
| २५. सिद्धान्तशिरोमणिः (आंग्लम्) | ५२.०० |
| २६. मलयमारुतम् भागः I, II | ५.०० |